पत्थारोसण-तरलिय-करङ्गुली-मलिय-तम्विर-णडाले ।
पडिसिद्ध-तइअ-णयणुग्गमंव णमिमो हर-किरायं ॥ ३५ ॥
सो जयइ झत्ति-कवलिय-विसस्स कण्ठम्मि जस्स णिव्वडिया।
खण-दिण्णुव्वत्त-कयन्त-पास-णिहसोवमा रेहा ॥ ३६ ॥
तं पणमह जो सीमाउ कहवि लहसिय-हिंयं समुव्वहइ ।
अज्जवि कुसुमीकय-केसवच्छि-वत्तंव तइ अच्छिं ॥ ३७ ॥

॥ ३५ ॥ पार्थं प्रति यो रोषस्तेन तरलिता याः कराङ्गुलयस्ता-
भिर्मलितस्ताम्रं ललाटं यस्य तं प्रतिषिद्धतृतीयनयनोद्गमनमिव नमामो
३ हरकिरातम् ॥ अङ्गुल्या ललाटं विमर्दता तृतीयनेत्रोद्गम इव वारितः
अर्जुनो भक्तो मां शंकरत्वेन मा ज्ञासीद्दाहो[1] मास्य तीव्रतमतृतीय-
नेत्रान्मा भूदिति धिया ॥

॥ ३६ ॥ स जयति झटिति कवलितविषस्य कण्ठे यस्य निर्वृ-
त्ताभिव्यक्ता क्षणदत्तोद्वृत्तकृतान्तपाशनिघर्षोपमा रेखा ॥ दत्तोद्वृत्तो
१ वेष्टितोद्वेष्टितः ॥

॥ ३७ ॥ तं प्रणमत यः सीमास्थमपि हसितं भ्रष्टं ततः
स्थितं समुद्वहति अद्यापि कुसुमीकृतकेशवाक्षिपत्रमिव तृतीयाक्षि
१ तृतीयलोचनम् ॥ केशवं[2] हरमाराधयति भक्तिजिज्ञासया हरेण
तृतीयनेत्रं ललाटान्मच्यावितम् । ततः केशवेन तृतीयनेत्रशून्यं[3] ललाटं
दृष्ट्वा निजम् अक्षि पूजार्थं पत्रव्याजेनारोपितमिति प्रसिद्धिः । कुसु-
६ मैरिव हि पत्रैरपि पूजा प्रसिद्धा ॥

---

[1] MH. [illegible] [2] MH. [illegible] [3] MH. [illegible] [4] MH. [illegible]

उवरि-ट्ठिय-चन्दालोय-पुञ्जिया जयइ कण्ठ-मूलम्मि ।
सीस-च्छायव्व विसप्पहामई थाणुणो रेहा ॥ ३८ ॥
देहद्धद्ध-परिट्ठिय-गोरि-हराराहणेक्क-हिययंव ।
खण्डत्तणेण पणमह परिट्ठियं तिणयण-मियङ्कं ॥ ३९ ॥
तं णमह जस्स मुह-घडिय-ससि-अला-सुत्तिणा चिरं पीआ ।
सीसम्मि सयण्हेणव सुर-सरि-धारा कवालेण ॥ ४० ॥
घोलिर-कडार-तारं णडाल-णयणं पिणाइणो णमह ।
अज्जवि खयाहुई-कय-जलन्त-वम्भण्ड पिण्डंव ॥ ४१ ॥

॥ ३८ ॥ उपरिस्थितचन्द्रालोकपुञ्जिता जयति कण्ठमूले शिरश्छायेव विषप्रभामयी स्थाणो रेखा ॥

॥ ३९ ॥ देहार्धार्धपरिष्ठितगौरीहराराधनैकहृदयमिव खण्डत्वेन प्रणमत परिष्ठित त्रिनयनमृगाङ्कम् ॥ हरशिर स्थितश्चन्द्र कलामा-
त्रत्वात् स्वभावेन खण्ड । तत्र कवेरुत्प्रेक्षा । देहार्धार्धरूपेण स्थितयो
३ देवयोराराधनायेव चन्द्रेण तदनुकारात् खण्डत्वमाश्रित तथाविध चन्द्र प्रणमत ॥

॥ ४० ॥ त नमत यस्य मुखघटितशशिशकलशुक्त्या चिर पीता शिरसि सतृष्णेनेव सुरसरिद्धारा कपालेन ॥ शिरसि भगवतो दिवो निपतिता गङ्गा मूर्धानं गतेति प्रथितम् । तत्रोत्प्रेक्षा । हरशिर
३ स्थल्कारत्वेन व्यवस्थित यत्कपाल तेन कर्तृभूतेन चासौ धारामात्रवत्पीता शशिकलेव शुक्तिस्तया करणभूतयेव । अतो यदीयकपालमात्रस्येदृश माहात्म्य त प्रणमतेत्यर्थ ॥

६ ॥ ४१ ॥ [1]घूर्णनशीलकपिलतार ललाटनयनं पिनाकिनो नमत ।

---

[1] MH घूर्ण°

तं णमह कुलं पिव जस्स सुलह-संभावणं परिहरन्तो ।
अज्जवि वाणमणङ्गो णो मुयइ भआ कुमारम्मि ॥ ४२ ॥
सा जयइ णेउरिल्लेण जीए चलणेण ताडिय-क्खन्धो ।
उब्भिण्ण-रुहिर-कुसुमो जाओ महिसासुरासोओ ॥ ४३ ॥
पढम-हरालिङ्गण-लज्जियाएँ अज्जाएँ वो सुहं देन्तु ।
कण्ठ-प्पहावलम्बण-धोअ-त्थामाइँ अच्छीइं ॥ ४४ ॥

कचित्तु जयतीति पाठः । अद्यापि क्षयाहुतीकृतज्वलद्ब्रह्माण्डपिण्डमिव ॥
३महाप्रलयकाले किल हरललाटलोचनोत्थेन वह्निना त्रैलोक्यं दग्धमिति ब्रह्माण्डसमूहो ब्रह्माण्डमेव वा पिण्डप्रख्यं ललाटनयनाग्नेराहुतिर्जाता । अतोद्यापि जाज्वल्यमानत्वाज्ज्वलद्ब्रह्माण्डपिण्डमिव स्थितामिति क-
६ल्प्यते ॥

॥ ४२ ॥ तं नमत कुलं इव यस्य सुलभसंभावनां परिहरन् अद्यापि वाणमनङ्गो न मुञ्चति भयात् कुमारे ॥ हरसुतः कुमारः किल ब्रह्मचारी ।
३तत्र कवेरुत्प्रेक्षा । व्यापारितवाणोहं हरेण दग्धस्तनोन्योपि तत्कुलप्रसूतो मद्दहनक्षमस्तेन कुमारोपि मां मा धाक्षीदिति भयादिव कुमारे कामेन वाणा न व्यापारिता इत्यर्थः ॥

॥ ४३ ॥ सा जयति [ नूपुरवता ] यस्याश्चरणेन ताडितस्कन्धः उद्भिन्नरुधिरकुसुमो जातो महिषासुराशोकः ॥ इल्लशब्दः प्राकृते
३मत्वर्थीयः ॥

॥ ४४ ॥ प्रथमहरालिङ्गनलज्जिताया आर्याया वः सुखं ददताम् कण्ठे या प्रभा कालकूटसंबन्धिनी तदवलम्बनेन स्तोकं स्थाम बलं
३ययोस्ते अक्षिणी ॥

---

भमियं पलअ-पओसे विविह-कवालम्मि णमह कालीए ।
मिलिआसेस-णिसा-लक्ख-विसम-बहु-चन्द-खण्डेव्व ॥ ४५ ॥
डिम्बं वो चामुण्डाएँ पिहु-सिरा-दण्ड-मण्डणं हरउ ।
मडहोअर-णपहुप्पन्त-वलय-भरियंपिव सरीरं ॥४६॥
सा जयइ चउ-मुहासण-तामरस-दलोयरेसु दुल्ललिया ।
कइ-जीहा-णिवहेसु अ जा णिमिय-पयं परिब्भमइ ॥४७॥

॥ ४५ ॥ भ्रान्तं भ्रमणं प्रलय एव रात्रिरिव तस्य प्रदोष उपक्रमस्तस्मिन् विविधकपाले नमत काल्याः कालरात्रेः । प्रलये हि कालरात्रिः प्रभवतीति वार्ता । अत उत्प्रेक्ष्यते । मिलिताशेषनिशालक्षविषमबहुचन्द्रखण्ड [1]इव ॥ स्थूलसूक्ष्मादिभेदभिन्नानि काल्या अलंकरणभूतानि यानि कपालानि तानि चन्द्रखण्डानीव प्रतिपदादिसंबन्धीनि सर्गे क्रमभावीन्यपि प्रलये संघटितानि ॥

॥ ४६ ॥ भयं वश्चामुण्डायाः संबन्धि पृथुशिरादण्डमण्डनं हरतु अल्पोदरापर्याप्तान्त्रवलयभृतमिव शरीरम् ॥ डिम्बं भयम् । शिरा नाड्यः । मडहं अल्पम् । णपहुप्पन्तम् अपर्याप्तम् अवर्तमानम् अमात् । क्वचित्तु वलयवलियंपिवेति पाठः । अन्त्रवलयवलितमिव शरीरामिति तत्रार्थः । तत्रोदरं देव्या वलयभाण्डत्वे प्रकल्पितम् ॥

॥ ४७ ॥ सा जयति चतुर्मुखासनतामरसदलोदरेषु दुर्ललिता कविजिह्वानिवहेषु च या निहितपदं कृत्वा परिभ्रमति ॥ निवहेसु वेति क्वचित्पाठः । तत्र इवशब्दो भिन्नक्रमः । दुर्ललिता हेवाकिनी [sic] । अत्र गम्यमाना सरस्वती पूर्वार्धे हंसीत्वे कल्पिता ब्रह्मवदनविनिर्गतत्वेन ब्रह्मासनीभूतकमलदलान्तरालर्लीलालम्पटत्वात् । कविजिह्वानिवहेषु चेति इतरहंस्याः सकाशाद्व्यतिरेक उक्तः ॥

[1]MH. °त्थुविसमं बहुचन्द्रखण्डे एव.

तं णमह जस्स दीसइ बिम्बं विच्छाय-लञ्छण-च्छायं ।
गङ्गा-णिग्गम-परिगलिय-मज्झ-लावण्ण-तुच्छं व ॥ ४८ ॥
वेरुलिय-णिहा तं णमह जस्स ते सन्दणं परिवहन्ति ।
ताइयस-पढम-पेल्लिय-तम-मइलङ्गा-इव तुरंगा ॥ ४९ ॥
जयइ जय-रक्खणे पुञ्जियं व जं फुरइ पयणुअं रविणो ।
पलयम्मि जं च पविरल्लियं व वहलाइ गो-जालं ॥ ५० ॥
तं णमह कोल-तुलणे सयल-फणा मणि-पसत्त-पडिबिम्बं ।
उव्वहइ व जो बहु-सिर-विहत्त-लहुयं धरा-वलयं ॥ ५१ ॥

॥ ४८ ॥ तं चन्द्रं सामर्थ्यगम्यं नमत यस्य दृश्यते बिम्बं [विच्छा-
यलाञ्छनच्छायम् । ] विच्छायत्वे निमित्तमुत्प्रेक्षते । गगननदीपरिनिर्ग-
३ मपरिगलितमध्यलावण्यतया तुच्छमिव ॥

॥ ४९ ॥ वैडूर्यनिभा हरिदश्वास्तं नमत यस्य ते स्यन्दनं परिव-
हन्ति । प्रतिदिवसप्रथमप्रेरिततमोमलिनाङ्गा इव [ तुरंगाः ॥ ] प्रथम-
३ मरुणेन प्रेरितं यत्तमस्तेनैव मलिनाङ्गा इत्युत्प्रेक्षा ॥

॥ ५० ॥ जयति जगद्रक्षणे पुञ्जितमिव यत्स्फुरति प्रतनुकं रवेः
प्रलये यच्च प्रविरेल्लितमिव प्रसारितमिव बहलायते गोजालं रश्मि-
१ समूहः ॥

॥ ५१ ॥ [ तं नमत ] कोलः क्रोडः सूकराकारस्तेन तोलने
क्षितिवलयस्य क्रियमाणे सति सकलफणामणिप्रसक्तप्रतिबिम्बमुद्वहतीव
३ [यो] बहुशिरोविभक्तलघुकं धरावलयम् ॥ नरसिंहवदहिवराहशरीरं द्वय-
लनागमे कविना कल्पितम् । शेषमनादृत्य वा जलधौ मग्ने भूवलये
शेषसहायत्वेन सूकरशरीरं भगवता निर्मितमनुसर्तव्यम् ॥

---

1 MH. ककुरलिमट°.

पणमह कालिन्दी-सलिल-दण्ड-घडियंव सुर-सरि-प्पवहं ।
दन्त-क्खम्भं वीसन्त-वियड-हत्थं गय-मुहस्स ॥ ५२ ॥
तं णमह गय-मुहं वियड-दन्त-कर-दण्ड-कलण-लीलासु ।
मिलिय-हिमवन्त-विञ्झेव्व कुणइ जो मेरु-प्पभारे ॥ ५३ ॥
गण-वइणो सइ-संगय-गोरी-हर-पेम्म-राय-विलियस्स ।
दन्तो वाम-मुहद्धन्त-पुञ्जिओ जयइ हासोव्व ॥ ५४ ॥

॥ ५२ ॥ [ [1]प्रणमत कालिन्दीसलिलदण्डघटितमिव सुरसरित्प्रवाहं दन्तस्तम्भं विश्रान्तविकटहस्तं गजमुखस्य ॥ ]

॥ ५३ ॥ तं नमत गजमुखं गणपतिं विकटेन दन्तेन करदण्डस्य यानि कलनानि धारणानि ता एव लीलास्तासु विषयभूतासु मिलितहिमवद्विन्ध्यानिव करोति यो मेरुप्राग्भारान्विभवान् अवयवादीन् [sic] ॥ दन्तशौक्ल्यमहत्त्वाभ्यां हिमवानिव करकृष्णत्वाद्विन्ध्य इव । गणपतिशरीरं च सिन्दूररागान्महत्त्वातिशयाच्च मेरुप्राग्भाराननुकरोति । तेनायमर्थः । यो मेरुप्राग्भाराननुकरोति विकटदन्तकरदण्डकलनलीलासु च यो मिलितहिमवद्विन्ध्य इव दृश्यते तं गजमुखं नमत ॥ क्वचित्पाठो मेरुपब्भारो इति । तत्रायमन्वयः । यो मेरुप्राग्भारः स विकटदन्तकरदण्डकलनलीलासु मिलितहिमवद्विन्ध्य इव करोति कार्याणि तं नमतेति ॥

॥ ५४ ॥ गणपतेः सदासंगतगौरीहरप्रेमरागव्रीडितस्य दन्तो वलितमुखार्धान्तपुञ्जितो जयति हास इव ॥ पुञ्जीकृतो हास इवेत्यन्वयः । अर्धनारीश्वरत्वेन सदा सगतत्वे कुमारगणपती [2]वाग्घूनं चक्रतुः । यः क्षितिं क्षणेन प्रदक्षिणीकरोति स जयति यस्य च

1 MH. has no commentary on this verse, which is given in J. P. Dc. K. 2 MH. वाग्घूनं.

णमह दणुइन्द-णिहणे माया-महु-मूयणं उवेन्तीए ।
माणिय-तरलत्तण-विब्भमाइँ भमियाइँ लच्छीए ॥ ५५ ॥
हत्थालम्बिय-पङ्कय-मियङ्कमुयहीउ निग्गयं जयइ ।
आसङ्किय-णिय-आणण-सोहग्ग-गुणाएँव सिरीए ॥ ५६ ॥
कोसुम-धणु वाण-ग्गह-सोरह-लग्ग-भमरेव्व कामस्स ।
ओप्पुंसिय-रइ-पणयंसु-कज्जलङ्के करे णमह ॥ ५७ ॥

पराजयस्तेन यथासंभवं मयूरवाहनस्यान्यतरदन्तस्य वा परित्यागः कर्तव्यः । तत्र धीमता कुमारेण मातुः प्रदक्षिणां कृत्वा जितो गण-
३ पतिः । ततस्तेनान्यतरदशनपरित्यागो विहितः । वाम[मुह]दन्तपुञ्जिओ
इति पाठे वाम[मुखा]र्धान्तपुञ्जित इत्यर्थः ॥

॥ ५५ ॥ नमत दानवेन्द्रनिधने मायामधुसूदनमुपयान्त्या मानित-तरलत्वविभ्रमाणि भ्रान्तानि लक्ष्म्याः ॥ लक्ष्मीर्मायानरसिंहस्य शोभते ।
३ अस्याश्च त्रैलोक्यकण्टकदैत्यनिपातनोचितचेष्टा[1] विश्रान्ताश्च तेषां विभ्रमा
विलासास्ते नैर्भ्रान्तैः संमानिताः सत्कृता इत्यप्रयासोक्तिरियं रिपुनिपातने ॥

॥ ५६ ॥ हस्तावलम्बितपङ्कजमृगाङ्कम् उदधेर्निर्गतं[2] जयति संभावितनिजकाननसौभाग्यगुणाया इव श्रियाः ॥ एकत्र करे पद्मम् अपरत्र
३ शशाङ्कं निधाय लक्ष्मीर्जलधिविनिर्गतेति कविना कल्पितम् । तत्रोत्प्रेक्ष्यते । प्रसिद्धसौभाग्याभ्यामाभ्यामपि[3] चन्द्रपद्माभ्यां मन्मुखं सुन्दरतमं
दृश्यतामिति दर्शनार्थमिव ताभ्यां सह श्रीर्याता ॥

॥ ५७ ॥ कौसुमधनुर्बाणग्रहणसौरभलग्नभ्रमराविव कामस्य उत्पुंसितरतिप्रणयाश्रुकज्जलेनाङ्कितौ करौ नमत ॥

1 MH. °चित° न° 2 MH. °र्गितं° 3 MH भाग्याभ्यामपि.

देउ सुहं वो पसु-वइ-सिराहि गोरी-विसूरियव्वेहिं ।
सोवालम्भव्व हिमालअङ्क-परिघोलिरी गङ्गा ॥ ५८ ॥
सा जयइ हर सिरत्थम्मि जीएं सलिलम्मि घोलिर-कवालो ।
अज्जवि पियामहत्तणमणहं चउराणणो वहइ ॥ ५९ ॥
हरि-चलण-णह-प्पहाए विच्छोलियंव पढमयं ।
हर-सासिणा पायएहिं संवलिययंव बीययं ॥ ६० ॥
गहिय-हिम-च्छाययंव तुहिणाद्दि-समावडणए ।
कारण-परिसुद्दयंव गङ्गाएं णमह सलिलयं ॥ ६१ ॥

॥ ५८ ॥ ददातु सुखं वः पशुपतिशिरसः गोरीविसूरियव्वेहिं गौर्याः संबन्धिभिः [1]खेदकरैर्व्यवहारैः सोपालम्भेव हिमालयोत्सङ्ग-परिघूर्णनशीला गङ्गा ॥ हरजटाभ्राद्धिमवत उत्सङ्गे गङ्गा पतिता घूर्णमाना प्रतीता । सा सपत्नीकृतापराधोद्घाटनमिव पितरि चकारेति कविकल्पितम् ॥

॥ ५९ ॥ सा जयति हरशिरःस्थे यस्याः संबन्धिनि सलिले घूर्णनशीलकपालत्वादद्यापि पितामहत्वमनघं चतुराननो वहति ॥ हरेण ब्रह्मणः पञ्चम शिरश्छित्त्वा स्वशिरोगङ्गाम्भसि प्रक्षिप्तमिति पौराणिकाः । पितामहप्रभृतीनां च कपालादिकमस्थि गङ्गायां क्षिप्तं घूर्णमानमास्ते । तेन गङ्गाजलघूर्णमानकपालत्वाच्चतुराननस्याद्याप्यनघं पितामहत्वम् ॥

॥ ६०, ६१ ॥ हरिचरणनखप्रभाभिः प्रक्षालितमिव प्रथमं हरशशिनः पादैः संवलितमिव द्वितीयकम् । गृहीतहिमच्छायत्वमिव तुहिनाद्रिसमापतने कारणपरिशुद्धमिव नमत गङ्गायाः

[1] MH. गेदकृते°

[ अथ कविप्रशंसा ]

इह ते जयन्ति कइणो जयमिणमो जाण सयल-परिणामं ।
वायासु ठियं दीसइ अमोय घणं व तुच्छं व ॥ ६२ ॥
नियआएच्चिय वायाएँ अत्तणो गउरवं निवेसन्ता ।
जे एन्ति पसंसंचिय जयन्ति इह ते महा-कइणो ॥ ६३ ॥

सलिलम् ॥ गङ्गाजलं हि स्वर्गात्पतत् त्रैलोक्याक्रमणप्रवृत्तं हरिचरणनखमयूखैः प्रथमं संसृष्टं ततो हरशिरःशशिचरणैस्ततो हिममहीधरेण । अत एतैः कारणैरवदातत्वस्य हेतुभिरिव संबन्धान्निर्मलं गङ्गाजलं नमतेत्यर्थः ॥

॥ ६२ ॥ काव्यप्रतिष्ठार्थं कविप्रशंसामाह । इहेति । इह ते जयन्ति कवयो येषां सकलपरिणामं जगद् वाचि स्थितं दृश्यते आमोदघनं वा तुच्छं वा ॥ ब्रह्मपरिणामो वा ब्रह्मविवर्तो वा सर्वं जगदित्यौपनिषदाः । तत्र परिणामपक्षे आमोदघनत्वं सत्यत्वम् । वैशेषिकादिपक्षेप्वपि सत्यत्वम् । विवर्तपक्षे तु भेदस्य तुच्छत्वं शून्यवादिवत् । तत्रोभयत्रापि कविरेव प्रजापतिना निर्मितानपि भावान्निर्मिमीते । यथोक्तम् । अपारे काव्यसंसार इत्यादि यथास्थानं विवेच्यन्त इत्यादि च ॥

॥ ६३ ॥ निजयैव वाचात्मनो गौरवं निवेशयन्तो ये यन्ति प्राप्नुवन्ति प्रशंसामेव जयन्ति [इह] ते महाकवयः ॥

दोग्गच्चम्मिवि सोक्खाइँ ताण विहवेवि होन्ति दुक्खाइं ।
कव्व-परमत्थ-रसियाइँ जाण जायन्ति हिययाइं ॥ ६४ ॥
उम्मिल्लइ लायण्णं पयय-च्छायाएँ सक्कय-वयाणं ।
सक्कय-सक्कारुक्करिसणेण पययस्सावि पहावो ॥ ६५ ॥
ठियमट्ठियंव दीसइ अट्ठियंपि परिट्ठियंव पडिहाइ ।
जह-संठियं च दीसइ सुकईण इमाओँ पयईओ ॥ ६६ ॥

॥ ६४ ॥ दौर्गत्येपि सुखानि तेषा विभवेपि लक्ष्म्यामपि भवन्ति दुःखानि काव्यपरमार्थरसिकानि जायन्ते येषां हृदयानि ॥

॥ ६५ ॥ सस्कृतप्राकृतभेदभिन्नाना पदानां परस्परोपकार दर्शयति । [ उम्मिल्लइ इति ] । उन्मील्यते लावण्यं प्राकृतच्छायया संस्कृत-
२पदानाम् । संस्कृतसंस्कारोत्कर्पणेन प्राकृतस्यापि प्रभावो भवति ॥ दंष्ट्राग्रद्धर्या प्राग्यो द्राक्क्ष्मामन्यक्त्व[1]स्थामुच्चिक्षेप । देवश्रुग्भिद्दारिवक्त्तुल्यः सोव्याद्वोजः[2] सर्पात्केतु: इत्यादि संस्कृतं प्राकृतेन विप्रियमाणं[3] दाढग्गरि-
६द्धाए इत्यादिरूपेण सुश्रवं भवति । प्राकृतस्य तु संस्कृतसंस्कारोत्कर्षणेनात्मीय एव प्रभावो व्यज्यते । सर्वस्य प्राकृतस्य स्वभावसुन्दरत्वादिति सारार्थः ॥

॥६६॥ स्थितमस्थितमिव दृश्यते अस्थितमपि परिस्थितं प्रतिभाति यथासंस्थितं च दृश्यते । कवीनामेताः पदव्यः सामर्थ्यानि ॥ प्रजापति
३विलक्षणानीत्यर्थः ॥

---

[1]MH. °न्वत्तस्था.° [2]MH. °द्रोद्रम for द्रोज. म° [3]MH. विभियमाण.

विणय-गुणो दण्डाडम्बरो य मण्डन्ति जह णरिन्द-सिरिं ।
तह टङ्कारो महुरत्तणं च वायं पसाहेन्ति ॥ ६७ ॥
सोहेइ सुहावेइ य उवहुज्जन्तो लवोवि लच्छीए ।
देवी सरस्सई उण असमग्गा किंपि विणडेइ ॥ ६८ ॥ —
महुमह-विजय-पउत्ता वाया कह णाम मउलउ इमम्मि ।
पढम-कुसुमाहि तालिणं पच्छा-कुसुमं वण-लयाण ॥ ६९ ॥

॥ ६७ ॥ विनयगुणः[1] शास्त्रार्थानुसारेण प्रजापालनं दण्डाडम्बरश्च करितुरगादिबलसंपच्च मण्डयतो[2] यथा नरेन्द्रश्रियम् तथा टङ्कारः ओजोलक्षणो माधुर्यं च प्रसादादिरूपं वाचं प्रसाधयतः ॥

॥ ६८ ॥ शोभयति सुखयति चोपभुज्यमानो लवोपि लक्ष्म्याः । देवी सरस्वती पुनरसमग्रा किमपि विडम्बयति ॥ कामप्यनुपास्त्येयां विडम्बनां मनागपि विकलां वा जनयतीत्यर्थः ॥

॥ ६९ ॥ मधुमथविजयाख्ये मत्काव्ये पर्याप्ता वाक् कथं नाम मुकुलीभवतु कलिकारूपत्वं सौदृग्यं भजताम् इमम्मि अस्मिन्गौडवधाख्ये काव्ये । इति ममात्र यत्नशेषः । अत्रार्थान्तरन्यासमाह । यतः प्रथमकुसुमात् तलिनं सूक्ष्मं पश्चात्कुसुमं वनलतानां भवति ॥ यथा किल वनलतानां रसभरेण विस्तीर्णं विकसितं विस्तारं प्राप्तं कुसुमं मन्दामोदं च जायते रसमान्द्यात् तद्वत्परिपक्वमतेः कवेर्हृदयवेगोत्पला[3] वागभ्यस्यतो भवति । यथोक्तम् । अल्पेनाल्पेन शब्देन यत्नेन महतो नराः । अर्थापान्साधयन्तीह सूत्रकारा विशेषत इति ॥

[1] MII. °गुणा  [2] MII. °ति.  [3] MII. °हृदयवेगोत्पला.

लग्गिहिइ ण वा सुयणे वयणिज्जं दुज्जणेहिँ भण्णन्तं ।
ताणं पुण तं सुयणाववाय-दोसेण संघडइ ॥ ७० ॥
पर-गुण-परिहार-परंपराएँ तह ते गुणण्णुया जाया ।
जाया तेहिंचिय जह गुणेहिँ गुणिणो परं पिसुणा ॥ ७१ ॥
जं निम्मलावि खिज्जन्ति दन्त विमलेहिँ सज्जण-गुणेहिं ।
तं सरिसं सास-यर-कारणाएँ कारि-दन्त-वियणाए ॥ ७२ ॥

[ ॥ ७० ॥ लगिप्यति न वा सुजने वचनीयं दुर्जनैर्भण्यमानम् । तेषां पुनस्तत् सुजनापवाददोषेण संघटते ॥ ][1]

॥ ७१ ॥ परगुणपरिहारपरंपरया तथा तेन केनाप्युत्कृष्टेन प्रकारेण [ते] गुणज्ञा जाता जातास्तैरेव गुणैर्यथा गुणिनो भूरिगुणाश्च पिशुनाः ॥ गुणसंसर्ग एवं नामोत्कृष्टो येन पिशुनानामप्युत्कर्षं करोति । तेपि हि परगुणासहनलम्पटाः परकीयगुणपरिजिहीर्षया प्रथमं तावत्परगुणस्वरूपमालोचयन्ति । अनालोचितानां परिहर्तुमशक्यत्वात् । अनवरतं च परगुणानालोचयतामभ्यासातिशयाद्गुणज्ञानातिशयो भवति ॥ अथवायं तात्पर्यार्थः । गुणिन एवमुच्यन्ते न तावत्परगुणासहनमार्यजनोचितम् । योपि तच्छीलत्वान्न प्रतिषिद्धं वर्जयितुं शक्तः स एवं प्रबोध्यते फलतः परगुणपरिहारो भविष्यति । यत्र सुजना अपि सातिशयगुणार्जने साभिनिवेशाः सन्तस्तथा गुणज्ञानातिशययुक्ताः संपद्यन्ते येन तदीयमेव ग्रन्थादिकं सन्तः सेवन्ते सामान्यगुणं शास्त्रान्तरमुपेक्ष्य ॥

॥ ७२ ॥ सुजनानामपि केषांचिद्यः परगुणोत्कर्षेण खेदः संसारित्वमाहात्म्येन तत्र कविरखेदाय निदर्शनमाह ॥ यन्निर्मला

[1]MH. is wanting in any chhâyâ on couplet 70 which is given by Do. K. J. P.

जाण असमेहिँ विहिया जायइ णिन्दा समा सलाहावि ।
णिन्दावि तेहिँ विहिया ण ताण मण्णे किलामेइ ॥ ७३ ॥
णन्दन्तु णियय-गुण-गारवम्मि अद्दिट्ठ-पर मुह च्छाया ।
गरुया स-सील-दोलायमाण पर-दिट्ठ-मुह-च्छाया ॥ ७४ ॥
वहुओ सामण्ण-मइत्तणेण ताणं परिग्गहे लोओ ।
कामं गया पसिद्धिं सामण्ण कई अउच्चेय ॥ ७५ ॥

३अपि खिद्यन्ते हन्त विमलैः सज्जनगुणैस्तत् सदृशं शशिकरकारणिकया
करिदन्तवेदनया ॥ यथा शशिकराः सर्वाह्लादकारिण उत्तमा अपि
दन्तिदन्तवेदनां कुर्वन्ति स्वाभाव्यात् तथा गुणिनामपि केषांचित्परगु-
६णासहनं संसारस्वाभाव्यादिति भावयद्भिः कविभिः काव्यकृतौ नाना-
दरो विधेयस्तद्गुणपरीक्षकैरपीत्यर्थः । चन्द्रस्येव हि तेषामेव स दोष इति
कृपाविषयत्वं तेषामिति यावत् । हन्तेति विस्मये खेदार्थो निपातः ॥

॥ ७३ ॥ दुर्जनैः कृता तु निन्दा श्लाघावदवधीरणैव तेषाम् तत्रायो-
ग्यत्वेन विपरीतफलत्वादित्याह ॥ येषां सुजनानामसमैर्दुर्जनैर्विहिता
३सती निन्दा श्लाघया समा जायते तैर्निन्दापि विहिता सती तान्साधून्
क्लमयतीत्यहं मन्ये ॥

॥ ७४ ॥ नन्दन्तु आनन्दयुक्ता भवन्तु निजकगुणगौरवे अदृष्टप-
रमुखच्छाया गुरवो गुणगरिमभाजः स्वशीलदोलायमानपरदृष्टमुख-
३च्छायाः ॥ दुर्जनानां परगुणोत्कर्षकृतं मुखप्रसादमपश्यन्तोऽपि स्वदोषप-
र्यालोचनकृतं दुर्जनवदनमालिन्यं पश्यन्तो निजगुणगणगरिमणि सानन्दा
भवन्तु दोषकृतां दुर्जनवदनम्लानिमवलोकयन्तः सन्त इत्यर्थः ॥

॥ ७५ ॥ बहुः सामान्यमतित्वेन तेषां सामान्यकवीनां परि-

---

१आ॥ निरिन.

हरइ अणूवि पर-गुणो गरुयम्मिवि णिय-गुणे न संतोसो ।
सीलस्स विवेअस्स य सारमिणं एत्तिअंचेअ ॥ ७६ ॥
इयरेवि फुरन्ति गुणा गुरूण पढमं कउत्तमासङ्गा ।
अग्गे सेलग्ग-गया इन्दु-मऊहा इव महीए ॥ ७७ ॥
णिव्वाडन्ताण सिवं सयलंचिय सिवयरं तहा ताण ।
निव्वडइ किंपि जह तेवि अप्पणा विम्हयमुवेन्ति ॥ ७८ ॥

ग्राँहीं लोकः । काम गता· प्रसिद्धिं सामान्यकवयः अत एव ॥ लोके
३ सामान्यगुणाना परीक्षकाः सामान्यगुणा बहवः सन्ति भूरिविशेषगुणानां तु तादृशा अल्पा इति कृत्वा सामान्यकविकाव्यानि बहुशः प्रसिद्धानि । इतराणि तुल्येष्वित्यर्थः ॥

॥७६॥ हरत्यावर्जयत्यणुरपि परगुणः गुरावपि निजगुणे असंतोषः[1] शीलस्य विवेकस्य च सारमेतदियदेव ॥

॥७७॥ इतरस्मिन्नपि[2] दुर्जनेपि स्फुरन्ति गुणा गुरूणां कविवराणां संबन्धिन· यतः प्रथमं कृतोत्तमासङ्गाः । दृष्टान्तमाह । अग्रे प्रथमं
३ शैलाग्रगता इन्दुमयूखा इव मह्यां पृथिव्याम् । सर्वोत्तमेषु प्रख्याता नेतरैरपि न्यक्कर्तुं शक्यन्ते प्रत्युत दुर्जना अपि बहुसाधुजनाश्रित मार्गमनुसर्तुमिच्छन्ति । यथोक्तम् । यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जन इति ॥

॥ ७८ ॥ निर्वर्तयमानानां शिवं सकलमेव शिवतरं[3] तथा तेन प्रकारेण तेषा निर्वर्तते किमपि लोकोत्तरं यथा तेप्यात्मना विस्मयमु-
३ पयान्ति ॥ सत्तमानामात्मार्थ एव काव्यारम्भः किमत्र परार्थोद्देशप्रवृत्तेनाभिधानेनेत्यर्थः ॥

[1]MH. निजगुणा असतोष [2]MH. इतरेपि [3]MH. शिव.

पासम्मि अहंकारी होहिइ कह वा गुणाण विरहक्खे ।
गव्वं न गुणिगय-मओ गुणत्थमिच्छन्ति गुण-कामा ॥७९॥
अहिलङ्घिऊण लोयं ठियाण एकत्तणेण गरुयाण ।
बीयाविक्खी अवलम्बिऊण कं मच्छरो फुरउ ॥ ८० ॥
निय-मइ-संदेहोच्चिय मइ-संदेहावलोयणे जाण ।
होन्ति वियार-ट्ठाणं ठिय-रूया ते ण लोयस्स ॥ ८१ ॥

॥ ७९ ॥ गव्वं नेति यो नञ् तस्य व्यवहितो यथायोग्यतासंबन्धः । पार्श्वे संनिधावपि गुणानां वर्तमानः । गुणयुक्तोपीत्यर्थः । अहंकारी नेति संबन्धः । युक्तशब्दस्य चाध्याहारः । कह वा कथमिव भविष्यति गुणानां विपरोक्षे अभावे । न कथंचिदपीत्यर्थः । यतो गर्वो नाम गुणिगतो मद उच्यते ततो गुणस्थमेव तं गुणकामा इच्छन्ति । तस्य गुणासंनिधाने दुर्जनेषु कथं संभवः । गुणिनो गर्वयोग्यस्य गर्वो न युक्तो लोकविरुद्धत्वात् कैव गणना दुर्जनानामित्यर्थः ॥

॥ ८० ॥ अभिलङ्घ्य लोकं स्थितानामेकत्वे गुरूणां द्वितीयापेक्षी कमवलम्ब्य स्फुरतु मत्सरः ॥ समबले मत्सरो युक्तः यस्त्वादिरयत्परब्रह्मवद्वा अद्वितीयः सर्वोत्तमः कविः कोपि तस्य किमपेक्षो मत्सर इत्यर्थः ॥

॥ ८१ ॥ निज [ मतिसंदेह एव ] मतिसंदेहावलोकने येषां भवन्ति विचारस्थानास्थितरूपास्ते न लोकस्य ॥ विमतिविषये निर्णेतृत्वेन परिगण्यमानानां येषां स्वमतावेव[1] संदेहः किमस्माकं निर्णेतृत्वयोग्यतास्ति उत नास्तीति ते लोकस्य निर्णेतृत्वपदे न स्थिताः । किं तर्हि । उपहास्या इत्यर्थः ॥

---

[1] MH. °मतावेव.

हरइ अणूवि पर-गुणो गरुयम्मित्ति णिय-गुणे न संतोसो ।
सीलस्स विवेअस्स य सारमिणं एत्तिअंचेअ ॥ ७६ ॥
इयरेवि फुरन्ति गुणा गुरूण पढमं कउत्तमासङ्गा ।
अग्गे सेलग्ग-गया इन्दु-मऊहा इव महीए ॥ ७७ ॥
णिव्वाडन्ताण सिवं सयलंचिय सिवयरं तहा ताण ।
निव्वडइ किंपि जह तेवि अप्पणा विम्हयमुवेन्ति ॥ ७८ ॥

आँही लोकः । कामं गताः प्रसिद्धिं सामान्यकवयः अत एव ॥ लोके
३मामान्यगुणाना परीक्षकाः सामान्यगुणा बहवः सन्ति भूरिविशेषगुणानां तु तादृशा अल्पा इति कृत्वा सामान्यकविकाव्यानि बहुशः प्रसिद्धानि । इतराणि तुल्येष्वित्यर्थः ॥

॥७६॥ हरत्यावर्जयत्यणुरपि परगुणः गुरावपि निजगुणे अँसंतोषः[1] शीलस्य विवेकस्य च सारमेतदियदेव ॥

॥७७॥ इतरस्मिन्नपि[2] दुर्जनेपि स्फुरन्ति गुणा गुरूणां कविवराणां संबन्धिन· यतः प्रथमं कृतोत्तमासङ्गाः । दृष्टान्तमाह । अग्रे प्रथमं
३शैलाग्रगता इन्दुमयूखा इव मह्यां पृथिव्याम् । सर्वोत्तमेषु प्रख्याता नेतरैरपि न्यक्कर्तुं शक्यन्ते प्रत्युत दुर्जना अपि बहुसाधुजनाश्रितं मार्गमनुसर्तुमिच्छन्ति । यथोक्तम् । यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जन इति ॥

॥ ७८ ॥ निर्वर्तयमानानां शिवं सकलमेव शिवतरं[3] तथा तेन प्रकारेण तेषां निर्वर्तते किमपि लोकोत्तरं यथा तेप्यात्मना विस्मयमु-
३पयान्ति ॥ सत्तमानामात्मार्थ एव काव्यारम्भः किमत्र परार्थोद्देशप्रवृत्तेनाभिधानेनेत्यर्थः ॥

---

[1]MH. निजगुणा अर्सनोप.  [2]MH. इतरेपि.  [3]MH. शिव.

पासम्मि अहंकारी होहिइ कह वा गुणाण विवरक्खे ।
गव्वं न गुणिगय-मओ गुणत्थमिच्छन्ति गुण-कामा ॥७९॥
अहिलङ्घिऊण लोयं ठियाण एक्कत्तणेण गरुयाण ।
बीयावेक्खी अवलम्बिऊण कं मच्छरो फुरउ ॥ ८० ॥
नियमइ-संदेहोचिय मइ-संदेहावलोयणे जाण ।
होन्ति वियार-ट्ठाणं ठिय-रूया ते ण लोयस्स ॥ ८१ ॥

॥ ७९ ॥ गव्वं नेति यो नञ् तस्य व्यवहितो यथायोग्यतासंबन्धः । पार्श्वे संनिधावपि गुणानां वर्तमानः । गुणयुक्तोपीत्यर्थः । अहंकारी नेति संबन्धः । युक्तशब्दस्य चाध्याहारः । कह वा कथमिव भविष्यति गुणानां विपरोक्षे अभावे । न कथंचिदपीत्यर्थः । यतो गर्वो नाम गुणिगतो मद उच्यते ततो गुणस्यमेव तं गुणकामा इच्छन्ति । तस्य गुणासंनिधाने दुर्जनेषु कथं संभवः । गुणिनो गर्वोयस्य गर्वो न युक्तो लोकविरुद्धत्वात् कैव गणना दुर्जनानामित्यर्थः ॥

॥ ८० ॥ अभिलङ्घ्य लोकं स्थितानामेकत्वे गुरूणां द्वितीयापेक्षी कमवलम्ब्य स्फुरतु मत्सरः ॥ समबले मत्सरो युक्तः यस्त्वादित्यवरपरब्रह्मवद्वा अद्वितीयः सर्वोत्तमः कविः कोपि तस्य किमपेक्षो मत्सर इत्यर्थः ॥

॥ ८१ ॥ निज [ मतिसंदेह एव ] मतिसंदेहावलोकने येषां भवन्ति विचारस्थानास्थितरूपास्ते न लोकस्य ॥ विमतिविषये निर्णेतृत्वेन परिगण्यमानानां येषां स्वमतावेव[1] संदेहः किमस्माकं निर्णेतृत्वयोग्यतास्ति उत नास्तीति ते लोकस्य निर्णेतृत्वपदे न स्थिताः । किं तर्हि । स्तुत्याद्या इत्यर्थः ॥

---

1 MH. मतावेव.

को णिन्दइ नीययमे गरुययरे को पसंसिउं तरइ ।
२ सामण्णंच्चिय ठाणं थुईण परि-णिन्दियाणं च ॥ ८२ ॥
सोऊण मुणन्ति परं जे ण वियप्पन्ति अप्पणच्चेय ।
ते अणरहव्व गव्वस्स उत्तुणा कह न लज्जन्ति ॥ ८३ ॥
काल-गुणा पढम-कईहिँ भामियमपरि-ग्गहेसु मग्गेसु ।
इहरा मईहिँ हीरन्ति दुक्करं केवि काणंपि ॥ ८४ ॥

॥ ८२ ॥ को निन्दति नीचतमान् । पशुप्रायत्वात् । गुरुतमान्कः
प्रशंसितुं तरति शक्नोति । तद्गुणसंभारस्य परिच्छेत्तुमशक्यत्वात् । सा-
२मान्यमेव स्थानं स्तुतीनां परिनिन्दितानां च ॥ तेन मादृशान्गुरुतमान्को
निन्दितुं वा योग्य इत्यर्थः ॥

॥ ८३ ॥ श्रुत्वा जानन्ति परं ये न विकल्पयन्त्यात्मनैव ते अनर्हा
इव गर्वस्य गर्वेण कथं न लज्जन्ते ॥ उत्तुणो गर्वी । व्युत्पन्नतममति-
२निर्मितं काव्य श्रुत्वैव ये बुध्यन्ते न तु कथंचित्स्वयं गुणदोषान्वि-
कल्पयितुं क्षमास्ते दर्पकरणे अयोग्याः सन्तो दर्पं कुर्वन्तो न लज्जन्त
इति चित्रम् ॥

॥ ८४ ॥ कालगुणात्प्रथमकविभिर्भ्रान्तमपरिग्रहेषु मार्गेषु । इहरा
इदानीं मतिभिर्ह्रियन्ते दुष्करं केपि केषामपि ॥ कालगुणादिति व्यव-
२हितान्वयम् । सर्गादिकविभिरलब्धकाव्यमार्गत्वाद्भ्रान्तं व्यामोहोनुभूतः
कालदोषात् । इदानींतनैः कविभिः पुनर्दुष्करं प्रक्रम्यते (?) नैव भ्रम्यते
दृष्टपूर्वकविकल्पितमार्गत्वात् अथवा कृतवाग्द्वार इति नयेन । तथा हि
६त इदानींतनाः कवयः केपि केषामपि पूर्वकवीनां संबन्धिनीभिर्म-
तिभिर्ह्रियन्ते संचार्यन्ते ॥

कत्तो णाम नइट्टं सच्चं कइ-सेविएसु मग्गेसु ।
सीमन्ते उण मुक्कम्मि तम्मि सव्वं नवंचेअ ॥ ८५ ॥
अत्थालोयण-तरला इयर-कईणं भमन्ति बुद्धीओ ।
अत्थच्चेय निरारम्भमेन्ति हिययं कइन्दाण ॥ ८६ ॥
आ-संसारं कइ-पुंगवेहिँ तद्दियह-गहिय-सारोवि ।
अज्जवि अभिण्ण-मुद्दोव्व जयइ वाया-परिप्फन्दो ॥ ८७ ॥
किं अण्णमणण्ण-मणेहिँ ताव सु-कईहिँ सिक्खिया वाया ।
भायं णीसामण्णाण ताण मूयत्तणं जाव ॥ ८८ ॥

॥ ८५ ॥ इदानींतनविधानमनुवादत्वाचर्हि व्यर्थमित्याशङ्क्याह । कियन्नाम न दृष्टं कविसेवितेषु मार्गेष्विति सच्चं सत्यम् । किं तु सीमन्तेऽ
१परकाये मुक्ते प्रक्षिप्ते तस्मिन्सर्वं नवमेव भाति ॥ उण पुनःशब्दस्तु-शब्दस्यार्थे ॥

॥ ८६ ॥ अर्थालोकनतरला अपि सत्यः इतरकवीनां भ्राम्यन्ति भ्रान्तियुक्ता भवन्ति बुद्धयः । अर्था एव निरारम्भमप्यायान्ति हृदयं
१कवीन्द्राणाम् । प्रातिभातिशयजनितसंस्कारातिशयाकृष्टाः सन्तः ॥

॥ ८७ ॥ आसंसारं सर्गादारभ्य महाप्रलयं यावत् कविपुंगवैः प्रतिदिवसगृहीतसारोप्यद्यापि अभिन्नमुद्र इव अस्फोटितमुद्र इव जयति
१वाक्परिस्पन्दः ॥

॥ ८८ ॥ किमन्यदुच्यते । किं बहुनोक्तेनेत्यर्थः । एतावत्तु सारं ब्रूमः । अनन्यमनोभिः सुकविभिस्तावच्छिक्षिताभ्यस्ता वाग् जातं
१निःसामान्यानां तेषां मूकत्वं यावत् । अभ्युत्कटोत्कर्षयोगात्कृतका-व्यस्य श्रोतरि योग्ये असति मूक्यामिव महाकवीनां युक्तमित्यर्थः[1]॥

---

[1] MII. कृत्स्नपरत्वादित्थं., which is doubtless corrupt.

को व वियारेइ विसेस-वित्थरं ताण जं ठियं लोए ।
नामेच्चिय संकन्ता गरुयाण गुणा फुरन्तिव्व ॥ ८९ ॥
जाण स-रूवावगमेवि गव्विया किंपि होन्ति अण्णेवि ।
ते आयासाअ वहन्ति अत्तणो नवर माहप्पं ॥ ९० ॥
मोह-पडिबोह-कारित्तणेण तिमिरंव जं पयासोव्व ।
तं जयइ विरुद्धंपिव वियप्प-जालं कइन्दाण ॥ ९१ ॥
णवमत्थ-दंसणं संनिवेस-सिसिराओ बन्ध-रिद्धीओ ।
अविरलमिणमो आ-भुवण-बन्धमिह णवर पययम्मि ॥ ९२ ॥

॥ ८९ ॥ वाशब्दोऽसंभावनायाम् । को वा विचारयति विशेषविस्तरं तेषां यैः स्थितो लोके । नाम्न्येव संक्रान्ता गुरूणां गुणाः स्फुर-
३न्तीव ॥ महाकवीनां नाममात्रग्रहणे प्रत्यक्षायमाणा नाम्नीव संक्रान्ता गुणा द्रागित्येव निर्विवादं प्रथन्ते अतः कस्तान्विचारयतीत्यर्थः ॥ स्फुरन्तीव प्रत्यक्षा इव भान्तीत्यर्थः॥

॥ ९० ॥ येषां संबन्धिनि स्वरूपावगमेपि तदीयकाव्यस्वरूपमात्राकर्णनेपि गर्विता भवन्ति किमपि अवर्णनीयरूपेण ॥ अन्येपि ते आया-
३साय वहन्त्यात्मनः केवलं माहात्म्यम् । महाकविकाव्यं प्राप्य तद्विषयविचारयोग्यत्वाभिमानम् ॥

॥ ९१ ॥ मोहप्रतिबोधकारित्वेन तिमिरं च यत् प्रकाशश्च तज्जयति विरुद्धमिव विकल्पजालं कवीन्द्राणाम् ॥ मन्दमतीनां मोहकारितया
३तिमिरमिव प्रकाश इव च व्युत्पन्नानाम् । अत एव विरुद्धमिव न तु विरुद्धमेव विषयभेदात् ॥

॥ ९२ ॥ नवमर्थदर्शनं संनिवेशशिशिरा बन्धर्द्धयः अविरलमेतद् आभुवनबन्धमिह केवलं प्राकृते ॥ शिशिरा मधुराः । इणमो

सयलाओ इमं वाया विसन्ति एत्तो य णेन्ति वायाओ ।
एन्ति समुद्दंचिय णेन्ति सायराओच्चिय जलाइं ॥ ९३ ॥
हरिस विसेसो वियसावओ य मउलावओ य अच्छीण ।
इह वहि-हुत्तो अन्तो-मुहो य हिययस्स विप्फुरइ ॥ ९४ ॥
अणुयम्पा वा हासो व होइ अवहीरणव्व गरुयाण ।
इयरेसु अणाय-गुणन्तरेसु न उणो हियय-दुक्खं ॥ ९५ ॥
जे अत्तणो न अहिया सरिसा वा तेहिँ किं भणन्तेहिं ।
जह-तह पराओ इच्छन्ति तहवि गरुयावि वहु-माणं ॥ ९६ ॥

इति देशीपदम् एतादित्यस्यार्थे । आभुवनवन्धम् आसृष्टिकालम् । नवरं केवलम् ॥

॥ ९३ ॥ सकला एतत्प्राकृतं वाचो विशन्तीव । इतश्च[1] प्राकृता-
द्विनिर्गच्छन्ति वाचः आगच्छन्ति समुद्रमेव निर्यान्ति सागरादेव जलानि॥
३ प्राकृतेन हि संस्कृतापभ्रंशपैशाचिकभाषाः प्रसिद्धतमेन व्याख्यायन्ते ।
अथ वा प्रकृतिरेव प्राकृतं शब्दब्रह्म । तस्य विकारा विवर्ता वा संस्कृता-
दय इति मन्यते स्म कविः ॥

॥ ९४ ॥ हर्षविशेषो विकासको मुकुलीकारकश्चाक्ष्णोः इयं अनेन
प्रकारेण । हुत्तमिति देशीपदम् आभिमुख्ये वर्तते । बहिर्मुखः कृत्वा किं
३ च अमुतः प्राकृतान्मुखं च हृदयस्य विस्फुरति ॥

॥ ९५ ॥ अनुकम्पा वा हासो वा भवत्यवधीरणं वा गुरूणाम
इतरेष्वज्ञातगुणान्तरेषु न पुनर्हृदयदुःखम् ॥

॥ ९६ ॥ यद्यपि मया सदृशोन्योधिको वा नास्ति तथापि
पराभ्यर्थनं नैकान्ततोनर्थकमित्याह ॥ य आत्मनो नाभ्यधिकाः

---

[1]MII. एव न.

होन्तुव्व विगय-गव्वा माहप्प-समुत्तुणव्व वियरन्तु ।
जह-तह णिव्वडिय-गुणा हास-ट्टाणं ण लोयस्स ॥ ९७ ॥
भीयंव लज्जियंपिव थम्भियमिव किंपि होइ सुढियंव ।
. दूमियमिव अप्फुण्णंव पहरिसुच्चंव इह हिययं ॥ ९८ ॥

सदृशा वा तैः किं भणाइर्न किंचित् । यद्यपि वस्तुवृत्तमेवं तत्तथापि यथातथा परस्मादिच्छन्ति गुरवो बहुमानम् ॥ साधवः सर्वजना-
३नुरागमिच्छन्तीत्यर्थः ॥

॥ ९७ ॥ भवन्तु वा विगतगर्वा माहप्पसमुत्तुणव्व वियरन्तु माहात्म्याभिमानेन समुत्पन्नगर्वा वा विचरन्तु यथातथा निर्वृत्तगुणा
२हासस्थानं न लोकस्य ॥ सामान्यजनस्य तदीयस्वरूपानभिज्ञस्य हासे महापुरुषविषये कोधिकार इत्यर्थः ॥

॥ ९८ ॥ भीतमिव लज्जितमिव [ स्तम्भितमिव ] किमपि भवति सुँखितमिव । सुढियं वेति [1]पाठान्तरम् । भूपितमिवँ चापूर्णमिव प्रहर्षो-
३न्नतामिवेह काव्यबन्धे हृदयं कवेः श्रोतुश्च ॥ कवेः काव्यप्रसिद्ध्यप्रसि[2]-द्धिभूताः प्रहर्षलज्जादयः श्रोतुश्च बोधाबोधकृताः ॥

---

1MH पाठेत्यर्थः.　　[2]MH. ०प्रसिद्धाप्रसिद्धि०

[ अथ काव्यमारभ्यते ]

अत्थि णिवत्तिय-नीसेस-भुवण-दुरियाहिणन्दिय-महिन्दो ।
सिरि-जसवम्मोत्ति दिसा-पडिलग्ग-गुणो मही नाहो ॥ ९९ ॥
घोलइ समुच्छलन्ती जम्मि चलन्तम्मि रेणु-भावेण ।
वसुहा अमुक्क-सेस-प्फणव्व धवलयवत्तेसु ॥ १०० ॥
चालियम्मि जम्मि वियणा-विहुय-फणा-मण्डलोवि णो मुयई ।
महि-वेढं बल-भर-खुत्त-रयण-संदाणियं सेसो ॥ १०१ ॥
णीसन्दइ जस्स रणाइरेसु कीलालिओ गय-मएण ।
आहय वम्माणल-दर-विराय-धारोव्व कर-वालो ॥ १०२ ॥

॥ ९९ ॥ अथ काव्यमारभ्यते । अस्तीति मङ्गलार्थोपि शब्दः । आस्ति निवर्तितनिःशेपभुवनदुरिताभिनन्दितमहेन्द्रः श्रीयशोवर्मेति नाम २दिक्प्रतिलग्नगुणो महीनाथः ॥

॥ १०० ॥ घूर्णते समुच्छलन्ती यस्मिंश्चलति सति रेणुभावेन वसुधा अमुक्तशेषफणे [ व ] धवलातपत्रेष्वारेषु( Sic )रुक्ष्यमाणा ॥ २रजोरूपा गगनं गता मही श्वेतच्छत्रयुता सती अत्यक्तशेपफणेव विभातीत्यर्थः ॥

॥ १०१ ॥ चलिते यस्मिन्वेदनाविधूतफणामण्डलोपि नो मुञ्चति महीपीठं बलभरकुण्डितरत्नबद्धं शेषः ॥

॥ १०२ ॥ निष्पन्दते यस्य रणाङ्गणेषु कीलालितो गजमदेन

[1]MH 'कुडित' for 'कुण्डित'. Throughout MH. the form कुडित is met with for कुण्डित.

सेवञ्जलि-मिलिय-णडाल-मण्डला होन्ति हढ-पणामेसु ।
नूमिय-भिउडी-भङ्गव्व जस्स पडिवक्ख-सामन्ता ॥ १०३ ॥
जो ववसायावसरेसु दप्प-दर-दिट्ठ-दाहिणंस-यडो ।
दंसण-पसाय-सुहियं कुणइव्व भुय-ट्ठियं लच्छि ॥ १०४ ॥
कोउव्वत्त-ठिय-विसम-तार-पहा-भेय-कलुसियाइंव ।
सामायन्ति णडालाइं जस्स पडिवक्ख-वन्दीण ॥ १०५ ॥

आहतवर्मानलेपद्विगलितधार इव करवालः ॥ वर्म कवचः । दर ईषत् । विरायं विगलितम् ॥

॥ १०३ ॥ सेवाञ्जलिमिलितललाटमण्डला भवन्ति हटप्रणामेषु अनिच्छतां बलात्कारितासु प्रणतिषु प्रच्छादितभ्रुकुटीभङ्गा इव यस्य प्रतिपक्षसामन्ताः ॥ भवन्तीति प्रकृतम् ॥

॥ १०४ ॥ यो यशोवर्मा व्यवसायावसरेषु दर्पदृष्टदक्षिणांशतटो दर्शनमेव प्रसादस्तेन सुखितां करोतीव भुजस्थितां लक्ष्मीम् ॥ रणावसरे हि वीराः स्वबाहुदण्डस्य तटावलोकनं कुर्वन्ति निजबाहुबलस्यान्तरङ्गत्वात्परपरिभवे । तत्रोत्प्रेक्षा । स्वबाहुबलेनार्जितां रक्षितां च अतएव निजभुजाश्रितां श्रियं दर्शनेन संमानयतीव ॥ सोऽस्ति नृपतिरिति समन्वयः ॥

॥ १०५ ॥ कोपोद्वृत्तास्थितविषमतारकप्रभाभेदकलुषितानीव श्यामायन्ते ललाटानि यस्य प्रतिपक्षवन्दीनाम् ॥ प्रतिपक्षा एव वा बन्दिनः स्तावका ये संपन्नास्तेषां हटापहृताः स्त्रियो बन्द्यः । तारप्पहाभेय इति पाठे तारकप्रभाभोगेति-संस्क्रिया । बलवन्तं रिपुं पश्यन्तीनां स्तुवतां वा बन्दित्वमापन्नानामपि रिपूणां स्वभावादेव ललाटानि

पासम्मि पयावालुङ्घियस्स जस-पायवस्सव महल्लो ।
अयसो रिऊण दीसइ छाया-निवहोव्व संकन्तो ॥ १०६ ॥

ललाटानि कृष्णीभवन्ति । तत्रेयमिवेनापहृतापह्नुतिः कोपोद्धृतकपालनील-लोचनतारकप्रभाभोगेन कृष्णत्वं भजन्त इति ॥ पडिवक्खवत्तीणेति पाठे प्रतिपक्षपत्नीनामित्यर्थः ॥

॥ १०६ ॥ पार्श्वे प्रतापस्पृष्टस्य जयपादपस्येव महत् अयशो रिपूणा दृश्यते छायानिवह इव संक्रान्तः ॥ छायानिवह इवेति य इवशब्दः स भिन्नक्रमः अशयःशब्दात्परो बोद्धव्यः । अयं समन्वयः । किल सेवकत्वमापादिता ये रिपवस्तेषां तत्पार्श्वे स्थितानां स्वशरीरच्छाया तावत्स्वभावादेव स्थिता । आदित्यादिप्रकाशयोगात् । तत्रोत्प्रेक्ष्यते । योसौ रिपूणां छायानिवहस्तदयश इव महत्संक्रान्तं सम्यक्क्रान्तं प्रसृत-मित्यर्थः । कस्य यशःपादपस्य । रिपव एव कर्मकरीकृता यशःपादपा इव । जयिनो यशोद्योतनात् । जातावेकवचनम् । कस्य संबन्धिनो यशःपादपस्य । प्रतापालिङ्गितस्यादित्यस्येव यशोवर्मणः । अथवा अय-मपि योजनाप्रकारः प्रतिभाति । जयिनस्तावदयशोपसरतीत्यत्र किमुच्यते तत्संनिधौ सेवकीकृतेभ्योपि रिपुभ्योपसृतमयशः । अत्राक्षरयोजनार्थं जयपादपस्येवेति इवशब्दश्चशब्दस्यार्थे । निपातानामनेकार्थत्वात् । पार्श्वे यश्छायानिवहो रिपूणां जयपादपस्य च जयिनो महान्दृश्यते तदयश इव मालिन्यात्सम्यक्कान्तं पलायितं[1] त्यक्त्वा दृश्यते । उपचारे निमित्तमाह । प्रतापालिङ्गितस्य जयिनः पार्श्वे स्थितोसौ यतश्छाया-निवहः अतः एवमुत्प्रेक्ष्यते । न तु सर्व इति नातिप्रसङ्गः । अयं चार्थः । तस्य जयिनः संनिधौ वर्तमानाः कर्मकरीकृता रिपवो म-

[1] MH. पलायितुं त्यक्त्वा दृ०.

गम्भीर-महारम्भा संभाविय-सायरं परिब्भमइ ।
भुवणन्तरेसु भाईरहिव्व सा भारही जस्स ॥ १०७ ॥
जस्स य वलन्त-जय-गय-सीयर-धारा-सहस्स-लुलियाओ ।
संभम-संचारिय-चामराओँ धावन्तिव्व दिसाओ ॥ १०८ ॥

अवि य ।

सोहइ विणिवेसिय-पसिढिलङ्गुली-कोडि-कट्टणुत्थल्लो ।
पायडियब्भन्तर-वण-निवेस-दर-दन्तुरो अहरो ॥ १०९ ॥

लिनच्छाया अयशोनिवहाक्रान्ताः । तेषु च रिपुषु महद्यशः । ततस्य जयिनः संनिधौ जयपादपस्योपच्छायानिवहः कल्प्यते । तत्रेवशब्दः स्वस्थानस्थ एव ॥

॥ १०७ ॥ गम्भीरा चासौ महारम्भा संभावितः आलिङ्गनेन कृतार्थीकृतः सागरो यया सा भागीरथी । भारत्यपि जितसागरान्तभुवन[1]त्वात्संभावितसागरा । संभावियसायरमिति पाठे क्रियाविशेषणत्वम् । परिक्रामत्याज्ञारूपेण बन्दिवदनद्वारेण वा । भागीरथी तु त्रिपथगत्वादेव। भुवनान्तरेषु भागीरथीव सा भारती यस्य ॥ अत्रापि सोस्तीति संबन्धः । ६सेति ते लोचने इतिवत् ॥

॥ १०८ ॥ यस्य च वलमानजयगजकरविसरसीकरधारासहस्रैर्लुलिता इव संभ्रमसंचारितचामरा धावन्तीव दिश. ॥ सोस्ति । अगणित[2]गजकरनिकरविसारिवारिधाराप्रकरधावनाद्दिशो धावन्त्य इव प्रथन्ते । शुभ्रत्वाच्च जलधाराश्चामरावयवविसरा इचोत्प्रेक्षिताः । दिशश्च चामरधारिण्यः ॥

॥ १०९ ॥ इत ऊर्ध्वं पञ्चभिः कुलकम् । [ शोभते ] विनिवेशि-

---

[1] MH. वाक्  [2] MH ॰निज॰ for ॰गज॰

मुञ्चन्ति पेल्लिउव्वेल्लि-केसरा मूल-लुलिय-मयरन्दा ।
निहुयं लीला-कुवलय-पडित्थिया कहवि नीसासा ॥ ११० ॥
वाम-करायट्टिय-सुण्ण-मलिय-विक्खित्त-कुन्तल-सिहाण ।
अरई-विलास-विसुरावियाण निव्वडइ सोहग्गं ॥ १११ ॥
अग्घइ मङ्गल-गहिएक्क-कुसुम-पेसिय-पसाहणामेलं ।
विमुह-णयणावहीरिय-दर-वन्दिय-चन्दणं वयणं ॥ ११२ ॥

तभ्रशिथिलाङ्गुलीकोट्याकर्षणेनोद्वार्तितः अत एव प्रकटिताभ्यन्तरनखदन्त-
कृतास्मकव्रणनिवेशेनेषद्दन्तुरः संजातदन्त इवाधरः ॥ रणरसरभसा-
३नन्दस्पन्ददर्शनोपन[1]सुरसुन्दरीयशोवर्मरूपशौर्यादिदर्शनसमुल्लसितमदन-
पवनजनितविकृतिकथनेनात्र प्रकृतोपयोगः ॥

॥ ११० ॥ [ मुच्यन्ते प्रेरितोद्वेल्लितकेशरा ] मूललुलितमकरन्दा
निभृतं गूढं कृत्वा लीलाकुवलयेन क्रीडोत्पलेन प्रतिष्ठिता गृहीताः
३ थमपि निःश्वासाः सुरसुन्दरीभिः ॥

॥ १११ ॥ वामकराकृष्टशून्यमलिनविक्षिप्तकुन्तलशिखानाम् अर-
तयो वीरेण प्रकृतेन सह रतिशून्या ये विलासा निष्फलास्ते[2]विसुरावियाण
३वेदितानाम् । विहुराइआणेति पाठे विधुरायितानाम् । निर्वर्तते आभि-
व्यज्यते सौभाग्यं सुन्दरता ॥

॥ ११२ ॥ अर्घति शोभते मङ्गलार्थगृहीतैककुसुमं च तत् प्रेषितं
प्रसृष्टं प्रसाधन माल्यं च येन तत् विमुखाभ्यां रणदर्शनरणरणकेना-
३[ वाङ्क्षिप्ताभ्यां नयनाभ्याम् ] अवधीरितं मङ्गलार्थितया [4]ईषद्वन्दितं
चन्दनं यत्र तद्वदनम् ॥

---

[1] MH. ॰पन्न॰ [2] MH. ते for तैः [4] MH. ॰षद्वन्दन.

इय जस्स समर-दंसण-लीला-णिम्मविय-वम्मह-वियारा ।
तियस-तरुणीओ अज्जवि मण्णे णिहुयं किलम्मान्ति ।११३।५

अहवा । ४७

सिहर-णपहुत्त गयणा दिसा-पडिप्फलिय-कडय-विणियत्ता ।
डज्झन्ति दरुप्पइया अलद्ध-गमणन्तरा गिरिणो ॥ ११४ ॥

॥ ११३ ॥ इति उक्तेन प्रकारेण यस्य यशोवर्मणः समरदर्शनलीलानिर्मितमन्मथविकारास्त्रिदशतरुण्यो मन्येद्यापि निभृतं गुप्तं कृत्वा क्लाम्यन्ति[1] ॥ सोस्तीति महाप्रकरणसमन्वयः ॥ अत्र च कुलकवाक्यपरिसमाप्तिः ॥ अन्योप्यस्योत्कृष्टतरो वक्ष्यमाणो गुणोस्तीति द्योतयितुं निपातनिचयप्रयोगः ॥

अत ऊर्ध्वं सप्तचत्वारिंशता गाथाभिः कुलकम् । गिरिपक्षक्षपणदक्षोपि सहस्राक्षो यस्य समानासनोपवेशनेन कृतार्थमात्मानं संमन्यते तस्य किमन्यद्वर्णनीयतरमस्तीति सूचयितुम् ॥

॥ ११४ ॥ शिखरेषु न पर्याप्तं न वृत्तं गगनं येषां ते तथा दिक्प्रतिफलितकटकविनिवृत्ता दह्यन्ते ईषदुत्पतिता अलब्धगगनान्तरा गिरयः ॥ इन्द्रप्रहरणेन दह्यमाना प्रपलायनकामा अतिमहत्त्वेन व्याप्तसकलगगनदिगन्तत्वेन पलायनस्थानमलभमाना निवृत्ता यथास्थानस्था दह्यन्त एव न प्रतिविधानं लभन्ते गिरय इत्यर्थः । तथा हि गगनं तावत्तदीयशिखरमात्रेष्वपि न पर्याप्तं न वृत्तम् । शिखराण्यपि तदीयानि व्याप्तुं गगनेन न शक्तानि । तत्कथं पलायनस्थानं स्यात् । तस्य तदेकदेश एव निष्ठितत्वात् । इत्यतिशयोक्तिः ॥ यथा । अल्पं निर्मि-

1 MH. क्लाम्यति

तं स-गुहा-मुह-निव्वाडिय-धूम-वलयावलम्बिय-नियम्बा ।
वज्जाणल-धम्मन्ता लोहंव मुयन्ति धरणि-हरा ॥ ११५ ॥
लक्खिज्जइ धूमायन्त-पक्ख-णिक्खन्त-सिहि-सिहा-णिवहो ।
संभम-संचलिय-चलन्त-रयणि-दियसोव्व सुर-सेलो ॥ ११६ ॥

तमाकाशमनालोच्येव वेधसा । इदमेवंविधं भावि भवत्याः स्तनजृम्भणमिति ॥ तथा दिगन्ता अपि न तेषां पलायनस्थानानि दिगन्तलग्नकटकत्वेन ततः प्रतिहतानिवृत्तत्वात् । अन्तरिक्षमपि न पलायनस्थानं तेषां न हि तैर्गगनस्यान्तरं मध्यमन्तरिक्षं लब्धं तस्यापि तदन्तैरेव व्याप्तत्वात् । अत एवैषदुत्पतितैरन्तरिक्षं तैर्न लब्धम् ॥

॥ ११५ ॥ तथा नूतनपरावृत्त्यादिविषमदुःखानुभवप्रकारेण दह्यमानाः स्वगुहामुखनिर्वृत्तधूमवलयावलम्बितनितम्बा वज्रानलध्मायमाना लोहमिव मुञ्चन्ति धरणिधराः ॥ धूमः अतिकृष्णत्वाल्लोहत्वेनोत्प्रेक्षितः ; अथ च पर्वतविषयनितम्बेष्वाध्मायमानेषु किल लोहस्योत्पत्तिर्भवति । ताम्ररूप्यादिवत्मृत्तिकैव पच्यमाना लोहीभवति । अथवा लोहं लोभं जीवितगर्वमिव मुञ्चन्तीति योज्यम् । लोभोपि ह्यविद्यत्वात्तामसो मलिनो धूमसमः[1] ख्यातः सताम् ॥

॥ ११६ ॥ लक्ष्यते धूमायमानपक्षनिष्क्रान्तशिखिशिखानिवहः संभ्रमेण सम्यक्चलिते तस्मिन्सति [2]चलन्तौ रजनिदिवसौ यत्र स इव सुरशैलः ॥ एकस्यां शिलायामादित्यस्योदयः अपरस्यामस्तमय इति प्रसिद्धिः । आदित्यस्योदयास्तमयावेवाहर्निशम् । तेन मेरुसमाश्रितं तत् । अतश्चाहर्निश[3]सदृशज्वालाधूमावलीसंचलनेन मेर्वाश्रितत्वेन मेरुसंचलनेऽहर्निशं संचलनमुत्प्रेक्षितम् ॥

[1] MII. °स्समत्वात॰ [2] MII. चलितौ. [3] MII, °निशे°.

जेसुंचिय कुण्ठिज्जइ रहसुब्भिडण-मुहलो महि हरेसु ।
तेसुंचेय णिसिज्जइ पडिरोहन्दोलिरो कुलिसो ॥ ११७ ॥
वेल्लन्ति कन्दरोयर-णिव्वाडिय-वलन्त-वियड-विहयाओ ।
सहसव्व सेल-सीमन्तिणीओ भय-मुक्क-गब्भाओ ॥ ११८ ॥
विज्झवइ वेल्लणोणय-महि- वेढोभय-दिसागय-समुद्दो ।
ठाण-परिसंठिओच्चिय पक्ख-च्छेयाणलं सेलो ॥ ११९ ॥

॥ ११७ ॥ येष्वेव कुण्ठीक्रियते रभसेन उब्भिँण्णं आपातपूर्वकं प्रत्यावर्तनं तेन मुखरः सशब्दः सन्महीधरेषु तेष्वेव नितान्तं सज्जँति । कुतः । प्रतिरोहान्दोलितत्वात् प्रतिहतोत्फलितमन्दवेगपतितान्दोलित-निघृष्टधारत्वात् कुलिशः ॥ पाषाणे हि निघृष्यमाणाः कुठारादिधारास्तैक्ष्ण्यातिशयमासादयन्तीति दृष्टम् । क्वचित् निसिज्जइ इति पाठः । तत्र निशितस्तीक्ष्णो भवतीत्यर्थः । निसज्जइ इति पाठे तु तैक्ष्ण्यमासाद्य नितान्तं सज्जति छिनत्तीत्यर्थो व्याख्यातः ॥

॥ ११८ ॥ वेल्लन्ति लुण्ठन्ति भूमौ पतिताः सत्यः कन्दरोदरेभ्यो निर्वृत्ताः[1] प्रकटीभूता निःसृता वलन्तो विकटा विहगाः पक्षिणो दुर्दग्धा यासा ताः [2]सहसेव शैलसीमन्तिन्यः पर्वतकामिन्यो भयविमुक्त-गर्भाः ॥ अथवाकृतस्वापादिकाः सन्नः कन्दरोदरेभ्यो निर्वृत्ता अभिव्यक्ता अर्धदग्धनिर्गता वलन्तो विकटा महाप्रमाणा विगताः प्रमीता धवा भर्तारो यासां ता इति व्याख्येयम् । विहवा इत्यपि पाठोस्ति क्वचित् ॥

॥ ११९ ॥ विज्झवइ शमयति प्रेरणावनतमहीपीठोभयदिगागत-समुद्रः स्वस्थानपरिसंस्थितोपि पक्षच्छेदानलं शैलः ॥

---

1 MH. निवृत्ता·. 2 MH. सहसैव.

तद्दियसं रवि-मण्डल-संचलणुम्हायमाण-कडएण ।
उययाचलेण कुलिसो मिलिओवि चिरेण विण्णाओ ॥१२०॥
डज्झन्ति विसाणल-वाय-विसहरामुक्क-चन्दण-क्खन्धा ।
तिअस-विअसाविअंसुअ-सेविअ धूमा मलय-वक्खा ॥१२१॥
निसुढिय-पक्ख-पडन्ता महीऍ दल-विब्भमेण भज्जन्ति ।
तक्खण-तरल-पलायन्त विसहरा महिहरुग्घाया ॥ १२२ ॥
कहवि धरेइ महि-यलं निप्पक्ख-पडन्त-गिरि-णिसुम्भन्तं ।
दाढा-भिण्ण-ससोणिय-मुह-निवहारोसिओ सेसो ॥ १२३ ॥

॥ १२० ॥ प्रतिदिवसं रविमण्डलसंचलनोष्मायमाणकटकेन उदयाचलेन सह कुलिशो मिलितोपि चिरेण विज्ञातः ॥

॥ १२१ ॥ दह्यन्ते विषानले वाताः शुष्का विषधरैरामुक्ताश्चन्दन-
स्कन्धा येषु ते तथा त्रिदशैर्विकाशितांशुकैः सेवितो धूमोद्गमः सुगन्धि-
३त्वाद्येषां ते मलयपक्षाः ॥

॥ १२२ ॥ छिन्नपक्षत्वेन पतन्तो मह्यां दलविभ्रमेण दलसादृश्येन
भज्यन्ते तत्क्षणं तरलं कृत्वा पलायमाना एकमार्गेण विषधरा यत्र ते
३महीधरोद्घाताः पर्वतसंघाताः ॥ छिन्नपक्षत्वेन परिवर्तुलाकृतित्वात्कृष्णत्वा-
देकमार्गाविच्छिन्नक्रमपलायमानपन्नगत्वाच्च पलाशपर्णनिचयनिभत्वं गिरि-
समूहानाम् ॥

॥ १२३ ॥ कथमपि धारयते महीतलं निष्पक्षत्वात् [ पतद्भिर्गिरि-
भिर् ] निशुम्भन्तम् आहन्यमानं नाड्यमानं दंष्ट्राभिन्नसशोणितमुखनिवहे-
३नारोषितः शेषः ॥ एकस्यैव शेषस्य चित्रं धरादिरूपं कविना कल्पितम् ॥

दीसइ जलन्त-सेलं तावोसारिअ-वलन्त-सुर-लोयं ।
धूमुप्पित्थ-पियामह-कमलालि-करम्बियं गयणं ॥ १२४ ॥
गब्भालसाओव्व पुणो कहवि गुहा-ल्हिक्क-पोय-गरुईओ ।
पावन्ति भया सेलङ्गणाओ गणयङ्गणुद्देसं ॥ १२५ ॥
खण-तरलिय-पक्ख-उडा फडार-विज्जु-च्छडा-सिहालम्मि ।
सलहा इव अत्थायन्ति पवि-पईवम्मि धराणिहरा ॥ १२६ ॥
थोयायन्तिव विरला दीहायन्तिव्व खविय-वित्थारा ।
तुङ्गायन्तिव तणुया पवि-खण्डिय-पेहुणा गिरिणो ॥ १२७ ॥

॥ १२४ ॥ दृश्यते ज्वलच्छैलं तापापसारितवलत्सुरलोकम् धूमोद्भ्रस्तैः पितामहकमलालिभिः कराम्बितं गगनम् ॥

॥ १२५ ॥ गर्भालसा इव पुनः कथमपि गुहालीनपोतगुरवः प्राप्नुवन्ति भयाच्छैलाङ्गना गगनाङ्गणोद्देशम् ॥ पुनःशब्दः शैलाङ्गना-
३पदेन संबध्यते । शैलाङ्गनाः कथमपि गगनाङ्गणप्रदेशं प्राप्नुवन्ति गर्भालसा इव यतो गुहालीनमृगशिशुत्वेन गुरुभराः स्त्रीत्वाच्चातिरिक्तभयाः । शैलवध्वोत्र शैलरूपा एव पर्वतपत्न्यः ॥

॥ १२६ ॥ क्षणं तरलिताश्चालिताः पक्षा यैस्ते करालविद्युच्छटा एव दुर्दर्शना विद्युच्छटैव शिखा यस्य तस्मिन्करालविद्युच्छटाशिखावति
३शलभा इवास्तं गच्छन्ति नश्यन्ति पविर्वज्रः स एव प्रदीपस्तत्र धराणिधराः ॥ शलभा इवेत्यनेन निःसारतां गिरीणामाह । पविप्रदीप इत्यत्रापि पवेर्दीपत्वरूपेण गिरिनाशने प्रयासाभावं द्योतितवान् ॥

॥ १२७ ॥ स्तोकायन्तीव विरलास्तनूँयन्तीव क्षपितविस्तारास्तुङ्गायन्तीव तनूकृताः पविखण्डितपक्षाः सन्तो गिरयः ॥ सघातने

सिढिल-पसारिय-वक्खा घेप्पन्ति पहाविएण कुलिसेण ।
दूरुप्पइय-णिवाडिया दर-पप्पुय-नीसहा गिरिणो ॥ १२८ ॥
कुलिसो ताडेइ धरे धरा महिं कुलिस-खण्डिय-पडन्ता ।
निवडन्त-सेल-पहया महीवि सेस-प्फणा-वलयं ॥ १२९ ॥
निय-धूम-कडुइयाइं गिरि-जालाइं धुय-पक्ख-पम्हाइं ।
फुट्टन्ति लोयणाइव दिसाण मुक्कोज्झरंसूइं ॥ १३० ॥
जाया दाह-विणिग्गय-संखायायस-सिला-यड-त्थउडा ।
कुलिस-पडिच्छण-भोग्गा पच्छा कडया महिहराण ॥ १३१ ॥

ये व्यवस्थिता अपि बहवः प्रतिभातास्ते मध्ये मध्ये हतेषु केषुचि-
न्निरिषु विरलीभूताः सन्तः श्लोका इव भवन्ति । एवं छिन्नपक्षत्वेन
३ क्षपितविस्तारास्तनवो दीर्घाश्च दृश्यन्ते ॥ निश्चितेपि इवशब्दोयम्
एवार्थः । निपातानामनेकार्थत्वात् ॥

॥ १२८ ॥ भयशिथिलप्रसारितपक्षा गृह्यन्ते प्रधावनशीलेन
[ कुलिशेन ] दूरोत्पतितनिपतिता [1]दूरोत्प्लुतेन निःसहा गिरयः ॥ श्येन-
३ वर्तिकावृत्तान्तसममेतत्कुलिशधराधरविषयम् ॥
॥ १२९ ॥ कुलिशस्ताडयति धरान् पर्वतान् । धराः पर्वता अपि
कुलिशखण्डिता निपतन्तो महीं ताडयन्ति । निपतच्छैलप्रहता मह्यपि
३ शेषफणावलयम् ॥ इति वज्रप्रहरणमहिमावर्णनमेतत् ।

॥ १३० ॥ निजेन वज्राग्निजेन धूमेन कटुकितानि दूषितानि
[ गिरिजालानि ] धुताः पक्षा एव पक्ष्माणि येषां तानि स्फुटन्ति लोच-
३ नानीव दिशां मयन्धीनि [ मुक्ता ] निर्झरा एवाश्रूणि येषां तानि ॥
॥ १३१ ॥ जाता दाहेन विनिर्गता गलिताः सत्यो वाय्यादिना

[1] MH. दूरोत्प्लुतनिः°

दड्ढ-वण-राइ-कलुसा तेच्चिय सिहरोज्झरा सदुक्खाण ।
जाया सकज्जला इव वाहोआरा गिरि-वहूण ॥ १३२ ॥
संखाय-मसिण-पसरा पासुत्त-महा-भुयंग-सच्छाया ।
दीसन्ति सेल-कडएसु दीहरा लोह-णीसन्दा ॥ १३३ ॥
कुलिसाणल-पिङ्गलिओ उप्पयण तलावसत्त-सासि-बिम्बो ।
उक्खित्तामय-कलसो गरुलोव्व गिरी परिब्भमइ ॥ १३४ ॥

संस्यानाः कठिनीभूता या आयस्यो लोहमय्यः शिलास्तासां तटैः स्थपुटा निम्नोन्नताः कुलिशप्रत्येषणयोग्याः पश्चात् पक्षादिदाहोत्तरकालं कटका नितम्बा महीधराणाम् ॥ अन्ये युद्धप्रारम्भे कवचमुपाददते । गिरिकटकैः पुनरायसशिलाभिः कुलिशाग्निदाहविगलितविनिर्गतलोहीभूतनिम्नोन्नततटरूपाभिः कवचस्थानाभिः कुलिशप्रहारनिवारणं पश्चात् कृतम् । [1]प्रत्येषणमुत्सारणम् । निम्नोन्नतविषमावयवत्वेनालब्धमध्यप्रकाशस्य खटखटाशब्दपूर्वकं निवारणम् ॥

॥ १३२ ॥ दग्धवनराजिकलुषास्त[2] एव शिखरनिर्झराः सदुःखाना जाताः सकज्जला इव बाष्पावतारा गिरिवधूनाम् ॥

॥ १३३ ॥ संस्त्यानमसृणप्रसराः प्रसुप्तमहाभुजंगसमानच्छायाः । क्वचित्तु [3]भुजगमच्छायेति पाठः । भुजंगमकान्तय इत्यर्थः । दृश्यन्ते शैलकटकेषु दीर्घा लोहनिष्पन्दाः ॥

॥ १३४ ॥ कुलिशानलेन पिङ्गलितः सुवर्णवर्णत्वं प्रापितः उत्पतनतलावसक्तशशिबिम्बः उत्क्षिप्तामृतकलशो गरुड इव गिरिर्भ्रमति कश्चित् ॥

---

[1] MH. प्रेषण°. [2] MH. तनएव. [3] MH. भुजंगस.°

सेल-नियम्बुप्पइया वज्जाणल-सरिस-विज्जु-पिञ्जरिया ।
लुय-महिहर-पक्ख-निहा णहम्मि घोलन्ति घण-निवहा॥१३५॥
दीसन्ति कुलिस-मिलिया अङ्गारायन्त-कुसुम-फल-किसला ।
तियस-मिहुणाणुसोइय-संकेय-लया-हरा गिरिणो ॥ १३६ ॥
वेयल्ल-वेल्लिराणं परियत्तन्ता गिरीण कडएसु ।
सरिया मग्गा पावन्ति वियड-वण-वट्टयच्छायं ॥ १३७ ॥
ओअरण-लालसेहिँ गिरीसु दीसइ गुहा-विणिन्तेहिं ।
पक्ख-च्छेओव्व तड-ट्ठिएहिँ वसुहा वणयरेहिँ ॥ १३८ ॥
जलिउप्पइय-वलन्ता अद्धेहिँ णहङ्गणे विसट्टन्ति ।
अद्धेहिँ मूल-गरुआ महीएँ णिवडन्ति गिरि-ववखा ॥ १३९ ॥

॥ १३५ ॥ शैलनितम्बोत्पतिता वज्रानलसदृशविद्युत्पिञ्जरिता लूनमहीधरपक्षनिभा नभसि घूर्णन्ते घननिवहाः ॥

॥ १३६ ॥ दृश्यन्ते कुलिशमिलिता अङ्गारायमाणकुसुमफलकिसलयास्त्रिदशमिथुनानुशोचितसंकेतलतागृहा गिरयः ॥

॥ १३७ ॥ वैकल्यवेल्लनशीलानां परिवर्तमाना गिरीणां कटकेषु सरिन्मार्गाः प्राप्नुवन्ति विकटव्रणपट्टकच्छायाम् [1]विकटघातलाञ्छिताः शुक्लव्रणपट्टिका भजन्त इत्यर्थः ॥

॥ १३८ ॥ अवतरणलालसैर्गिरिशिखरेषु स्थितैर् [ दृश्यते ] गुहाभ्यो विनिर्गच्छद्भिः पक्षच्छेद इव तटस्थितैर्वसुधावनचरैः सिंहादिभिः ॥ [2]भूमावतितीर्षवो मृगादयः पक्षच्छेदादिदर्शनभीता भुवं पश्यन्त्येव न तु प्राप्नुवन्ति । गमनोत्साहमार्गाभावादित्यर्थः ॥

॥ १३९ ॥ ज्वलितोत्पतितवलन्तः अर्धैः प्रान्तभागैर्लघुत्वान्नभोङ्गने

[1] MH. °भजन्तविकटपुट°. [2] MH. भूमावतितीर्षवो.

उवरिं-धूम-निवेसा मूलालग्ग-जलणाण दीसन्ति ।
हेट्ठालोउक्खित्ता छाया-बन्धा इव तरूण ॥ १४० ॥
परिलूण-पेहुणस्सवि सुर-गिरिणो अणह-वक्ख-सङ्काए ।
घडिओ पुणोवि कुलिसो जालासु नियम्ब-वियडासु ॥१४१॥
निय-सामत्थेणंचिय ण तहा वेएण निट्ठुर-प्पहरो ।
अण्ण-गिरि-पक्ख-पहओ जहँ छिन्दइ महिहरं कुलिसो॥१४२॥
महिहर-वडणुच्छलिया भमन्ति पसरिअ-मणि-प्पहा-वलया ।
सेलव्व जलिय-वक्खा गयणम्मि समुद्द-कल्लोला ॥ १४३ ॥

विकसन्तीव शरारवो भवन्ति । अर्धदेहाग्रमूलभागैर्लग्नासैर्मूलगुरुत्वान्महीं निपतन्ति गिरिपक्षाः ॥

॥ १४० ॥ उपरिधूमनिवेशा मूलालग्नज्वलनानां दृश्यन्ते अधोवस्थितेनालोकेनोत्क्षिप्ताश्छायाबन्धा इव तरूणाम् ॥

॥ १४१ ॥ परिलूनपक्षस्यापि सुरगिरेरनघपक्षशङ्कया घटितः संबद्धः पुनरपि कुलिशो ज्वालासु नितम्बविकटासु ॥ सौवर्णपक्षत्वेन छिन्नपक्षस्यापि मेरोर्नितम्बे ज्वालासु सादृश्याद्भ्रान्त्या पुनः कुलिशो व्यापारित इत्यर्थः ॥

॥ १४२ ॥ निजसामर्थ्येनापि चैं न तथा वेगेन निष्ठुरप्रहारोन्यगिरिपक्षप्रहतो यथा भिनत्ति महीधरं कुलिशः ॥ वज्रहतपक्षहता अप्यतिशयेन गिरयो भिद्यन्ते पक्षाणामतिमहत्त्वादित्यर्थः ॥

॥ १४३ ॥ महीधरपतनोच्छलिता भ्रमन्ति प्रसृतमणिप्रभावलयाः

उप्पिय-तियस-विसाओ णिक्खमइ चिरेण दाह-कय-विवरो ।
कुविअ-गिरि-पक्ख-संपुड-संपीडिय-णिप्फुरो वज्जो ॥१४४॥
असमप्पमाण-दीहर-मूलोआरे समुद्द-पडिएवि ।
णह-दूर-ट्ठिय-सिहरे णा मुयइ मही हरे कुलिसो ॥ १४५ ॥
एक्को उण धरणि-हरो अदिट्ठ-नियम्ब-मूल-सिहरग्गो ।
लिहक्को दूरुच्छलिए जलहिम्मिव जलहि-कल्लोले ॥ १४६ ॥
रहसा रसा-अलोअर-विसाल-कन्दर-दरी-पलोट्टन्तो ।
नज्जइ गिरी ण जलहिं जलहिच्चिय महि-हरं विसइ ॥१४७॥

शैला इव ज्वलितपक्षा गगने समुद्रकल्लोलाः ॥ तेपि पर्वतवरप्रसृतमणिप्रभाप्रवाहयोगाज्ज्वलन्त इव भान्तीत्यर्थः ॥

॥ १४४ ॥ अर्पितत्रिदशविषादो निष्क्रामति चिरेण दाहकृतविवरः कुपितगिरिपक्षसंपुटसंपीडितनिष्फुरो वज्रः ॥

॥ १४५ ॥ असमाप्यमानदीर्घमूलावतारान्समुद्रपतितानपि नभोदूरस्थितशिखरान्न मुञ्चति महीधरान्कुलिशः ॥

॥ १४६ ॥ एकः पुनर्धरणीधरः अदृष्टनितम्बमूलशिखराग्रो लीनो दूरोच्छलिते जलधाविव जलधिकल्लोले ॥ जलधिकल्लोलस्य महत्त्वोक्तिरियम् ॥

॥ १४७ ॥ भयात्सागरं प्रविविक्षुरपि कश्चिद्गिरिर्न जलधिं विशत्यतिमहत्त्वादि समुद्रे स न मज्जति न [1]क्रुडति प्रत्युत जलधिरेव महीधरं विशति रभसा वेगेन । किं कुर्वन् । रसातलोदरवद्विशालासु कन्दरदरीषु प्रलुण्ठन्वर्तन् ॥

[1] MII. क्रुडत.

गिरि-लुलिओअहि-विहुआ संभन्त-दिसेभ-ताडिय-क्खन्धा ।
वेवइ वियणा-वेल्लन्त-महिहरन्दोलिया वसुहा ॥ १४८ ॥
अप्पत्ताविं समुद्दं समुद्द-रिरिक्खि अव्व वोलन्ति ।
वेय-समुच्छलिय-नियम्ब-सिन्धु-परिणुमिया गिरिणो ॥१४९॥
निवडन्त-सिला-छविअ-परितालिणायन्त-मूल वित्थारो ।
वोच्छिण्ण-मन्थर-सिहो विरलायइ धूम-संघाओ ॥ १५० ॥
उप्पइय-रेणु-निवहा संवेल्लिय-विअड-कन्दर-च्छेया ।
तेच्चेय पडण-भिण्णा पत्ता लहुअत्तणं गिरिणो ॥ १५१ ॥
एक्कत्तो सल्लायन्त-वज्ज-धारा-कणा किलम्मन्ति ।
अण्णत्तो कडओसहि-पहाव-रूढ-व्वणा गिरिणो ॥ १५२ ॥

॥ १४८ ॥ गिरिलुलितोदधिविधुता सम्भ्रान्तदिग्गजताडितस्कन्धा वेपते वेदनावेल्लँयमहीधरान्दोलिता वसुधा ॥

॥ १४९ ॥ अप्राप्ता अपि समुद्रं समुद्रपरिरक्षिता इव गच्छन्ति । हेतुमाह । पलायनार्थवेगसमुच्छलितनितम्बसिन्धुसमाच्छादितत्वाद्गि-रयः ॥

॥ १५० ॥ निपतच्छिलापिहितपरितलिनायमानमूलविस्तारो व्युच्छिन्नमन्थरशिखो विरलायते धूमसंघातः ॥

॥ १५१ ॥ उत्पतितरेणुनिवहत्वात्संवेल्लितविकटकन्दरोच्छेदाच्च त एव पतद्भिर्भिन्नाः प्राप्ता लघुत्वं गिरयः ॥

॥ १५२ ॥ एकस्मिन्भागे शल्यायमानवज्र [ धारा ] कणत्वात्क्ला-म्यन्ति अन्यत्र कटकौषधिप्रभावरूढव्रणा गिरयः ॥

कुलिसो न दीसइच्चिय एक्कम्मिच्चिय गिरिम्मि मुज्झन्तो ।
एक्कंव सेल-सिहरं अट्टइ कुलिसम्मि गिरि-जालं ॥ १५३ ॥
पक्ख-उड-कूड-पुञ्जिय-कप्पन्तर-दिप्पमाण-हव्ववहा ।
पलयेच्चिय विज्झाया समुद्द-भर-पूरिया गिरिणो ॥ १५४ ॥
णीसह-विमुक्क-कायत्तणेण वोच्छिण्ण-पक्ख लहुयंपि ।
तंच्चिय भुयंग-वइणो जायं गरुयंव गिरि-जालं ॥ १५५ ॥
विहडिय-वसुहा दालियद्दि-मण्डला दूर-विद्दय-समुद्दा ।
थिइ-लालसेण हरिणा णीया पलयंच्चिय तिलोई ॥ १५६ ॥

॥ १५३ ॥ कुलिशो न दृश्यत एवैकस्मिन्नपि गिरौ प्रख्याततमे [1]प्राप्तप्रसिद्धौ । एकं शैलशिखरमिव अट्टइ क्वाथं पाकमनुभवति कुलिशे गिरिजालम् ॥

॥ १५४ ॥ पुञ्जीकृतपक्षपुटकूटेषु कल्पेदैर्घ्योपदीप्यमानो हव्यवाहो येषां ते प्रलय [2]एवोपशान्तास्त्यक्तमर्यादाक्रान्तान्तरितसमुद्रभरपूरिता गिरयः ॥

॥ १५५ ॥ पक्षनिमित्तोत्पतनसामर्थ्याभावान्निःसहविमुक्तकायत्वेन विच्छिन्नपक्षत्वाल्लघुकमपि तदेव भुजंगपतेर्जातं गुरुकमिव गिरिजालम् ॥

॥ १५६ ॥ विघटितवसुधा दलिताद्रिमण्डला दूरविद्रुतसमुद्रा स्थितिलालसेन हरिणा शक्रेण नीता प्रलयमेव त्रिलोकी स्वेदजोद्भिजाण्डजलक्षणलोकत्रयसमाहारः ॥ प्रलयमिवानीत इत्यर्थः ॥

---

[1] MH. प्राप्तप्रसिद्धे. [2] MH. °मर्यादाकान्ता अन्तरित°

आमुयइच्चिय जीयं गिरि-मिहुणं निव्वुएहिँ अङ्गेहिं ।
पज्जलिय पक्ख-संपुड-संपाडिय-सिसिर-परिरम्भं ॥ १५७ ॥
भय-विहडियाण जाओ लुय-पक्खुद्देस-निवडिय-थिराण ।
अह निरवसाण दुसहो कुम्डुव विरहो महि हराण ॥ १५८ ॥
कढिण गिरि-वक्ख सूडण-विहडिय-धारत्तणेण सुर वइणो ।
आरुहइ काय लहुओ पेसण-गरुओ कर कुलिसो ॥ १५९ ॥
इय जेण खुडिय-वक्खा गिरिणोवि समञ्जसत्तणे ठविया ।
एक्कासण सम्माणं सोवि हरी मण्णए जस्स ॥ १६० ॥४७॥

॥ १५७ ॥ आमुञ्चत्येव जीव गिरिमिथुन निर्वृतैरङ्गैः प्रज्वलित-
पक्षसपुटसपादितशिशिरपरिरम्भम् ॥ रतिसुखातिशयव्याप्त गिरिमिथुन
३वज्रपातेनालक्षितदु खमेच जीवित त्यजतीत्यर्थः । काचित् सपीडिअपरि-
रम्भमिति पाठ । सपीडितपरिरम्भम् ॥

॥ १५८ ॥ भयेन विघटिताना वियुक्ताना जातो लूनपक्षत्वेन
पतितत्वास्थिराणाम् । जङ्गमत्वमुत्सृज्य [1]स्थावरत्व प्राप्तानामित्यर्थ ।
३अनवन्तर निरवसानो निरवधिदु सह उदुम्बैर्विरहो वियोगो मही-
धराणाम् ॥

॥ १५९ ॥ कठिनगिरिपक्षसूदनविघटितधारत्वेन सुरपतेरारोहति
कायलघुक प्रेषणगुरुक कर कुलिश ॥

॥ १६० ॥ इति उक्तप्रकारेण येन खण्डितपक्षा गिरयोपि [2]सम-
ञ्जसत्वे धृता एकासनसमानं सोपि हरिर्मन्यते यस्य ॥ सोस्ति यशो-
३वमेति कुलकस्य समन्वयः । अनेन सहैकासनस्थित्या कृतकृत्योहमि-
तीन्द्रस्याप्यभिलापो नूनमुत्तमचरितत्वात् । कुलकम् ॥

---

[1] MH स्थावरत्व [2] MH समञ्जसे

अवि य । ६

चिहुरावीलण पडिलग्गॅ-ण्हाण-घुसिणारुणंसुय-सुयन्धो ।
अग्घइ मङ्गल-गहिएक्क-कुसुम-दामुज्जलो वेसो ॥ १६१ ॥
दर-चक्खिय-मइरा-मय-पविरल-सम्बज्झमाण-सेय-लवं ।
सोहइ मन्थर-णित्थाम-लुलिय-नयणुप्पलं वयणं ॥ १६२ ॥
सहइ जलद्दासंदाण-विसम-मासालिय-चन्दण-च्छेओ ।
संकन्त-पाडलामोय-सुरहि-सिसिरो थणाहोओ ॥ १६३ ॥
घोल्इ महु-रस-विच्छुरिय-मालई-मउल-कोमलायम्बा ।
णिद्धोअञ्जण-रमणिज्ज-पम्ह-मूलुज्जला दिट्ठी ॥ १६४ ॥

॥ १६१ ॥ अपि च । इत ऊर्ध्वं षड्भिः कुलकम् । विजितपरभूमिक्रीडावापीषु निजवारविलासिनीक्रीडावर्णनार्थं प्रकृतनृपप्रकर्षप्रतिपादनपर्यवसानम् । चिहुरनिचयप्रतिलग्नस्नानकुङ्कुमारुणांशुकसुगन्धः अर्घति मङ्गलगृहीतैककुसुमदामोज्ज्वलो वेषः ॥

॥१६२॥ ईषदास्वादितमदिरामदप्रविरलसंबध्यमानस्वेदलवं शोभते मन्थरमन्दविलुलितनयनोत्पलं वदनम् ॥ नित्थामत्वेन मन्थरमिति ज्ञेयं पूर्वनिपातनियमाभावात् ॥

॥ १६३ ॥ शोभते जलार्द्रेण वाससा यद् आसंदानमवष्टम्भनं तेन विषमं कृत्वा मांसलितो घनीकृतश्चन्दनच्छेदो यत्र स तथा संक्रान्तपाटलामोदसुरभिशिशिर[1]: शुचिनरमज्जनवशात् स्तनाभोगः ॥

॥१६४॥ घूर्णते मधुरसविच्छुरितमालतीमुकुलकोमलाताम्रा निर्धौताञ्जनरमणीयपक्ष्ममूलोज्ज्वला दृष्टिः ॥

[1] MH. °सुरभिशिशिरशुचिरनम°. [2] MH. निधौता°.

विक्खिरिय-चिहुर-मञ्जरि-सिहा-परिक्खलिय-जल-लवालिद्धं ।
णिव्वाइ मउलिओणविय-णह-चुडुप्पङ्कुरं जहणं ॥ १६५ ॥
इय जस्स गिम्ह-दिवसावसाण-निम्माय-मज्जण-रसाहिं ।
लीला-वावीसु रिऊण संठियं वार-विलयाहिं ॥ १६६ ॥ ६

किंच ॥ १५
विवर-समोसरिअ-विराय-हेम-महिहर-रस-प्पवाहेहिं ।
पायालोआरिय-पिहु सिहोव्व पडिहाइ हव्व वहो ॥ १६७ ॥
वण-देवया-पसारिय-कर-अल-संवलिय-किसलय-कलावो ।
डज्झइ धूम–तमन्तरिय-महुयरं तियस-तरु-सण्डो ॥ १६८ ॥

॥ १६५ ॥ विक्षिप्तचिहुरमञ्जरीशिखापरिस्खलितजललवस्पृष्ट निर्वृतमुपरतवेदनं भवति मुकुलितावनतनखक्षताङ्कुरं जघनम् ॥

॥ १६६ ॥ इति उक्तप्रकारेण यस्य यशोवर्मणो ग्रीष्मदिवसावसाननिर्मितमज्जनरसाभिर्लीलावापीषु रिपूणां संबन्धिनीषु संस्थितं वारवधूभिः ॥ सोऽस्तीति प्रकृतम् । कुलकम् ॥

॥ १६७ ॥ इदानीं प्रलयशिष्यमाणबालकहरिलीलासदृशलीलत्वं वर्णयितुं पञ्चदशभिः कुलकमाह । विवरसमपसृतविलीनहेममहीधररसप्रवाहैः पातालापसृतपृथुशिख इव प्रतिभाति हव्यवाहः ॥ प्रलयसमये प्रलयाग्निविगलितस्य हेमगिरेः पातालरन्ध्रैः प्रविष्टाः सुवर्णरसप्रवाहा वह्निज्वाला इव हेमगिरिस्तु वह्निरिव विपरीतगतिः कालविपर्यासादुत्प्रेक्षितः ॥

॥ १६८ ॥ वनदेवताप्रसारितकरतलसंवलितकिशलयकलापो दह्यते धूमतमोन्तरितमधुकरस्त्रिदशद्रुमखण्डो नन्दनवनम् ॥ पुष्पप-

पज्जलइ धूम-मण्डल-णिह-विवलायन्त-लञ्छण-मयंव ।
निव्वडिय-फुलिङ्ग-च्छल-संगालिय-गहंव ससि-बिम्बं ॥१६९॥
भीसण-सरूय-परिसंठियंव जलणाहयंपि पडिहाइ ।
वेयाल-मण्डलं मुहल-मुह-गुहा-घोलिराग्गि-सिहं ॥ १७० ॥
कर-कलिय-खग्ग-लेहा-णिह-पढमुब्भिण्ण-धूम-लेहंव ।
डज्झइ मिहुणं विज्जा-हराण अविओय-वीसत्थं ॥ १७१ ॥

चयाय बाल्भ्यातिशयेन वा रक्षार्थं महाप्रलयेपि मौग्ध्याद्वनदेवतानां प्रसारितकरत्वम् ॥

॥ १६९ ॥ [1]प्रज्वलति धूममण्डलनिभपलायमानलाञ्छनमृगमिव निर्वृत्तस्फुलिङ्गच्छलसंवलितग्रहगणमिव शशिबिम्बम् ॥ ग्रहगणसंवलनोक्त्या सतामापदि न व्यभिचार इत्युक्तम् । मृगलाञ्छनपलायनाभिधानेन [2]चासञ्चरितम् । निभो व्याजः ॥

॥ १७० ॥ भीषणस्वरूपपरिसंस्थितमिव ज्वलनाहतमपि प्रतिभाति वेतालमण्डलं मुखरमुखगुहाघूर्णनशीलाग्निशिखम् ॥ अग्निना दह्यमानं म्रियमाणमपि चटमटाशब्दयोगान्मुखकुहरानिःसरज्ज्वालावलीकलापत्वाच्च विभीषिकार्थं कृतकपटरूपमिव भातीत्यर्थः ॥

॥ १७१ ॥ करकलितखड्गलेखानिभप्रथमोद्भिन्नधूमलेखमिव दह्यते मिथुनं विद्याधरयोरवियोगविश्रम्भम् ॥ दह्यमानस्य किल प्रथमं धूमलेखा भवति । विद्याधरयोश्च सुकुमारत्वात्खड्गलेखा धूमत्वेनोत्प्रेक्षितेति केचित् । तैजसत्वेन धूमाभाव इत्यन्ये । अवियोगेन च विश्वासो वेदनाया अगणनम् ॥

---

[1] MH. प्रज्वलितधूम°. [2] MH. चासञ्चरितम्.

जम-महिसो कवलिज्जइ जाला-संवेल्लिओ हुय-वहेण ।
बम्भण्ड-पडिप्फालिओणओव्व णिय-धूम-विच्छड्डो ॥ १७२ ॥
अमर रमणी-विहुव्वन्त-चामरुप्पङ्क-पवण-लोल-सिहो ।
भय-वेविरोव्व अल्लियइ कहवि विबुहाहिवं जलणो ॥ १७३ ॥
फुडिय-घण-वडल-पायड-तडि-च्छडा-सण्ड-निविडिओ जलइ ।
रवि-बिम्ब-वलय-बद्ध-प्फलोव्व जलणो नह-यलम्मि ॥ १७४ ॥
डज्झन्ति सरल-सुंकार दूर-विक्खित्त-सिहि-सिहा-णिवहा ।
तण्डविय-फणा मण्डल-पिण्डिय-धूमुग्गमा फणिणो ॥ १७५ ॥
उव्वहइ धूम-वलयं सेसो पट्ठि-परिसंठिउब्भेयं ।
देह-प्पहा-वियाणं हरिणोव्व णिवेस-संकन्तं ॥ १७६ ॥

॥ १७२ ॥ यममहिषः कवलीक्रियते ज्वालासंवेल्लितो हुतवहेन ब्रह्माण्डप्रतिस्खलितावनत इव निजधूमसमूहः ॥ यममहिषः कृष्णत्वान्निजधूमसमूह इव ब्रह्माण्डविधानप्रतिहतपरावृत्तो दह्यते ॥

॥ १७३ ॥ अमररमणीविधूयमानचामरसमूहपवनलोलशिखो भयवेपनशील इवालीयते कथमपि विबुधाधिपं ज्वलनः ॥

॥ १७४ ॥ स्फुटितघनपटलत्वाद् दग्धमेघसंघत्वात् प्रकटिता यास्तडितस्तासां छटासंघैर्निबिडितो घनीभूतो ज्वलति द्वादशानां रविबिम्बानां वलयमेव बद्धं फलं येन स इव ज्वलनः प्रलयाग्निः [ नभस्तले ] ॥

॥ १७५ ॥ दह्यन्ते सरलसूत्कारदूराविक्षिप्तशिखिशिखानिवहास्ताण्डवितफणामण्डले पिण्डितधूमोद्गमाः फणिनः ॥

॥ १७६ ॥ उद्वहति धूमवलयं शेषः पृष्ठपरिसंस्थितोद्भेदं देहप्रभावितानं हरेरिव निवेशनमुपवेशनं तत्र संक्रान्तम् ॥ शेषपृष्ठप्रसृता धूमवर्तिः पृष्ठोपविष्टकान्तिलतेव लक्ष्यत इत्यर्थः ॥

जलण-सिहा-संभाविय-सरीर-णिव्वावणा-निमित्तं व ।
डज्झइ ससि-मण्डल-कलस-दिण्ण-कण्ठ-ग्गहं मयणो ॥ १७७ ॥
रक्खा-भुयंगमुग्गिण्ण-विस-जलासार-विरलिउब्भेओ ।
अहिलेइ णिहि-ट्ठाणाइँ कहवि जलणो कुबेरस्स ॥ १७८ ॥
सोहइ वलन्त-वासुइ-परिवेस विढत्त-वियड-पडिबन्धो ।
दर-सिढिल-हर-जडा-पुञ्ज-पिञ्जरो सिहि-सिहा-निवहो ॥१७९॥
पडिहाइ जलण-जाला-पञ्जर-संजमण-पुञ्जियावयवो ।
उप्पत्ति-दियस-परिसंठिओव्व तणओ ति-णयणस्स ॥१८०॥

॥ १७७ ॥ ज्वलनशिखाभिः संभावितं व्याप्तं यच्छरीरं तस्य निर्वापण निमित्तम् उपशान्त्यर्थमिव दह्यते शशिमण्डलमेव कलशस्तत्र [दत्त] कण्ठग्रहं कृत्वा [ मदनः ] ॥ मदनस्य किल चन्द्रो दयितः । अतश्चन्द्रे दह्यमाने नष्टोसौ भवतितराम् । अत उदककलशमिव चन्द्रं परित्राणाय विगृह्य दह्यतेसाविति कविकल्पितम् ॥

॥ १७८ ॥ रक्षाभुजंगमोद्गीर्णविषजलासारेण विरलोद्भेदः अभिलीयते व्याप्नोति निधिस्थानानि [ कथमपि ज्वलनः ] कुबेरस्य संबन्धीनि ॥

॥१७९॥शोभते वलतो दाहभयेन परिवर्तमानस्य वासुकेर्यः परिवेषः । कुण्डलबन्धस्तेन विढत्तोर्जितो विकटो विततः प्रतिबन्धः कार्यविघातो येन स ईषच्छिथिलहरजटा [ पुञ्ज ] पिञ्जरः शिखिशिखानिवहः ॥

॥ १८० ॥प्रतिभाति ज्वलनज्वालापञ्जरसंयमनपुञ्जितावयवः उत्पत्तिदिवसपरिसंस्थित इव तनयस्त्रिनयनस्य ॥ तेजोमये हररेतसि कुमारः संभूत इति प्रथितम् ॥

---

इय पलयाणल-कवलिअ-सुरम्मि बम्भण्ड-कुहर-कुण्डम्मि ।
लीला कंसारि-सरूव-धारिणो जस्स निव्वडिया । १८१ ।

अहवा ।

मणि-सबल कुसुम-मालावबन्ध-पडिबद्ध-विब्भमा पढमं ।
जाया धूमाहय-वेणु-दण्ड-कविसा किणो वेणी ॥ १८२ ॥
किं णु हु कला निरन्तर-मियङ्क-पडिवक्ख-गण्ड-लेहं ते ।
दमणय-सिहाहमहिसाम-धूसरं वयणमेत्ताहे ॥ १८३ ॥

॥ १८१॥ इति उक्तप्रकारेण प्रलयानलकवलितसुरे ब्रह्माण्डकुण्डकुहरे लीला कंसारिस्वरूपधारिणो यस्य यशोवर्मणो निर्वृत्ता ॥ यस्य सोऽस्ति । कंसारिः कृष्णो बालविलासशाली । स एव शाली स एव यशोवर्मा तदवतारत्वात् ॥[संभक्ष्य सर्व[1]भूतानि कृत्वा चैकार्णवं जगत्। बालः स्वपिति यश्चैकस्तस्मै मायात्मने नमः ] इत्याद्यागमान्महाप्रलये भगवतोऽस्ति क्रीडाकारि बालत्वम् ॥ कुलकम् ॥

॥ १८२ ॥ अधुना रिपुवधनववृद्धवैधव्यसर्वाशासनवर्णनेन शत्रुवधदक्षत्वं यशोवर्मणो भणितुं दशभिर्गाथाभिः कुलकमाह । अत्र कुलकादौ अथवेति निपातसमुदायो वस्त्वन्तरोपक्रमद्योतनाय प्रयुक्त ॥ मणिभिः शबला व्यामिश्रा याः कुसुममालास्तासामवब-न्धनेन प्रतिबद्धा उपजनिता [वि] भ्रमा यस्या. सा तथाभूता या प्रथम-मभूत् सा जाता धूमाहतखण्डदण्डवत्कपिशा किणो कस्माद्वेणी संप्रति हे सुन्दरि सखि ॥ किणो इति कस्मादर्थे देशी निपातः ॥

॥ १८३ ॥ किं[2] नु खलु कलानिरन्तरमृगाङ्कप्रतिपक्षगण्डलेखं ते दमनकशिखावदभिश्यामधूसर वदनमिदानीं वर्तते ॥ किं कस्मात् । खु खलु । दमनकं नाम सुगन्धपत्रिका ॥ इयाहे इदानीम् ॥

[1] MH संभूतानि. The emendation is conjectural. [2] MH. प्र.

धारा-हय-धरणि-रणावरुद्ध-णव-कन्दली-सिहा-फरुसं ।
महुरमवगाढ-सोहं च वहसि विसमारुणं अहरं ॥ १८४ ॥
एयं पवण-पराहीण-सरल-लवली-दलाहिलोलं ते ।
पेच्छामि असंगय-मङ्गलावयंसं सवण-वासं ॥ १८५ ॥
सासय-मियङ्क-मणि-कलस-वेसमवसण्ण-हार-परिभोयं ।
णिरवसर-चन्दण-रसं तंचिय ते सुयणु थण वट्टं ॥ १८६ ॥
सरस-पडिवोह-लङ्घिय-कलम्ब-केसर-पिसङ्गमङ्गेसुं ।
लायण्णं चिर-निम्माण-खिन्न-कणय-च्छविं वहइ ॥ १८७ ॥

॥ १८४ ॥ जलधरधाराहतधरणिरेणुनिरुद्धनवकन्दलीशिखाव-त्परुषं स्वभावमधुरमवगाढशोभं च यदमृत्वद्वहसि विषमारुणमधरं संप्रति कस्मात् ॥ क्वचित्स्वाभाविकमरुणत्वं क्वचित्प्रदेशे म्लानमिति विषमारुणत्वम् ॥

॥ १८५ ॥ एतत्पवनपराधीनसरलसलवलीदलाभिलोलं ते संपश्याम्यसंगतमङ्गलार्थावतंसं मङ्गलार्थकर्णोत्पलविहीनं श्रवणपार्श्वं कर्णपालीम् ॥ लवली लताविशेषः ॥

॥ १८६ ॥ शाश्वतः परिपूर्णो यो मृगाङ्कस्तथा शाश्वतो मणिकलशस्तद्वेषो यस्य तत् तथा अवसन्नानां हाराणां परिभोगो यत्र तद्यदभूत् संप्रति निरवसरचन्दनरसं तदेवैतत हे सुतनु स्तनपट्टकं कस्माज्जातम् ॥

॥ १८७ ॥ सरस प्रत्यग्रो यः प्रतिबोधस्तेन लङ्घितः आक्रान्तो यः कदम्बनामा कुसुमविशेषस्तत्केसरवत्पिशङ्गं गौरम् अङ्गेषु लावण्यं यदभूत्संप्रति चिरनिर्माणं चिरघटितम् अत एव खिन्नसुरभोगेन मन्दप्रभं संपन्नं कनक तच्छविं वहते[1] कस्माज्जातम् ॥

[1] MH. प्रत्य.* [2] MH. •टे

उवमासु अपज्जत्तेह कलह-दन्तावहासमूरु-जुयं ।
तंचेय मलिय विस दण्ड-विरसमालक्खिमो इण्हिं ॥ १८८ ॥
हा किंणु अणव-कच्चूर-भङ्ग-विच्छाय-पाडले तरुणि ।
आवहसि इमे पडिवोह-कुण्ठ-कमल-प्पहे चलणे ॥ १८९ ॥
संचरइ चिर-परिग्गह-लायण्णुत्तिण्ण-वेस-सोहग्गो ।
सोच्चेय पुराणालेक्ख-धूसरो परियणो एस ॥ १९० ॥
इय अमुणिय-वेहव्वागमाहिँ आलोइऊण ता जस्स ।
रिउ सुन्दरीओँ रुज्जन्ति णेह-सरिसं पिय सहीहिं ॥१९१॥[10]

॥ १८८ ॥ उपमासु. विषयभूतासु [1]अपर्याप्तेभकलभदन्तावभासा यस्य तदपर्याप्तकरिकलभदन्तावभासमूरुयुग तदेव [2]मलितविसदण्ड-वद्विरसमालक्षयाम इदानीम् ॥

॥ १८९ ॥हा कष्ट कि नु एतदनवकर्च्चूरभङ्गस्थानवद्विच्छायत्वेन पाटलवर्णाभे तरुणि आवहसीमौ प्रतिबोधने आत्यन्तिकचिरजरठप्रबोधने कुण्ठमदृढ शिथिल यःकमल तद्वत्प्रभा ययोस्तौ मन्दकान्ती [3]चरणौ कस्मात् ॥

॥ १९० ॥सचरति [चिर] परिग्रहेण पुराणवस्त्रादिना लावण्या-दुत्तीर्ण वेषसौभाग्य यस्य स तथाविध स एव [4]पुराणालेख्येन चित्रेण तुल्यो धूसर परिजन एष ॥

॥ १९१ ॥ इति उक्तप्रकारेण अविदितवैधव्यागमाभिरालोक्य त. यस्य रिपुसुन्दर्यो रुद्यन्ते स्नेहसँरस कृत्वा प्रियसखीभिः ॥ सोस्ति यशोवर्मा । कुलकम् ॥

---

[1] MH अप्रासेभ [2] MH मलिन [3] MH चलनौ [4] MH, पुराणले

अह सो कयाहिसेओ समयम्मि णिमिल्लि-मेह-माहप्पे ।
चलिओ सयल-धरा-वलय-विजय-पडिबद्ध-ववसाओ ॥१९२॥

किंच जायं ।९

निवडइ परोप्परावडण-मुहल-मणि-मञ्जरी-कण-करालो ।
गयणाहि विबुह-विहुओ सुर-पायव-पल्लवुप्पीलो ॥ १९३ ॥
मङ्गल-लास-किलम्मन्त-सुर-वहू-कण्ठ-सीयलो वहइ ।
अभिण्ण-महुर-मन्दार-सुन्दरो सुर-वह-समीरो ॥ १९४ ॥

॥ १९२ ॥ अथ स कृताभिषेको वैदिकमन्त्रकृतस्नानविशेषः कृतप्रास्थानिकहोमःसमये शरत्काले निमीलितमेघमाहात्म्ये चालितः सकल-३धरावलयजयाय प्रतिबद्धाविकटव्यवसायः ॥

॥ १९३ ॥ इदानीं [1]सुरोचितचेष्टादिसूचितं विजयनिमित्तं नव-निबद्धेन कुलकेनाह ॥ निपतति परस्परापतनमुखरमणिमञ्जरीकणो-२त्करालो दन्तुरो गगनाद्विबुधविधूतः सुरपादपपल्लवोत्पीडः ॥ आपतनं संबन्धः । उत्पीडः समूहः । सुरपादपस्य पारिजातस्यान्येषां च कल्प-पादपानां [1]सुरैर्विधूननं [2]प्रहर्षात्पुष्पवृष्टिविमुक्तये ॥

॥ १९४ ॥ यशोवर्मप्रयाणकपरितुष्टानां सुरवधूनां यन्मङ्गललास्यं तेन क्लाम्यन्तीनां [ तासां ] श्रमस्वेदजललवालंकृतानां कण्ठानां शीतलो ३वहति ईषद्विलमधुरमन्दारसुन्दरः सुरपथसमीरः ॥ आभिन्न इत्याकार ईषदर्थः । भेदो विकासः । मधुराः सुगन्धाः । मन्दाराः स्वर्गकुसुम-विशेषतरवः । उद्भिन्नेति क्वचित्पाठः । तत्रापि ईषद्विकासोर्थः । तत्र ६सौगन्ध्यातिरेकात् ॥

[1] MH. सुरोचित.° [2] MH° विमुक्तयनय°

उत्तम्भिज्जन्ति नराहिवस्स समयं दिसा-गइन्देहिं ।
असरिस-पसत्थ-मणि-तोरणव्व वियडा कर-क्खम्भा ॥१९५॥
साणन्द-रोहिणी-बाहु वलय-पडिबद्ध-बीय-परिवेसो ।
जाओ पसण्ण-गह-मण्डलावलम्बी निसा-नाहो ॥ १९६ ॥
विब्भम-परिरम्भण्णोण्ण-मिलिय-मणि-दाम मुहल-थण-बिम्बो ।
लास-कय-कंस-तालोव्व चलइ सुर सुन्दरी सत्थो ॥ १९७ ॥
किरण-किलामिय-परियर-भुयंग-विस-जलण-धूम-तिमिरेहिं ।
उव्वेल्ल-महामणि-दन्तुरेहिं चलियं णिहाणेहिं ॥ १९८ ॥

॥ १९५ ॥ उत्तम्भ्यन्ते ऊर्ध्वं स्थाप्यन्ते नराधिपस्य समकालं कृत्वा दिग्गजेन्द्रैः । भाराक्रान्तत्वात् । न विद्यते सदृशो येषां ते असदृशा ये प्रशस्तमणयः इन्द्रनीलास्तन्मयतोरणा इव विकटाः करस्तम्भाः ॥

॥ १९६ ॥ सानन्दरोहिणीबाहुवलयप्रतिबद्धद्वितीयपरिवेषो जातः प्रसन्नग्रहमण्डलावलम्बी निशानाथः ॥ प्रसन्नेन गुरुसूत्रकेण ग्रहवलयेनैकेन कान्ताकरकटकेन प्रयुक्त इत्यर्थः ॥

॥ १९७ ॥ विभ्रमा विलासास्तैर्यः परिरम्भस्तेनान्योन्यं मीलितानि यानि मणिदामानि तैर्मुखराणि सशब्दानि स्तनबिम्बानि यस्य स लास्यकृतकंसताल इव चलति सुरसुन्दरीसार्थः ॥ स्तनयुगलानां च परस्परसंस्पर्शसमुत्थो मणीनां रवः कांसिकाध्वनिरिव ॥

॥ १९८ ॥ [ किरणक्लान्तपरिचरभुजगविषज्वलनधूमतिमिरैः उद्वेल्लित] महामणिदन्तुरैश्चलितं निधानैः ॥

वहइ माहिन्दो साणन्द-सुन्दरी-विहुय-वास-संवलियं ।
हरिसावसरम्मिवि विसम-वियसियं लोयण-सहस्सं ॥ १९९ ॥
रहसुद्ध-तिअस-करि-दन्त-दण्ड-परितुलिय-रवि-रह-तुरंगो ।
तोरण-निबद्ध-जय-पल्लवोव्व जाओ णह-वियाणो ॥ २०० ॥
इय से पसत्थ-पत्थाण समय-संभाविऊसव-वियासो ।
जाओ पहरिस-हीरन्त-सुहिय-हियओ तियस-लोओ॥२०१॥

॥ १९९ ॥ वहति महेन्द्रः सानन्दसुन्दरीविधूतवाससंवलितं, हर्षावसरेपि विषमविकसितं लोचनसहस्रम् ॥ यद्यपि हर्षवशेन सकललोचनविकासो हेतुवशोपनतस्तथापि विषमं कृत्वा विकसन्तीं नेत्रसहस्रीं वहति सहस्राक्षः । किंचित्सुविकसितं किंचिदविकसितमिति कस्मात् । सानन्दसुन्दरीविधूतवाससंवलितत्वात् । वासः कर्पूरादिवासितश्चतुःसमादिद्रव्यविशेषः । स हि [1]महोत्सवेष्वावर्तेषु सुरसुन्दरीभिः प्रकीर्यते नायकत्वङ्कादिषु ॥

॥ २०० ॥ रभसोद्वर्तितत्रिदशकरिदन्तदण्डपरितुलितरविरथतुरंगस्तोरणनिबद्धजयपल्लव इव जातो नभोवितानकः ॥ [2]गगनमेव करकुकम्॥ तत्र ऊर्ध्वं दण्डचतुष्टयं भवति । इहापि तत्स्थानापन्नं सुरकरिदन्तचतुष्टयम् । मुख्ये च करकुके पट्टविशेषा आच्छादनानि भवन्ति । तत्स्थानापन्नमिह नभः । करकुकतोरणस्थाश्च जयपल्लवा भवन्ति । तत्स्थानापन्ना इह रविरथस्था हरिदश्वा दन्तिदन्तदण्डोपरिवर्तिनः ॥ नरपतिप्रयाणकेऽत्र महेन्द्रस्य साहायकं कल्पितम् ॥

॥ २०१ ॥ [ इति तस्य प्रशस्तप्रस्थानसमयसंभावितोत्सवविका-

[1] MII. °मसादिद्रव्य° [2] MII. °महोत्सवावर्तेषु. [3] MII. गगनमिव करकुकम्.

अवि य । ६

आमूल-वलिय-वामोरु-वल्लरी-लङ्घिएयरोरु-लयं ।
तस-ट्ठिय दर परियत्तियङ्ग-दिट्ठेक-थण वट्टं ॥ २०२ ॥
विणियत्त-हार-वलयग्ग-मिलिय-मासल निअम्ब-पेरन्त ।
वलणा मडह ट्ठिय-मज्झ-कड्ढि ओव्वत्त-रोम-लयं ॥ २०३ ॥

श जात [1]प्रहर्षह्रियमाणसुखितहृदयलिखशलोक ] । कुलकम् ॥

॥ २०२ ॥ अधुना प्रदक्षिणाङ्गपरावृत्त्या राजदर्शनलीला [2]पुरसुन्दरीणा पङ्क्त्योपनिबद्धेन कुलकेनाह ॥ आमूलवलितवामोरुवल्लरीलङ्घिततरो[3]रुलत त्र्यश्रस्थितेपरपरिवर्तिताङ्गत्वेन दृष्टैकस्तनपृष्ठ सचित्रपरिसंस्थितमवस्थानम् ॥ पुरसुन्दरीणामित्यग्रेन्वय [4] । शोभाक्रियाया च वाक्यसमाप्ति । वल्लरीलता इवोरु । अर्थाद्दक्षिणोरुलता । वामेन लङ्घित । त्र्यश्रस्थितिस्तिर्यगवस्थानम् । दर ईषत् । एकस्तनपृष्ठ अर्थाद्वामम् ॥

॥ २०३ ॥ विनिवृत्तहारवलयाग्रमिलितमासलनितम्बपर्यन्त तथा वलनावशेनाकृष्टस्थित यन्मध्यं तेनाकृष्टा सती उद्वृत्ता उद्वेष्टिता रोमलता यत्र तत् ॥ अतोलितत्वेन[5] मध्यस्य वलिभङ्गाद् रोमलतोद्वेष्टनमित्यर्थ । मडहं स्पष्टमाकृष्टम् ॥

---

[1] MH is wanting in this part of the commentary though J P Dc. K give the text of the verse

[2] MH सुर०

[3] MH leaves out त before ०रा०

[4] MH सुरसु दरीणामन्यपदार्थ

[5] MH अतानितत्वन

सहि-खन्ध-ट्ठिय-दाहिण-पउट्ठ-वलिओणआणण-मियङ्कं ।
एक्केक्कम-णिविड-करम्बियङ्गुली-मिलिय-कर-किसलं ॥ २०४ ॥
परियत्त-सरल कुन्तल-णालञ्जिअ-दाहिण-त्थणद्धन्तं ।
लीला-वन्धुर-सीमन्त-पयड-चूडा-मणि च्छायं ॥ २०५ ॥
ओणविय-सवण-तवणिज्ज-मञ्जरी-रुद्ध-कुण्डलालोयं ।
वलियागयण्ण-ताडङ्क-मलिय-थण-कुङ्कुमा-लेक्खं ॥ २०६ ॥
इय वसुहाहिव-दंसण-वलन्त-णयणुप्पलावयंसाण ।
भवण-सिहरेसु पुर-सुन्दरीण परिसंठियं सहइ । २०७ । ६

॥ २०४ ॥ सख्याः स्कन्धे[1] आत्मीयः स्थितो यो दक्षिणः प्रकोष्ठः कराधारो बाहुपल्लवस्तत्र वलितः सन् अवनतो विश्रान्त आननमृगाङ्को
३ यत्र तत् एकैकम अन्योन्यनिबिडं कृत्वा करम्बिता निबिडत्वमापादिता अङ्गुल्यो ययोस्ते मिलिते करावेव किसलये यत्र तत् ॥ सखीपश्चाद्भागे-वष्टम्भनत्वेन स्थितात्र [2]ज्ञेया ॥

॥ २०५ ॥ परिवृत्तेन सरलेन कुन्तलनालेनाञ्चितः स्पृष्टो दक्षिण-स्तनस्यार्धान्तोवयवो यत्र तत् लीलया वन्धुरितेवनते सीमन्ते सति
३ प्रकटा चूडामणिच्छाया यत्र तत् ॥

॥ २०६ ॥ अवनमिता या श्रवणे कर्णे तपनीयमञ्जरी तया रुद्धः कुण्डलस्यालोको दर्शनं यत्र तत् वलितागतेनान्येन । वामेन अर्थात् ।
३ ताडङ्केन कर्णाभरणेन [3]मलिता स्तनकुङ्कुमलेखा यत्र तत् ॥ मिलियपाठे मिलितार्थत्वम् । ताडङ्कः कर्णाभरणम् ॥

॥ २०७ ॥ इति वसुधाधिपदर्शनमंवृत्तनयनोत्पलावतंसानां भव-

---

[1] MH. °त्संस्त. [2] MH. निभि॰त. [3] MH. °सारो.

१निंच । ३

अज्जवि जस्स हराणल जालावलि-संभमं भरन्तस्स ।
कुसुम-कविसे असोएवि झत्ति दिट्ठि समुव्विवइ ॥ २०८ ॥
सोवि ससि वन्धवो जाण दंसणे पणइणीण कोवङ्कं ।
कुणइच्चिय कुन्द-सिहा-कसाय गण्ड-त्थलं वयणं ॥ २०९ ॥
दिट्ठे पहुम्मि अवलाण ताण आविद्ध चन्दण-कसाओ ।
वासिओ अङ्गेसु समन्त-पीण कण-कब्बुरो सेओ ॥२१०॥ ३

नगिखरेषु पुरसुन्दरीणां परिसास्थित शोभते ॥ पश्चाद्भागव्यवस्थितस्य नृपस्य परावृत्त्या सर्वत्र दर्शनं विवक्षितम् ॥ कुलकम् ॥

॥ २०८ ॥ अज्जवीत्यादिभिस्त्रिभिर्विशेषकम् ॥ अद्यापि यस्य हरानलज्वालावलीसभ्रम स्मरत कुसुमकपिशे अशोकेपि झगिति दृष्टि. समुद्विजते ॥

॥ २०९ ॥ सोपि शशिबान्धवो यासां पुरस्त्रीणां दर्शने सत्युत्पन्नाभिलाषत्वात्प्रणयिन्यो रतिप्रीत्योर्वदन कोपाङ्कं करोत्येव कुन्दाशिखाकषायगण्डस्थलम् ॥

॥ २१० ॥ दृष्टे तस्मिन्प्रभौ स्त्रीणां तासामाबद्धचन्दनकषाय· उषितोऽङ्गेषु समन्तात्पीनकणत्वेन कर्बुर स्वेदः ॥ शशिबान्धव· काम । प्रणयिन्य काम्कान्ता रत्यादय ॥ हरपरिभवसमर्थस्यापि कामस्य यासां दर्शनेन लुब्धस्यावधीरितरत्यादिकस्य अत एव कोपितनिजजायस्य क्षोभो भवति ता अपि यं दृष्ट्वा क्षुभ्यन्ति स कामादप्यधिकसौन्दर्यो यशोवर्मेति तात्पर्यार्थ । विलया महेला । पीनचन्दनकणकर्बुरत्वमेव न कर्दम ॥

दिट्ठी सचन्दणेसुं आरोविय-रोयणेसु रमणीण ।
तस्स निसण्णा पुण्णाह-रयय-वत्तेसुव्व मुहेसु ॥ २११ ॥

अविथ । ४०

समरेसु खग्ग-धारा-गयाएँ पडिपेल्लिऊण रिउ-खग्गं ।
दिट्ठो सिरीएँ तं णील-मणि-कवाडन्तरेणंव ॥ २१२ ॥
जा सुहडासि-णिवासा संकन्तायस-मलव्व सामाइ ।
सा दोस-रए साणेव्व फुरइ तइ णिम्मला लच्छी ॥ २१३ ॥

॥२११॥ दृष्टिः सचन्दनेष्वारोपितरोचनेषु रमणीनां तस्य निषण्णा पुण्याहरजतपात्रेष्विव मुखेषु ॥ पुण्यदिनेषु रजतपात्राण्यारोपितगोरोचनानि भवन्तीति तुल्यत्वं सुन्दरीवदनैः ॥ प्रयाणगतस्य नृपतेर्मङ्गलार्थं रजतपात्राणि पौरैरुपनीयन्ते । अतस्तेषु च युगपद्दृष्टिर्निषण्णेत्ययमप्यर्थोऽत्रास्ति ॥

॥ २१२ ॥ समरेष्वित्यादिचत्वारिंशता गाथाभिर्महाकुलकम् ॥ समरेषु खड्गधारागतया प्रतिप्रेर्य रिपुखड्गं दृष्टः श्रिया त्वं नीलमणिकवाटान्तरेणेव ॥ समरे तु इति क्वचित्पाठः । अत्र तुशब्दस्त्वशब्दस्यार्थे प्रयुज्यते[2] । श्रीः शोभा लक्ष्मीश्च । किल सानुरागा स्त्री संनिहितं प्रेर्य अपसार्य दूरवर्तिनमपि प्रियतमं कवाटवातायनान्तरालादिना पश्यति । सानुरागदृष्ट्या च [3]विजितश्रियं त्वामेव रणे जयलक्ष्मीरवलम्बत इति द्योतितम् । बन्दिनां चैवमादिका ज्ञेया स्तुतिपरंपरा ॥

॥ २१३ ॥ सदा सुभटासिनिवासात् सक्रान्तायसमलेव श्यामायते या दोषरता दुर्जनप्रिया । लक्ष्म्याः प्रायेणाविवेकिनि जने

[1] MH. तुशब्दः.....प्रयुक्त. [2]MH. विजितश्रियस्त्वा°.

तुह जाइ-मच्छरेणव णरिन्द उब्भिउडिणा णडालेण । [1]
सयल-णडालाइंचित ठवियाइँ पणाम मग्गम्मि ॥ २१४ ॥

पुरओ पुरओ तुम्हारिसेहिँ वियडेहिँ भूमिवालेहिँ ।
विवरीयग्ग सरूवोव्व एस परिवड्डिओ वंसो ॥ २१५ ॥

सहइ णरिन्द परिणओ मग्गोप्पिय-दण्ड-पाविय-त्थामो ।
सिरि-सुन्दरीएँ पासे तुह धम्मो सोविअल्लोव्व ॥ २१६ ॥

२दर्शनात् । सा केवलं स्फुरति त्वयि निर्मला लक्ष्मीः ॥ सइ सदा ।
णवर केवलम् । स्वभावदुष्टाया लक्ष्म्याः सुभटखड्गधाराहरणीयत्वात्खड्ग-
लोहमलसंक्रमणेनेव मालिन्यं जातमिति कल्पना । सैवंभूतापि च त्वा
६न विकरोतीति महाप्रभावस्त्वं भवत इत्युक्तं भवति ॥

॥ २१४ ॥ तव जातमत्सरेणेव हे नरेन्द्र स्वभावोद्भुतभ्रुकुटिना ।
सुभटानामेवमादिलक्षणकत्वात् । ललाटेन सकलानि रिपुललाटान्येव
२स्थापितानि प्रणाममार्गेषु ॥ अप्रकुपितेपि त्वयि स्वभावस्थितोर्ध्वभ्र-
कुट्यादिघोराकारदर्शनमात्रेणैव रिपवः प्रणतास्तव सपत्ना इति
तात्पर्यार्थः ॥

॥ २१५ ॥ पुरतः पुरतः अग्रे अग्रे भवादृशैर्विकटैर्भूमिपालैर्विपरी-
३ताग्रस्वरूप इव [एष] परिवर्धितो वंशः ॥ दारुवंशः किल स्थूलमूलो
भवति क्रमेण चोपर्युपरि तनुतनुतरादिरूपः । भवादृशैस्तु उन्नतचरितैर्नृ-
पवंशस्य वैपरीत्यमानीत परिपुष्टाग्रत्वसंपादनात् ॥

॥ २१६ ॥ शोभते हे नरेन्द्र परिपाकं प्राप्तस्तथा मार्गे सापराध-
३लक्षणेर्पितो दण्डस्तेन प्रापित स्थाम बलं यस्य स मार्गार्पितदण्डप्रापि-
तस्थामा श्रीसुन्दर्याः पार्श्वे तव धर्मः सोमहल्ल इव कञ्चुकीव ॥

---

1 MH. मच्छरेणेव.

दीहर-पयाव-मूलं लच्छी पास-ट्ठिया जसुग्घायं ।
कञ्चण-दण्डंपिव धवल-चामरं तुज्झ धारेइ ॥ २१७ ॥
विहवायन्तारि-वहू-समूह-पडिभग्ग-वलय-रासि-णिहा ।
तुह जस-कूडुक्केरा दिसासु सयलासु दीसन्ति ॥ २१८ ॥
भरिमो असिं तु संगर-फुरन्त-मायङ्ग-मोत्तिय-मऊहं ।
धारा-जलुत्त-विसमिव सिरीएँ पिय-गेह-णलिणीए ॥ २१९ ॥
भीय-परित्ताण-मइं पइण्णमसिणो तुहाहिरूढस्स ।
मण्णे सङ्का-विहुरे ण वेरि-वग्गेवि अवयासो ॥ २२० ॥

॥ २१७ ॥ दीर्घप्रतापो जगद्व्यापिप्रभावो मूलं दण्डस्थानीयं यस्य तं लक्ष्मीः[पार्श्वे] स्थिता यशःसंघातं काञ्चनदण्डमिव धवलचामरं धारयते यस्य ॥ स त्वं विराजस इति शेषः ॥

॥ २१८ ॥ विधवायमानारिवधूसमूहप्रतिभग्नधवलवलयनिभास्तव यशःकूटोत्करा यशसो राश्याकारा उत्करा दिक्षु सकलासु दृश्यन्ते ॥

॥ २१९ ॥ स्मरामः असिं खड्गं तव संबन्धिनं संगरस्फुरन्मातङ्गमौक्तिकसमूहं धाराजलोप्तबिसमिव श्रियाः प्रियगृहनलिन्याः । प्रियनलिनीगृहत्वात् ॥ तुशब्दस्तवशब्दस्यार्थे । रिपुकरिशिरोदारणेनोभयधारालग्नानि मौक्तिकानि यशोवर्मणः खड्गे लक्ष्मीनिवासभूते । तत्रोत्प्रेक्ष्यते । नलिनीगृहनिवसनप्रियत्वाल्लक्ष्म्यास्तत्र व्यायामोपजातजललवधारे करवाले धाराजलमाश्रित्य नलिनीबीजं मृणालिकालक्षणमिवोप्तमिति कल्पना कवेः ॥

॥ २२० ॥ भीतपरित्राणमयीं प्रतिज्ञामसेस्तवारूढस्याहं मन्ये शङ्काविधुरे शङ्काव्याकुले वैरिवर्गेपि नावकाशः ॥ तस्यापि भीतत्वेन त्रातव्यत्वात् ॥

कोऊहलेण आहव-पलोइया गारवोप्पिय-करेण ।
पट्ठीओ परामुट्ठा तुमाइ पणयाण वेरीण ॥ २२१ ॥
णिवसिज्जइ जय-वारण-कुम्भ-विभेय-क्खमे तुह असिम्मि ।
तदियसं मुत्ता-कोस-संचयासाएँव सिरीए ॥ २२२ ॥
सो णत्थिच्चिय इह जो णरिन्द णेहिइ णडाल-वट्टं वो ।
अच्छीहिन्तो करुणा-मयाइँ णणु वारि-बिन्दूइं ॥ २२३ ॥

॥ २२१ ॥ कौतूहलेनाहवे विलोकितानि गौरवार्पितकरेण पृष्ठानि परामृष्टानि त्वया प्रणतानां वैरिणाम् ॥ स्मराम इत्यनुषङ्गः । ये दुर्दमा वैरिणो नान्येन केनापि कदाचनापि परिभूता पलायिता वा ते त्वयैव भग्नाः पलायिता दृष्टपृष्ठाश्च । अतः कौतुकेन अत्यादरेण च तेषां त्वया पृष्ठं परामृष्टं सेवकत्वमापन्नानाम् । मदतिरिक्तसकलरिपुपरिभवविभवा भवन्त इति भणता प्रोत्साहयतेति वयं स्मराम इति वैतालिकोक्तितात्पर्यम् ॥

॥ २२२ ॥ न्युष्यते निवासः क्रियते जयवारणकुम्भविभेदक्षमे तवासौ खड्गे प्रतिदिवसं मुक्ताकोशसंचयाशयेव श्रिया ॥

॥ २२३ ॥ स नास्त्येवेह यो हे नरेन्द्र नेष्यति ललाटपट्टं वो युष्माकम् आक्षिभ्यामपसार्य करुणामयान् ननु वारिबिन्दून् ॥ पराजितान्दैन्ययुक्तान् शत्रून्दृष्ट्वा कृपयोत्पन्ना येऽश्रुजलबिन्दवस्तान्नेत्राभ्यामपसार्य कोपोत्पादनद्वारेण भयाद्वा ललाटदेशं यो नेष्यति स प्रतिपक्षस्तव नास्त्येवेत्यर्थः । नन्वित्यसमावनायाम् ॥

अहवा

उप्पयणायर-संपिण्डिअङ्ग-गिरि-णिवह-गारवोणमियं ।
सव्वायर-वोढव्वं जायं सेसस्स महि-वेढं ॥ २२४ ॥
पक्खन्तराल-परियत्तमाण-रवि-मण्डला णह-यलम्मि ।
होन्ति अणागय-संगय-कुलिसा इव सेल-संघाया ॥ २२५ ॥
मारुअ-भरन्त-कन्दर-गारव-परिमन्थरं वलग्गान्ति ।
वेय-वियसन्त-पायव-णूमिय-कडयन्तरा गिरिणो ॥ २२६ ॥

॥ २२४ ॥ इदानीं पर्वतपक्षक्षपणदक्षोपि सहस्राक्षस्त्वच्चरितोत्पन्नचमत्कारः कम्पत इत्यर्थदर्शनदक्षं द्वादशभिर्गाथाभिरवान्तरकुलकमाह । अहवा । अत्यल्पं पूर्वोक्तम् इदं बहुतरं त्वय्यस्ति चरितजातं तदाकर्ण्यतामिति बन्धाभिप्रायः ॥ उत्पतनादरेण संपिण्डिताङ्गस्य गिरिनिवहस्य गुरुत्वातिशयेनावनामितं सर्वादरवोढव्यं जातं शेषस्य महीपीठं महीवलयम् ॥ स्वावयवान्सर्वदलेन निष्पीड्य पक्षिण उड्डीयन्त इति स्वभावः ॥

॥ २२५ ॥ पक्षान्तराले पक्षमध्यभागे परिवर्तमानरविमण्डला नभस्तले भवन्त्यनागतसंगतकुलिशा इव शैलसंघाताः ॥ उड्डीनानां पक्षान्तरालेषु संक्रान्तो रविकिरणसमूहो गिरीणामेवमुत्प्रेक्ष्यते भविष्यन्नपि स्वलद्वज्रसंबन्धो वर्तमानीभूत इति ॥

॥ २२६ ॥ मारुतभ्रियमाणकन्दरत्वेन यद्गुरुत्वं तद्वशान्मन्थरं कृत्वा अवलगन्ति गगनमारोहन्ति वेगविकसत्पादपस्थगितकटकान्तरा गिरयः ॥

आरोहन्ति णह-यलं तारुज्जोइय-गुहा-मुहाहोआ ।
अण्णोण्ण-पेहुणाणिल-हीरन्त-विसण्ठुला सेला ॥ २२७ ॥
मुक्क-तुसारासारं लीलुड्डीणम्मि तुहिण-सेलम्मि ।
वेवइ अच्छक्कागय-हिमकाल-किलामिओ लोओ ॥ २२८ ॥
उप्पयण रुद्ध-गयणा दूरुग्गम-निव्वडन्त-णह-लहुया ।
सूएन्ति मूल-मडहं खमग्ग-वियडंव धरणिहरा ॥ २२९ ॥
दूर-यरं उप्पइया अद्ध-वहत्थमिय-णिज्झर-तुसारा ।
दीसन्ति वियड-लहुया पणट्ठ-काया महा-गिरिणो ॥ २३० ॥

॥२२७॥ आरोहन्ति नभस्तलं तारोद्योतितगुहामुखाभागोः। अन्योन्यपक्षानिलह्रियमाणत्वेन विसष्ठुलाः शैलाः ॥ पेहुणा पक्षाः ॥

॥ २२८ ॥ मुक्तुषारासारं कृत्वा लीलयाप्युड्डीने तुहिनशैले वेपते कम्पते अच्छक्के अकाण्डे असमय एव आगतो यो हेमन्तस्तेन क्लान्तो लोकः ॥ लीणुड्डीणेति पाठे भूमौ निलीयोड्डीन इत्यर्थः ॥

॥ २२९ ॥ उत्पतनरुद्धगगना दूरोद्गमेन निर्वर्तमानं व्यज्यमानं प्रकटीभवद्यन्नभस्तेन हेतुना लघवः । दूरोड्डीनानां महतामपि लघुत्वदर्शनात् । सूचयन्ति मूलमडहं मूलदेशेऽल्पं चैतदाकाशमग्रे प्रान्ते विकटं विततमिव धरणीधराः ॥ मूर्तद्रव्याभाव आकाशमिति केषांचिद्दर्शनम् । मीमांसकादीनां चाकाशद्रव्यं प्रत्यक्षम् । तत्र नयनव्यापारे निकटोड्डीनेषु गगनमूलमल्प दूरगतेषु तु तदेव विततीभूतं विततान्न निरीक्ष्यत इति तात्पर्यार्थः ॥

॥ २३० ॥ दूरतरमुत्पतिता अर्धपथे अस्तमिता नष्टा निष्ठिताः

जं जं समुप्पयन्ता मुयन्ति सेला णहङ्गणुद्देसं ।
तं तं पुञ्जिय-बहलो भरेइ मुहलुब्भडो पवणो ॥ २३१ ॥
पासोसरन्त-तल-मग्ग-घडिय-कम-लहुय-मासल-च्छाया ।
उड्डन्ति पक्ख-वियलिअ-दिग्गय-दाणोज्झरा गिरिणो ॥२३२॥
एन्ति गयणोसरन्तेसु कहवि उम्मुह-समीर-हीरन्ता ।
थोउप्पइय-णिविट्ठा सेलेसु विहङ्ग-संघाया ॥ २३३ ॥

समासविगलनक्रिया निर्ज्झरतुषारासारा येषु ते दृश्यन्ते विकटलघवः प्रनष्टकाया महागिरयः ॥ नीरतुषारशून्यकन्दरत्वेन विकटाः कराला उद्भटगृहव दृश्यन्ते[1] निःसारतया च लघवो विभाव्यन्ते । अत एव प्रनष्टकाया इव प्रतिभान्ति । यथाक्रमेण दूरदूरतरदूरतममार्गगामिनः सन्तः स्थूलसूक्ष्मदृष्टिक्रमेण दृश्या विनष्टा इव संपद्यन्त इति तात्पर्यार्थः ॥

॥ २३१ ॥ यं यं समुत्पतन्तो मुञ्चन्ति शैला नभोङ्गणप्रदेशं तं तं पुञ्जितबहलो बिभर्ति पूरयति मुखरः सशब्द उद्भटश्च प्रचण्डः पवनः ॥

२३२ ॥ पार्श्वेभ्योपसरन्तो तलमार्गे च घटिता क्रमेण लघ्वी श्यामला छाया येषां त उड्डीयन्ते पक्षविलुलितदिग्गजदाननिर्झरा गिरयः ॥

॥ २३३ ॥ आगच्छन्ति गगनादपसरत्स्वागच्छत्सु परावृत्य कथ-कथमप्युन्मुखेन समीरणेन ह्रियमाणा ऊर्ध्वं नीयमानाः स्तोकोत्पतितनिविष्टाः शैलेषु विहङ्गसंघाताः ॥ किल शैलेषु वेगेनावतरत्सु तन्मूर्ति-

[1] MH seems to be corrupt here, reading उद्भट.°

ओयरण विसंसिज्जन्त-रवि अरालोअ-चञ्चल-च्छाया ।
दीसन्ति पविरलाओंव वेउद्ध दला वणालीओ ॥ २३४ ॥
इय जण णहङ्गण-गोयराण खुडियाओं पक्ख मालाओ ।
सेलाण सोवि तं चिन्तिऊण अन्दोलइ महिन्दो ॥ २३५ ॥
अणु धारं संदट्टेभ-मोत्तिए तुह असिम्मि सच्चविया ।
लीला दर-दाविय हार मेत्त-पयडव्व जय-लच्छी ॥ २३६ ॥

प्रतिबद्धो वात उर्ध्वं वेगेन गच्छन्गिरिशिखराश्रया-पक्षिणोपहृत्योर्ध्वं नयति । ते च व्याकुला कथमपि क्लेशन स्वाश्रय प्राप्नुवन्तीति तात्पर्यार्थं । शैलेष्विति विषयसप्तमी । एन्तक्रियाकर्मत्व तु शैलानामवार्थाद्भविष्यति ॥

॥ २३४ ॥ अपसंरणेन विशेष्यमाणो भिन्नदेशत्वमापाद्यमानो यो रवेरालोकस्तेन चञ्चला छाया यासा ता दृश्यन्ते प्रविरला इव वेगेन पवनसबन्धिना ऊर्ध्वदला ऊर्ध्वपत्रा वनाल्यो विपिनपङ्क्तय ॥

॥ २३५ ॥ इति उक्तेन प्रकारेण [ येन ] नभोङ्गणगोचरणा खण्डिता पक्षमाला शैलाना सोपि तं यशोवर्माण चिन्तयित्वा आन्दोलन्न दोलाधिरोहमिवानुभवति { महेन्द्र } ॥ महाप्रभावत्वान्मदीय पदमाक्रम्यतीति शङ्कते महेन्द्र । अवान्तरकुलक द्वादशभिरिह गिरिगतम् ॥

॥ २३६ ॥ खड्गधारा लक्षीकृ य सलग्नेभमौक्तिके दलितारिकुञ्जरशिरस्त्वेन तवासौ खड्ग सच्चविया सत्या कृता निश्चिता लीलयेषद्दर्शित यत् हारमात्र हारैकदेश खड्गधारालग्नकतिपयमौक्तिकलक्षणस्तेन प्रकटमिव कृत्वा जयलक्ष्मी ॥ हारैकदेशस्य [1]वरनायिकालंकरणचिह्नस्य दर्श-

[1] MH °नायका°

अयसेण रिऊण करम्बियाओ कित्तीओ तुह धरिज्जन्ति ।
कुवलय-दल-संवलिया मालइ-मालाओव दिसाहिं ॥ २३७ ॥
पडिबद्धं नवर तुमे नरिन्द-चक्कं पयाव-वियडंपि ।
गह-वलयमणुच्छित्ते धुवेव्व परियत्तइ णरिन्द ॥ २३८ ॥

नेन खड्गे तव जयश्रीर्वसतीति निश्चितमिति तात्पर्यार्थः । क्वचिच्छमुवारमिति पाठः । वारंवारं प्रतिक्षणं संदृष्टेभमौक्तिके खड्ग इत्यर्थः ॥

॥ २३७ ॥ अयशसारिसंबन्धिना करम्बिताः कीर्तयस्तव धार्यन्ते कुवलयदलसंवलिता मालतीमाला इव दिग्भिः ॥ कुवलयं नीलोत्पलम् । मालती सुमनःकुसुमानि । अत्र च दिशो नायिकात्वेन कल्पिताः ॥

॥ २३८ ॥ प्रतिबद्धमाभिमुख्येन बद्धमिव नवरं केवलं तुमे त्वयि नरेन्द्रचक्रं राजसमूहश्चाणक्यप्रसिद्धद्वादशारिवर्गलक्षणः प्रतापविकटे* ग्रहवलयम् अनुत्थिते ध्रुव इव परिवर्तते प्रदक्षिणां करोति हे नरेन्द्र ॥ प्राकृते च लिङ्गव्यत्यय इष्टो बहुशः । क्वचित्तु पयावावियडंपीति पाठः । तत्र प्रतापविकटमपीति स्पष्ट एवार्थः । अणुच्छित्ते इति तद्भवम् । तद्भवस्तत्समो देशी त्रिविधः प्राकृतक्रम इत्युक्तम् । तत्रानुत्थिते अनुत्क्षिप्ते[1] इति वा संस्कृतमस्य मूलम् । राज्ञोनुत्थितत्वमनुद्धृतत्वं[2] स्फीतत्वं विनीतत्वं विवक्षितम् । ध्रुवे तु न विद्यते उत्थित उन्नतो यस्मादन्यः सोनुत्थित इत्यप्यर्थः । राज्यपि चायं ननु युज्यते । [3]अनु-

MH. °नुक्षित. [2]MH. °मनुद्दत्तत्वं. MH. [3]अनुत्थित°.

णिरसिम्मि जए विप्फुरइ नवर एक्को असी तुहच्चेय ।
जो पावइ निय-जस-सोम-मण्डले लञ्छण-च्छायं ॥ २३९ ॥
सविमो अणज्जुणमिमं अमहिन्दमवासुइं च अप्पाणं ।
सेवञ्जलि दंसण गुण-कहासु तुह जं ण पज्जत्तं ॥ २४० ॥
णिवडइ पडण-समुच्छलिय-जलण-कण-जाल-जडिल-धारग्गो ।
विमुह-गह मण्डलायड्ढिओव्व खग्गो तुह रिऊसु ॥ २४१ ॥

रिक्षिप्तत्वमरिनरेन्द्रस्य अन्येनातुलितत्वम् । ध्रुवस्य त्वन्येनोन्नमय्य सर्वोप-
११र्यनेन स्थापनम् । स्वत एवोन्नतपदेऽवस्थिते ॥

॥ २३९ ॥ समरे करे* विस्फुरति केवलमेकोऽसिः खड्गस्तवैव । यः प्राप्नोति [1]निजयश एव सोमश्चन्द्रः । अतिशौक्ल्यात् । तन्मण्डले लाञ्छनच्छायाम् ॥ कलङ्ककान्तिमिति केचित् । निन्दास्तुतेश्चात्र लाञ्छनं चिह्नमित्यपरे ।

॥ २४० ॥ शपामहे आक्रोशामो निन्दामः अनर्जुनम् । असह[2]स्रबाहुत्वाद्युगपदञ्जलिशतपञ्चकसंपादने सामर्थ्याभावात् । अमहेन्द्रम् । असहस्राक्षत्वादानन्दोत्फुल्ललोचनसहस्रेण दर्शने शक्त्यभावात् । अवासुकिं च । बहुश्रवणत्वेन युगपदगणितगुणगणकथाकर्णकौशलाभावात् । आत्मानम् आत्मने सेवाञ्जलिदर्शनगुणकथाकर्णनेषु त्वयि यस्मान्न पर्याप्तम् ॥ तथास्माकमात्मानमित्यर्थः । यो न पर्याप्तो बह्वञ्जल्यादिद्वारसेवासंपादने तस्मै शपामहे । आत्मनो इति वा व्याख्या कर्तव्या । द्रष्टुं [3]वणामित्यर्थः ॥

॥ २४१ ॥ निपतति लोहमयकवचादिपतनवशसमुच्छलितज्व-

[1] MH. निज एव यश एव [2] MH. महस्र°. [3] MH. पण°.

तुह पडिवक्खेसु भया कत्थवि अविलासमावसन्तेसु ।
आरोवेइ ण कायर-गणणाएँव चावमसमसरो ॥ २४२ ॥
सुहडायड्ढिय-कोयण्ड-चण्ड-रव-दारुणे रणे तं सि ।
परिरद्धो भीयाएँव सहसा गाढं जय सिरीए ॥ २४३ ॥
सोहइ समागमेसुं अहिय-पयाव-प्पईव-मालासु ।
वावारेन्ती कण्णुप्पलंव खग्गं तु जय-लच्छी ॥ २४४ ॥

लनकणज्वालाजटिलधाराग्र. । उत्प्रेक्ष्यते । विमुखेन प्रतिकूलेन पक्ष्मादिकेन भौमादिग्रहमण्डलेनाकृष्ट इव खड्गस्तव रिपुषु ॥

॥ २४२ ॥ तव प्रतिपक्षेषु भयात्क्वाप्यविलासं सदुःखं कृत्वा आवसत्सु आरोपयति न कातरगणनयेव चापम् असमशरो विषमबाणः कामः ॥

॥ २४३ ॥ सुभटाकृष्टकोदण्डचण्डरवदारुणे रणे त्वमसि भवसि नूनं परिरब्ध आलिङ्गितो [ भिया ] इव सहसा गाढं जयश्रिया विजयलक्ष्म्या ॥

॥ २४४ ॥ शोभते समागमेष्वहितप्रतापप्रदीपमालासु व्यापारयन्ती कर्णोत्पलमिव खड्गं तव जयलक्ष्मीः ॥ [1]नवनायिका हि प्रौढतमम् अधिकप्रताप कान्तं कामयितुं सलज्जत्वात् सति दीपे न शक्नोति दीपोपशमनाय कर्णोत्पलं व्यापारयतीति दृष्टम् । अत्र पक्षेऽधिकप्रतापस्य नायकस्य समीपे या दीपमालास्तासु कर्णोत्पलव्यापारणम् । जयपक्षे तु अधिकप्रतापा रिपव एव दीपमालास्तासु खड्गकर्णोत्पलवारणम् ॥



[1]MH. °नायिका.

जं इयरोवद्दव-विदुआवि मज्जन्ति तुह रिऊ नाह ।
बहु-रूया ता धाराओ णवर तुह मण्डलग्गस्स ॥ २४५ ॥
पणइ यणत्थं आमुयइ कणयमिणमो इह ट्ठिया लच्छी ।
कवयावडिया असिणो तु णेन्ति णामी सिहि फुलिङ्गा ॥२४६॥
कोवेणव कय-कम्पं रहसुद्ध-परिट्ठियाएँ घडियाइं ।
तुह तज्जणीएँ कज्जाइं चण्ड-भुय-दण्ड दूईए ॥ २४७ ॥
आरूढो पासाय क्कमेण तह तं सि उवरि लोयस्स ।
एक्को य सो जहा वो अण्डय-ब्रन्धायए मउली ॥ २४८ ॥

॥ २४५ ॥ यदि इतरेण स्वापेक्षयान्येन कृतं यदुपद्रवण तेन विद्रुता अपि मज्जन्ति तव रिपवो हे नाथ बहुरूपास्ता धारा केवलं तव मण्डलाग्रस्य ॥ मण्डलाग्र खड्ग. । तस्यैव केवलस्य बह्व्यो[1] धारा बहुशक्तिका धाराः यतः काश्चित्प्राप्य शत्रून्द्रावयन्ति काश्चिदप्राप्यैव प्रतापमात्रोत्साहभङ्गान्रिपूञ्जनयन्ति[2] ॥

॥२४६॥ प्रणयिजनार्थमामुञ्चति कनकम् इणमो एतत् इह स्थिता खड्गेवस्थिता लक्ष्मी कवचाकृष्टाः कवचाभिघातोत्थिता असेः खड्गात्तव निर्यान्ति नाम्नी शिखिस्फुलिङ्गा अग्निकणाः ॥ इत्यपद्धतिः । खड्गाभिघातोत्थिता नाम्नी वह्निकणा । किं तर्हि । प्रणयिजनार्थं खड्गस्थया तव जयश्रिया सुवर्णमेवमेतदुत्कीर्णमिति समुदायार्थः ॥

॥ २४७ ॥ कोपेनेव कृतकम्पं कृत्वा रभसोर्ध्वपरिष्ठितया घटितानि कार्याणि तव तर्जन्या चण्डभुजदण्डदूत्या ॥ प्रतापातिशयात्तर्जनीमात्रेणैव शत्रवो वशं गता गता भवन्तीत्यर्थ ॥
॥ २४८ ॥ आरूढ. पार्श्वाक्रमणेन[3] तथा त्वमस्येकश्चैकोपि स

---

[1] MII बह्वो [2] MH ज॰यन्त्यः. [3] MII. °क्रमणान.

वाहु-सिहरेसु दीसइ कामिणि-संकामिएण मंय-तिलओ ।
भू-भारुव्वहण-त्तसा परिट्टिओ पङ्क-लेसोव्व ॥ २४९ ॥
भुमयग्ग-भमिर-लच्छी-चलणालत्तय-णिहो तुवि फुरइ ।
अवयंसारुण-मणि-मञ्जरी-भवो राय-विच्छड्डो ॥ २५० ॥
होन्ति कयत्था पणई णह-माला-चलण-रोहणे तुज्झ ।
आयम्व-मणि-गुहाओव्व विसिऊण पणाम-संकन्ता ॥ २५१ ॥

यथा वो युष्माकम् । व्यत्ययेन बहुवचनम् । तवाण्डकबन्धायते अण्डकबन्ध इवाचरति मौलिर्मुकुटम् ॥ अण्डकबन्धो देवगृहशिखरे आमलसारकः । तथा त्वं नीतिशास्त्रचोदितक्रमानुसारेण पार्श्वस्थान्भूमिपालानभिभूयोन्नतिं प्राप्तो यथा तव मौलिर्देवगृहस्य शिखरमिव लोकैर्भाव्यत इति तात्पर्यार्थः ॥

॥ २४९ ॥ बाहुशिखरे* दृश्यते कामिनीसंक्रामिते* भवत्तिलके भूभारोद्वहनार्दैरपरिष्ठितः पङ्कलेश इव ॥ समुचितभोगभुगपि पृथिवीपालनं न मुञ्चसि वराहदेहहरिरूपश्च प्रतिभासीति तात्पर्यम् ॥

॥ २५० ॥ भ्रुवो यदग्रप्रान्तस्तत्र भ्रमणशीला या लक्ष्मीस्तस्याश्चरणयोर्यदलक्तकं तन्निभस्त्वयि स्फुरति अवतंसे लग्ना ये अरुणमणयस्तेषां या मञ्जरीमाला तद्भवस्तत्प्रभवस्ततः प्रतिफलितः । कान्तालिङ्गनवशात् । रागविच्छड्डो रागसमूहः ॥ शौर्यातिशयभाजां भ्रूभङ्गे जयश्रीर्वसतीत्युपमानं कविकल्पनया भ्रुकुटिमात्रवशीकृतशत्रुत्वात्स्वशृङ्गारपरत्वमुचितम् । यथोक्तम् । सुखं हि फलमर्थस्य तदभावे वृथा श्रिय इति कामन्दाकिना ॥

॥ २५१ ॥ भवन्ति कृतार्थाः प्रणयिनश्चरणनखमालारोहणे ।

अल्लीणा रहसागम-परिवत्तिय-केसवंसुय-धरव्व ।
कवय-दलणुग्गयाणल सिह-च्छला वो आसि लच्छी ॥२५२॥
इय जो थुव्वइ पहरिस-पूर-परिक्खलिअ-विसम-कण्ठेहि ।
वन्दीहिँ कइन्देहिँ अ भूअत्थेहिंचिअ गुणेहिं ॥ २५३ ॥
इय चाडु-चउर-चारण-संचारिअ-चन्द-चारु-चरिएण ।
नयराओँ णर-वरिन्देण णिग्गयं णिग्गय-जसेण ॥ २५४ ॥

वज्रमणिनिभृचरणनखेपु पादपतननिमित्तप्रतिबिम्बलाभे सतीत्यर्थः । तव आताम्रमणिगुहा इव विवराविशेषानिव प्रविश्य प्रभावसंक्रान्ता मणिमन्त्रौपधादिप्रभावेन प्रविष्टाः सिद्धाः ॥ विरोधेन तिष्ठतां रिपूणां सर्वनाश करोति यशोवर्मा प्रणतानां तु तेषामेव प्रसाददानेनाभ्युदयातिशयं संपादयतीत्यर्थः ॥

॥ २५२ ॥ आलीना रभसा वेगेन यदागमनं तेन परिवर्तित केशवस्य कृष्णस्य संबन्धि [1]अंशुकवरमुत्कृष्टं पीतांशुकं[1] यया सेव कवचदलनोद्गतानलशिखाच्छलाद्वो युष्माकं संबन्धिनमसिं खड्गं लक्ष्मी. ॥ शौर्यातिशयोत्पन्नाभिलापातिशयात्त्वरिताम्बरमिव भ्रान्त्या परिधाय तव खड्गमालीना श्रीरित्युत्प्रेक्षित वन्युक्तौ कविना ॥

॥ २५३ ॥ भूतार्थविनिवेशितगुणैर्यथार्थविनिवेशितगुणैरनेन प्रकारेण य स्तूयते प्रहर्षपूरपरिस्खलितविपमकण्ठैर्वन्दिभिः कवीन्द्रैश्च ॥ किं च इतरभूतान्यपि तैरेव गुणैः स्तूयन्ते । तद्गुणैरभूतगुणा अप्युपमीयन्त इत्यर्थ. ॥

॥२५४॥ [2]इयमधिकापि क्वचिद्गाथा दृश्यते । [3]बुलकनिराकाङ्क्षाकारिणीति व्याख्यायते ॥ इति चाटुचतुरचारणसंचारितचन्द्रचारुचरितेन

[1] MH. अनुकवरमुत्कृष्ट पीतांशुक वरमुत्कृष्ट पीतांशुकं यया.

[2] MH. See *Various Readings*. [3]MH. °वैराकाक्षाकां°.

किंच । ८

जयपचमाणस्स सरीर-चारिणो गब्भ-वसाहि-गेहेसु ।
जाण परिअत्तणणेव आवत्त-गईओ णिव्वडिया ॥ २५५ ॥
जे कुङ्कुम-त्थलीसुं केसर-भङ्गारुणेहिं दावेन्ति ।
पइ परिहोअंव महीए णव-णहङ्कं खुर-वएहिं ॥ २५६ ॥
जे पोह-खण-परिट्ठिअ-संखाय-प्फेण-पिण्ड-घडिएहिं ।
हेसा-रवेहिं पूरिअ-पयाण-सङ्खव्व दीसन्ति ॥ २५७ ॥
आयाण-गरगय-च्छवि-विच्छड्डाडम्बरेण मुञ्चन्ति ।
जे वाल-जव-रसंपिव सयराहा पीयमङ्गेहिं ॥ २५८ ॥

२ नगराज्ञवरेन्द्रेण निर्गतं निर्गतयशसा प्रमृतयशस्केन ॥ यदेयं तदा नपूर्वा गाथा यदा तु सा तदा नेयमित्याहुः । महाकुलम् ॥

॥ २२५ ॥ अधुना नरपतिवरप्रयाणकालावसरे वरतुरंगान् गाथाष्टकोपनिबद्धेन कुलकेन वर्णयति । जवपचमानो नाम सुजात्यश्वानां
२ वायुविशेषोऽन्तरश्चरणः प्राणो मनोजवः । तस्य शरीरचारिणः या गर्भवसतयो गर्भशय्यास्ता एव गृहाणि तेषु येषां परिवर्तनेनेव आवर्तनेनेव आवर्तगतयोपि विशुद्धा आवर्ता विनिर्मिताः ॥

॥ २५६ ॥ ये कुङ्कुमवर्णासु स्थलीषु केसरभङ्गवदरुणैर्दर्शयन्ति पतिपरिभोगमिव मह्याः पृथिव्या नवनखाङ्कम् अभिनवरताचिह्नं
२ खुरपथैः ॥

॥ २५७ ॥ [ ये ] प्रोथो मुखप्रान्तस्तत्र क्षणप्रतिष्ठितः संस्थानः काठिन्यमापन्नः फेनपिण्डस्तेन परिघटितैर्हेषारवैः पूरितप्रयाणशङ्खा
२ इव सहन्ति शोभन्ते ॥

॥ २५८ ॥ आयानं नामाश्वाभरणविशेषः । तत्र लग्नानां मरकतानां

[1] MH. ष.

दिण्णाओ पणालीओव्व सम-वारि-विणिग्गमाअ धारेन्ति ।
परिछिण्ण-मज्झ-रेहा-णिहेण जे जहण-बन्धेण ॥ २५९ ॥
मग्गेसु गुरु-बला वेअ-गाढ-निवडन्त-कोडि-टङ्केहिं ।
उच्चरिऊणंव लिहन्ति जे टयारे खुर-उडेहिं ॥ २६० ॥
जे अज्जवि हिम-सेलन्त-संभवा अणह-सीअ-विअणव्व ।
गुरु-तेअ-प्पसर-रसा ठाणेच्चिय किंपि कम्पन्ति ॥ २६१ ॥
आरूढ-जोह-निवहा ते तस्स तरङ्गिणो जय-तुरंगा ।
मृअन्तिव्व पहरिसं जाया पुरओ णरिन्दस्स ॥ २६२ ॥ ८

याश्छवयः कान्तयस्तदाडम्बरेण[1] तद्व्याजेन मुञ्चन्ति ये [2]बालयवरसमिव सयवारा शतवारम् । सयराहा इति पाठे झगित्यस्यार्थे देशीपदम् । पीतमङ्गैः ॥

॥ २५९ ॥ दत्ताः परिघटिताः प्रणालिका इव श्रमवारिनिर्गमाय धारयन्ति परिच्छिन्नमध्यरेखानिभेन ये जघनबिम्बेन ॥

॥ २६० ॥ मार्गेषु गुरुबलवेगगाढनिपतत्कोटिटङ्कैरुच्चार्येव लिखन्ति ये टकारान् खुरपुटैः ॥ तक्षलोहकारप्रभृतीनां रूपविशेषोत्खननभाण्डं टङ्कः । कोटयः प्रान्ताष्टङ्का इव तैः ॥

॥ २६१ ॥ ये अद्यापि हिमशैलान्तसंभवत्वात् अनघशीतवेदना इव गुरुतेजःप्रसररसाः स्थानस्थिता एव किमपि कम्पन्ते ॥ तेजस्विनोऽश्वाःस्वभावादेव कम्पमाना आसते । तत्रोत्प्रेक्ष्यते । हिमवत्प्रभवत्वेनेव अनघशीतवेदनाक्रान्ता वेपन्त इति । हिमवत्प्रभवत्वं चाश्वानां कविपरंपरया प्रतीतम् । अप्सुजोऽश्व इति श्रुतिरपि ॥

॥ २६२ ॥ आरूढयोधनिवहास्ते तस्य तरङ्गिणो लावण्यतरङ्गधा-

---

[1] MM. कांतयस्तदादंडबरेण. [2] HH. ये बावलयवरस°

उवहाणंपिव लीला-वलिय-ट्ठिय-पिहु-करत्तणा देन्ति ।
जे वियड-दन्त-पलङ्क-कय विवेसाऍ लच्छीए ॥ २६३ ॥
दीसन्ति जाण परियत्त-चलण-दलियारि-सीस-भावेण ।
अज्जवि कवाल-सयलव्व पास-खुत्ता णह-क्खण्डा ॥ २६४ ॥
असरल-लीला-गइ-वियलियाहिँ जे तीहिँ दाण-धाराहिं ।
राय-सिरीऍ रयन्तिव विलास-वेणी-लयं सुरहिं ॥ २६५ ॥
पासाल्लियाण जे पडिगयाण खुत्तग्ग-दन्त-भावेण ।
विब्भम-मुणाल-दण्डेहिँ रुहिर-सलिलंपिव पियन्ति ॥ २६६ ॥

रिणो जयतुरंगाः सूचयन्तीव प्रहर्षं याताः पुरतो नरेन्द्रस्य॥ कुलकम्॥

॥ २६३ ॥ इदानीं गजवर्णनं गाथासप्तकोपनिबद्धेन कुलकेनाह । उपधानमिव अभिषेककलशोदकमिव लीलावलितस्थितपृथुकरत्वाद् ददति [ ये ] विकटदन्ताः पर्यङ्का इव तत्र कृतनिवेशाया लक्ष्म्याः॥ किल पर्यङ्कविशेषोपविष्टायाः श्रीमहादेव्या नृपवरेणाभिषेकः क्रियते अन्तःपुरवधूमध्ये प्राधान्यसिद्धये । तद्वदिह दन्तिदन्तस्थिताया लक्ष्म्याः करिभिः करगण्डूषनीरविसरद्वारेण अभिषेक इव दीयते ॥

॥ २६४ ॥ दृश्यन्ते येषां परिवृत्तचरणदलितारिशिरस्त्वेन अद्यापि कपालशकलानीव पार्श्वब्रुडिता नखखण्डाः ॥ सुलक्षणगजानां चरणपर्यन्तेष्वतिशुक्ला[1] नखा भवन्ति । तत्रैवमुत्प्रेक्षा कृता । गजानां चरणदलितरिपुनरमस्तकत्वेन विजितानेकसंग्रामत्वं द्योतितम् ॥

॥ २६५ ॥ न विद्यते सदृशी यस्याः सा असदृशी सा चासौ लीलागतिस्तद्वशेन विगलिताभिर्ये तिसृभिर्दानधाराभिर्मदवारिप्रवाहैः राजश्रियो रचयन्तीव विलासवेणीलतां सुरभिं सुगन्धिम् ॥

॥ २६६ ॥ पार्श्वाक्रान्तानाम् उत्पातपातितद्विरदानां ये प्रतिगजानां

[1] MU. °र्यन्तेष्वतिशुक्ला.

जे चञ्चच्चामर पम्हलेहिँ सोहन्ति कण्ण-तालेहिं ।
उप्पयण तरल पक्खव्व तियस गय जुज्झ-बुद्धीए ॥ २६७ ॥
सुत्त णिवेसंपिव देन्ति दीहरं दाण-वारि-धाराहिं ।
पडि-वासरं पवित्थारिणीएँ जे पत्थिव-सिरीए ॥ २६८ ॥
ते तस्स जय-गइन्दा सिय-पिट्ठन्तरिअ-सामल च्छाया ।
सरयावणीय-कलुसा जाया पुरओ जलहरव्व ॥ २६९ ॥ ७

किञ्च जाय । ७

पवरि य थोअ-त्थोअं अग्घन्ति निसीढ-मुहल कल-हंसा ।
दर दूमिआरविन्दा असारसूरायवा दिअसा ॥ २७० ॥

क्रुडितदन्ताग्र येन हेतुना विभ्रमकारिभिराश्चर्यभूतैरतिस्थूलशुद्धकोमलैर्मृणा-
३ लदण्डैर्विशालपुणै रुधिरसलिलमिव पिबन्ति ॥

॥ २६७ ॥ ये चञ्चच्चामरपद्मलै शोभन्ते कर्णतालै । उत्पतन-
तरलपक्षा इव त्रिदशगजयुद्धबुद्ध्या ॥

॥ २६८ ॥ सूत्रनिवेशमिव मर्यादामिव इयद्दूर त्वयाद्य सरणीयमिति
ददति दीर्घं कृत्वा दाननीरधाराभि प्रतिवासर प्रतिस्तरणशीलाया ये
३ पार्थिवश्रिय ॥ यावती हि परभूमिं मत्तदन्तिन आक्रामन्ति तावती
राजश्रियो विषय इत्युत्प्रेक्षा ॥

॥ २६९ ॥ ते तस्य यशोवर्मणो जयगजेन्द्रा सितेन पिष्टेन तन्दु-
लचूर्णादिना अन्तरितश्यामलच्छाया शरदपनीतकालुष्या याता पुरतो
३ जलधारा इव ॥ कुलकम् ॥

॥ २७० ॥ अधुना सप्तभि कुलकं हेमन्तवर्णनार्थम् । अनन्तर
स्तोकस्तोक कृत्वा अर्घन्ति शोभन्ते शीतोपजनितशरीरकम्पानिशीथमु-

कासार-विरल-कुमुआ अमलिअ-विच्छाय-चन्द परिवेसा ।
होन्ति वहलावसाया पहाय-सिसिरा णिसा-वन्धा ॥ २७१ ॥
घोलइ अलद्ध-किरणो तुसार-लव-लम्भ-धूसर-च्छाओ ।
रविणो अलम्बुसा-कुसुम पाडलो बिम्ब-परिणाहो ॥ २७२ ॥
अग्घन्ति सिसिर-सलिला अणिउञ्चिय-कोञ्च-सारस-विरावा ।
खल-चुण्णिय-कलमामोय-वाहिणो गाम-सीमन्ता ॥ २७३ ॥
कं व ण हरन्ति णिविडावसाय-संभिण्ण-सामल-करीसा ।
गोहण-विणिवेसुद्देस-धूसरारण्ण-पेरन्ता ॥ २७४ ॥

स्वरकलहंसाः ईषत्तापितान्यरविन्दानि यत्र ते असारसूर्यातपा *दिवसाः ॥*

॥ २७१ ॥ प्राकृतेपि पूर्वनिपातनियमो नास्ति । तेन विरल-कुमुदकासाराः । कासारः समूहः । अमृदितविच्छायचन्द्रपरिवेषा भवन्ति वहलावश्यायाः प्रभातशिशिराः । क्वचित्पहावसिसिरा, इति पाठः । तत्र प्रभावशिशिरा इत्यर्थ । निशावन्धा रात्रिप्रवन्धाः ॥

[ ॥ २७२ ॥ घूर्णते अलब्धकिरणस्तुषारलवलम्भधूसरच्छायो-रवेरलम्बुषाकुसुमपाटलो बिम्बपरिणाहः[1] ॥ ]

॥ २७३ ॥ अर्घन्ति शोभन्ते शिशिरसलिला अनिकुञ्चितः अवक्रीकृतः ! हेमन्तारम्भमात्रत्वात । क्रौञ्चानां सारसानां च विरावा यत्र खलचूर्णितकलमामोदसुरभयो ग्रामसीमन्ताः । गामपेरता इति पाठे ग्रामपर्यन्ता इत्यर्थ ॥

॥ २७४ ॥ कं वा न हरन्ति स्वीकुर्वन्ति कस्य चित्तं निवि

[1]MH. पाडल°. MH. omits, though the text given in J. P. De. K.

अक्कन्त-करीसुम्हा-सुह-णिकम्प-जहणं विणिक्कमइ ।
कहवि जडायव-परिभोय-मन्थरं रोहिणी-जूहं ॥ २७५ ॥
इय हेमन्त समिद्धासु गाम सीमासु मेइणी-णाहो ।
दिट्ठिं दिन्तो पत्तो कमेण सोणङ्कमुद्देसं ॥ २७६ ॥
मलिया पूय-प्फल-कोस-वडण-रज्जन्त-पल्लला तस्स ।
सेणा-भडेहिँ णव-सालि-सालिणो गाम-सीमन्ता ॥ २७७ ॥
मत्त-कुररासु दिट्ठी सहरी-विप्फुरण-कम्पिय-जलासु ।
वीसमइव वञ्जुलिणीसु ताण आहार-लेहासु ॥ २७८ ॥

डावश्यायसभिन्नत्वेन श्यामलकरीषा गोधनविनिवेशोद्देशधूसरारण्य-
३ पर्यन्ताः । गोधन गोव्रजः[1] ॥

॥ २७५ ॥ आक्रान्तो यः करीषस्य गोमयस्योष्मा तेन सुख-
युक्तानि तत एव निष्कम्पाणि शीतकृतकम्पशून्यानि जघनानि यस्य
३ तत् विनिष्क्रामति [ कथमपि ] जडातपपरिभोगेन मन्थर मन्दगमनं
रोहिणीयूथं गोमण्डलम् ॥

॥ २७६ ॥ इति हेमन्तसमृद्धेषु [p. 80] ग्रामसीमसु मेदिनीनाथो दृष्टि
ददत् प्राप्तः क्रमेण शोणाख्यनदाङ्कित प्रदेशम् । कुलकम् ॥

॥ २७७ ॥ मलिता [ मर्दिता. ] पूगफलकोशपतनरज्यमानतृ[2]-
णादिपल्लवास्तस्य सबन्धिभिः सेनाभटैर्नवशालिशालिनो ग्रामपर्यन्ताः ॥

॥ २७८ ॥ [ मत्तकुररासु ] दृष्टिः शफरीविस्फुरितकम्पितज-
लासु विश्राम्यतीव वञ्जुलिनीषु तेषां सेनाभटानां जलाधारलेखासु ॥
३ कुरराः पक्षिविशेषाः । वञ्जुलो वेतस । [4]ताणमिति वृत्तभङ्गभया
न्मान्तत्वम् ॥

---

[1] MH. adds उद्देश after गोव्रज. [2] MH रज्जमान°. [3] MH जलाधारालेखासु
[4] The MSS. J P D. read the third pâda as given in our text, and not ताणमा°. As for K see *Various Readings*.

ताण णिसम्मइ हियय‍ं अणाविलाहार-सलिल-सुहयासु ।
आ-मञ्जरी-परिग्गह-सुयन्ध-कलमासु सीमासु ॥ २७९ ॥

ल्हसमाण-जुओवत्तिय-तुरंगम-क्खन्ध-केसरुप्पङ्को ।
उम्मुह-धुरं समारुहइ जत्थ रविणो रहो कहवि ॥ २८० ॥
वाहिं-गयाण जस्स य णत्थिच्चिय णह-यलंति पडिवत्ति ।
कन्दर-परिट्ठियाण य सोच्चिय णत्थित्ति पडिहाइ ॥ २८१ ॥
वहु-कुहराविल-कडयत्तणेण णह-महि-अलन्तर-णिवेसो ।
गहिऊणव वसुहद्धं जो गयणद्धं च निम्मविओ ॥ २८२ ॥

॥ २७९ ॥ तेषां सेनाभटानां निशाम्यति निषीदति विश्राम्यति हृदयम् अनाविलाधारतया सुभगसलिलेषु आसमन्तान्मञ्जरीपरिग्रहेण
३ सुगन्धाः कलमाः शालयो येषां तेषु [sic] सीमसु ॥

॥ २८० ॥ अधुना सेनानिवासप्रस्तावेन विन्ध्यं वर्णयति पञ्चकोपनिबद्धेन कुलकेन । ह्रसता पश्चाद्भागं पतता [1]युगेनोद्वर्तितस्तुरङ्गमस्कन्ध-
३ केसराणाम् उप्पङ्को समूहो यत्र स उन्मुखधुरं कृत्वा समारोहति यत्र रवेः संबन्धी रथः कथमपि क्लेशेन ॥

॥ २८१ ॥ बहिर्गतानां यस्य च नास्त्येव नभस्तलमिति प्रतिपत्तिः कन्दरपरिष्ठितानां च सोपि* चँ नास्तीति प्रतिभाति ॥ तद्गुहासु
३ स्थितानां विन्ध्योपि नास्तीति प्रतीतिः प्रतिपत्तॄणामपि महत्त्वेन दरीणाम् । ततस्तु बहिर्निर्गतानां च गुहाकाशापेक्षया सकलमपि नभस्तलं न किंचिदिति प्रतिपत्तिर्भवतीति महत्वातिशयोक्तिरियं विन्ध्यस्य ॥

॥ २८२ ॥ बहुकुहराविलत्वेन व्याकुलत्वेन बहुकटकत्वेन च महीनभस्तलान्तरनिवेशो महीनभस्तलयोरन्तरे मध्ये निवेशः प्र-

[1] MH युगेना°.

जेण णहो-गय-सिहरेण कुहर-पसरिय-णहङ्गणेणं च ।
अण्णोण्णं कीलिय-णिच्चलोव्व णह-महि-गलुन्छङ्गो ॥ २८३ ॥
विञ्झम्मि तम्मि रस-सुरहि-सल्लई-भङ्ग-णिव्वुअ-गयम्मि ।
रोह-णिरन्तर-ताली-वणम्मि जाओ महि-णाहो ॥ २८४ ॥

अवि य । ५२

वन्दी-कय-महिसासुर-कुल-कण्ठुम्मोइएहिँव तुमाए ।
माहवि घण्टा-दामेहिँ मण्डियं तोरण द्दारं ॥ २८५ ॥

वेशो यस्य स तथा । बहुमहाकुहरत्वेनाकाशमिव विन्ध्येन्तर्गतं वितमपरिमितकटक येन[1] पृथिवी चान्तर्गता तत्र भाति । अत एव गृहीत्वेव वसुधार्धं यो गगनार्धं च निर्मितः प्रजापतिनेति ज्ञायते इति महत्त्वातिशयोक्तिरियमपि । बहुकुहरविलेति क्वचित्पाठः । तत्र च बहूनि च तानि कुहररूपाणि विलानीत्यर्थः ॥

॥ २८३ ॥ येन नभोगतशिखरत्वेन कुहरप्रसृतनभोङ्गनत्वेन च अन्योन्यं कीलितौ अत एव निश्चलाविव नभोमहीतलोत्सङ्गौ ॥

॥ २८४ ॥ जातिवर्णनम् । विन्ध्ये तस्मिन् रससुरभिसल्लकीभङ्गनिर्वृतगजे प्ररोहनिरन्तरतालीवने यातो[2] महीनाथः ॥ कुलकम् ॥

॥ २८५ ॥ अधुना विन्ध्यवासिन्याः स्तोत्रं राजकर्तृक कुलकेन द्वापञ्चाशद्गाथोपनिबद्धेन निदर्शयितुमाह । बन्दीकृतं बद्ध्वा आनीतं यन्महिषासुरकुल तस्य कण्ठादुन्मोचितैरिव त्वया हे माधवि घण्टादामभिर्मण्डितं तोरणद्वारम् । भक्तजननिबद्धासु घण्टास्वेवमुत्प्रेक्षा । माधवी गौरी ॥

---

[1]MH विततमा [2]MH जनो

दिट्ठं साहेज्जारूढ-तुहिण-गिरी-खण्ड-दिण्ण-पीढं व ।
महिसासुरस्स सीसं तुह चलण-णह-प्पहा-भरियं ॥ २८६ ॥
भमरावलिओ भइरवि तुज्झ भवणाइरम्मि सामोए ।
थुइ-मेत्तुम्मोइअ-जन्तु-णिअल-माला-ओ व लुठन्ति ॥ २८७ ॥
णणु तुम्हं संभरणे रणम्मि विहडन्ति वारण-घडाओ ।
दूराउ-च्चिय वाहण-मइन्द-रव-विदुयाउव्व ॥ २८८ ॥
तुह चण्डि चलण-कमलाणुवत्तिणो कह णु संजमिज्जन्ति ।
सेरिह-वह-सङ्किय-महिस-हीरमाणेणव जमेण ॥ २८९ ॥

॥ २८६ ॥ दृष्टं साहाय्यारूढतुहिनगिरिदत्तखण्डपिण्डमिव महिषासुरस्य शिरस्तव चरणनखप्रभाभिर्भृतम् ॥ हिमवता दुहितुः साहाय्येन हिमपिण्ड इवाहितो नखप्रभासमूहो महिषासुरशिरसि प्रचितस्तद्वधावसरे दृष्ट इत्यर्थः ॥

॥ २८७ ॥ भ्रमरावलयो हे भैरवि तव भवनाजिरे गृहाङ्गणे सामोदे कुसुमधूपादिगन्धविशेषवति स्तुतिमात्रमोचितजन्तुनिगडमाला इव लुठन्ति ॥ स्तुतिमात्रेण विगलिताः संसारबन्धनमाला इव भ्रमरपङ्क्तय उत्प्रेक्षिताः सादृश्यात् ॥

॥ २८८ ॥ ननु तव स्मरणे सति रणे विघटन्ते पलायन्ते वारणघटा दूरादेव वाहनमृगेन्द्ररवविद्रुता इव ॥

॥ २८९ ॥ तव हे चण्डि चरणकमलानुवर्तिनो जनाः कथं नु संयम्यन्ते । न कथंचिद्बध्यन्त इत्यर्थः । सैरिभो महिषः । महिषासुरस्य यो वधस्तेन शङ्कितो यो महिषो यमवाहनभूतस्तेन ह्रियमाणेनेव यमेन ॥ एतदुक्तं भवति । त्वत्पादभक्तास्तावद्विमुच्यन्ते संसार-

तुहिण-इरी देवि तुमाइ जणय-भावेण गारवं नीओ ।
विञ्झायलोवि कन्दर-निवास-लीलाएँ कल्लाणि ॥ २९० ॥
सोहसि नारायणि रणिर-णेउराराव-मिलिअ-हंस-उले ।
भवणम्मि कवालाविल-मसाण-राएणव भमन्ती ॥ २९१ ॥
अद्धेण सरीरेच्चेय णवर ससि-सेहरस्स तं वससि ।
हियए उण से संकरि तुह-अविहाएण ओयासो ॥ २९२ ॥

बन्धनात् । अतो यमेन न संयम्यन्ते । तत्रेयमुत्प्रेक्षा । त्वया महिषरूपोऽसुरो हतस्तद्भयाद्यमवाहनीभूतेन महिषेण नयमानेनापि त्वच्चरणकमलभक्तजनसंनिधिमुपसर्तुमशक्नुवता भयेन यमोऽन्यत्रापहृत्य नीयत इति संयमनेऽसमर्थ इति ॥

॥ २९० ॥ तुहिनगिरिर्हे देवि त्वया जनकभावेन जन्यजनकसंबन्धेन गौरवं नीतः । यतो गौर्या अयं पितेति सुताभावेनाराध्यतां प्रापितः । विन्ध्याचलोपि कन्दरनिवासलीलया हे कल्याणि । गौरवं त्वया नीतः ॥

॥२९१ ॥ शोभसे हे नारायणि रणन्नूपुरारावमिलितहंसकुले[1] भवने गृहेपि कपालाविलश्मशानानुरागेणेव भ्रमन्ती ॥ अतिशौक्ल्याद्धंसानां कपालसादृश्यादेवमुत्प्रेक्षा । भवनस्थाया अपि भगवत्या बीभत्सरसस्तस्यापि विवक्षितत्वान्नूपुररणत्कारसूचितशृङ्गारेण विरोधः ॥

॥ २९२ ॥ अर्धेन शरीर एव केवलं शशिशेखरस्य त्वं व सासि । हृदये पुनरस्य[2] हे शंकरि नित्यानन्दात्मकसाक्षात्कारिणि तवाविभागेनावकाशः ॥ हरसंबन्धिनो[3] महाप्रभावात् हृदयाविभागेन महाप्रभावत्ववर्णनमेतत् ॥

---

[1]MH. omits रणन्०. [2]MH. omits अस्य.
[3] MH. हरसंबन्धिनि महाप्रभावत.

खलिओ तइँ रहसुक्खित्त-मणि-तुला-कोडि-कुण्डलाहरणो ।
सिङ्गो भङ्ग-ट्ठविय-वलय-बन्धोव्व महिसस्स ॥ २९३ ॥
तुह दारं थाम-त्थाम-दिण्ण-रुहिरोवहारमाभाइ ।
हर-पणय-रोस-विसासिय-संज्झा-सयलावइण्णंव ॥ २९४ ॥

॥ २९३ ॥ स्खलितं पतितमुत्पाटितं त्रोटितं वा त्वया रभसोत्क्षिप्तमणितुलाकोटिकुण्डलाभरणं[1] शृङ्गं भङ्गपदस्थापितवलयबन्धमिव महिषस्य ॥ सङ्गो इति प्राकृते छन्दसीव लिङ्गव्यत्ययस्तेन शृङ्गमिति संस्कारः रभसेत्यादि[2] भङ्गेत्यादि च शृङ्गविशेषणे । त्वया स्खलितमीषदुत्पाटितं स्वस्थानादच्युतं शृङ्गम् आयासवशपरिच्युतोत्क्षिप्तमणिकुण्डलवलितमूलं सत् एवमुत्प्रेक्ष्यते । भङ्गपदे[*] मूलस्थाने भङ्गक्षेपार्थं स्थापितवलयबन्धमिव ॥ रभसोत्क्षिप्ततुलाकोटिमणिकुण्डलाभरणमिति च योजनीयम् । तुलाकोटिः काकतालीयम् । रभसात् महिषासुरमारणार्थप्रयासायासवेगेन यदुत्क्षिप्तमूर्ध्वं क्षिप्तं नीतं मणिकुण्डलं तदेव तुलाकोट्या काकतालीयेन शृङ्गस्याभरणीभूतं प्रान्तेन प्रविष्टं मूले विश्रान्तं सत् । अथ वा तुलाकोट्यैव तुलाप्रान्तेनैव परिच्छिद्य शृङ्गाभरणीकृतं कुण्डलमिति तात्पर्ययोजना ॥ तत्रभवन्तस्त्वेवं व्याचक्षते । सिंगे[3] इति सप्तम्यन्तं तइ[4] इति षष्ठ्यर्थे प्रयुक्तम् । खलिओ इति व्यस्तमपि समासान्तर्गतत्वेन संबध्यते । सर्वव्यत्ययः प्राकृतेभीष्टः[5] । त्वद्रभसोत्क्षिप्तस्खलिततुलाकोटिमणिकुण्डलाभरणं शृङ्गप्रविष्टमूललग्नं सत् भङ्गस्थानवियुक्तमिवावलोकितम् ॥

॥ २९४ ॥ तव द्वारं स्थानस्थानेदत्तरुधिरोपहारम् आभाति हरप्रणयरोषविशासितसंध्याशकलावकीर्णमिव । सचोपि तवेयं गौर-

[1] HM. °भरणशृं°. [2] MH. रभसोत्क्षिप्त°.
[3] MH. सिंगो इति सप्तम्यन्तं च इति. [4] MH. प्राकृतेऽभीष्टं. [5] om MH.

तुह वयण-च्छवि-भिज्जन्त-विअड-तंम-मण्डला सया होन्ति ।
केहिंवि दिज्जन्त-महा-महिसा इव भयवइ पओसा ॥ २९५ ॥
निद्दा-रूवेण पयं णिमेसि जण-लोयणेसु तं-चेय ।
पडिवोहे जेण स-जावयव्व लक्खिज्जए दिट्ठी ॥ २९६ ॥
पलयं वा कालि ण णिम्मवेसि रूअस्स ते अणन्तस्स ।
सव्वङ्गं कह णु कवाल-मण्डलाडम्बरं घडओ ॥ २९७ ॥

वार्हो अतो मां परित्यज्य अस्यास्तिकालं प्रणाममपि करोषीति रोषकारणम् ॥

[ ॥ २९५ ॥ तव वदनच्छविभिद्यमानविकटतमोमण्डलाः सदा भवन्ति कैरपि दीप्यमानमहामहिषा इव हे भगवति प्रदोषाः[1] ॥ ].

॥ २९६ ॥ निद्रारूपेण पदं निमेसि निदधासि जनलोचनेषु त्वमेव प्रतिबोधसमये येन कारणेन सयावकेव रक्तत्वाल्लक्ष्यते दृष्टिः ॥ सुप्तप्रबुद्धानां स्वभावेनैव[2] लोहितानि लोचनानि भवन्ति । सोयमागमानुगुणोक्ष्णां लोहितभावः प्रबोधे[3] स्वापसमये देवी नयनेषु पदं विदधाति तेनाभिभूता जनाः स्वपन्तीति तत्रैव प्रत्यक्षसंवादः पादेन[4] विमर्दनात्प्रबोधे नयनेषु लोहितत्वमिति ॥

॥ २९७ ॥ वाशब्दश्चेदर्थे । प्रलयं चेत्[5] हे कालि न निरमास्यः नाकरिष्यः ततो रूपस्य तवानन्तस्य सर्वाङ्गे[6] कथं [ नु ] कपालमण्डलाडम्बरमघटिष्यत । न कथंचिदित्यर्थः ॥

---

[1] J. om. the couplet and gives no chhâyâ on it of course.
[2] MH. स्वभावेनेव.
[3] MH. प्रबोधि.
[4] MH. पादे.
[5] MH प्रलयं चेत्कालिका ॥ रात्रिः.

पुव्वासि तक्खण-विहडन्त-लोह-हिञ्जीर-सामल-गलेहिं ।
परिणय-गणभावागय-तिणयण-चिन्धेहिँव णरेहिं ॥ २९८ ॥
णिमिसंपि णेअ मुचइ आययणोववण-मण्डलं तुज्झ ।
संणिहिअ-कुमार-मऊर-णेह-रसिएहिँव सिहीहिं ॥ २९९ ॥
पाऊणव उवहारायरेसु सइ धूव-धूम-वडलाइं ।
उव्वमसि वहुल-रयणी-भावेसु णिरन्तरं तिमिरं ॥ ३०० ॥
पणय-जण-रक्खणन्तरिय-वेरि-करवाल-पञ्जरेणंव ।
हारिन्द-णील-किरणावलम्बिणा भासि वच्छेण ॥ ३०१ ॥

॥ २९८ ॥ स्तूयसे तत्क्षणविघटमानलोहहिञ्जीरश्यामलगलैः परिणतः प्राप्तो यो गणभावस्तेनागतं त्रिनयनप्रतिबिम्बं येषां तैरिव नरैः ॥ हिञ्जीरं शृङ्खलम् । विघटमानं स्तुतप्रभावाद्विनश्यत् लोह एव हिञ्जीरं बन्धनं येषां ते च श्यामलगलास्तैरित्यपि श्लिष्टमत्र । तथा परिणतः उपनतः सर्वाकारं यो गणभावो विवेकविशेषस्तद्भावः सर्वं पुत्रदारादि क्लेशपर्यवसायीति विगणनं तेनागतमु.नतं[1] त्रिनयनप्रतिबिम्बं परमात्मलयलक्षणं येषां तैरिति श्लेषः ॥

॥ २९९ ॥ निमेषमात्रमपि नैव मुच्यते आयतनोपवनमण्डलं तव संनिहितकुमारमयूरस्नेहरसिकैरिव शिखिभिः ॥ मण्डलाकारत्वाद्देवीगृहोपवन मण्डलं परिवर्तुलमित्यर्थः ॥

॥ ३०० ॥ पश्चिमोपहारादरेण सदा धूपधूमपटलानि उद्धमसि बहुलरजनीरूपेण निरर्गलं तिमिरम् ॥

॥ ३०१ ॥ प्रणतजनरक्षणार्थान्तरितवैरिकरवालपञ्जरेणेव हारेन्द्रनीलकिरणावलम्बिना भासि शोभसे वक्षसा ॥ रक्खणावहिअपरीति[2] पाठे रक्षणार्थोपहितेत्यर्थः ॥

[1] MH reads नोपागत°. The emendation is mine.
[2] So MH. Have we not to read °रक्खणोवहिअंतरि° ?

जाहे रयणी-रूवेण फुरसि ससहर-विडम्बिय-कवाला ।
ताहेवि णरट्टि पसाहणम्मि तुह घडइ गह-चक्कं ॥ ३०२ ॥
तं कुवलइ-कुणन्तीं ण वा दइचाण खग्ग मालाओ ।
णिय-चलण पङ्कयचा-कज्जं वो कह णु संपडउ ॥ ३०३ ॥
मालूर-पत्त-माला-कण्टय-कय-मोणिअव्व आहासि ।
तं सरस-रत्त-चन्दण परिसोण-थणन्तरा देवि ॥ ३०४ ॥

॥ ३०२ ॥ यदा रजनीरूपेण स्फुरसि शशधरविडम्बितकपाला तदापि नरास्थिप्रसाधने नरास्थिप्रसाधननिमित्तं तव घटते चेष्टते संबध्यते ग्रहचक्रम् ॥ तदापीत्यत्रापिशब्दाद्यदापीत्यत्र[1] अपिशब्दानुमानम् । शंकरार्द्धशरीरावस्थायामाश्रितं नरकपालालंकारत्वं रात्रिरूपापि सती न मुञ्चसीत्यर्थः ॥

॥ ३०३ ॥ इहापि वाशब्दश्चेदर्थे[2] । त्वं कुवलयानीव नाकरिष्यः । न चेत् । दैत्यानां संबन्धिनीः खड्गमालाः तदा निजचरणपङ्कज चैनकार्यं तव कथमिवं सम्यग्घटिष्यन । व इति व्यत्ययेन तवेत्यस्यार्थे । एवं तावत्केचित्स्वमते वर्णयन्ति कुणन्तीति करोपीत्यस्यार्थे । त्व कुवलयवत्करो पि नवाः अभिनवाः सक्ता दैत्यानां खड्गमाला यस्मान्निजचरणपङ्कजार्चनकार्यं तव कथं न सम्यग्घटते[3] । दैत्या अपि कुण्ठीभूतेषु निजास्त्रेषु त्वत्पादसेवामेव शत्रुनिर्जयार्थं मंश्रयन्त इत्यर्थः ॥ १८ ॥

॥ ३०४ ॥ बिल्वपत्रमालाकण्टककृतशोणितेवाभासि त्वं सरसरक्तचन्दन [परि] शोणस्तनान्तरा हे देवि ॥ शोणो रक्तगुणः । मालूरो बिल्वः । अत्र रक्तचन्दनारुणस्तनान्तरत्वं देव्या बिल्वपत्रमाला-

---

[1] MH. नदापीतत्रापि°.　[2] MH. adds after this: "तुशब्देस्त्वर्थे"
[3] MH. सम्यग्घटनी.

संकन्ताउव रोसारुणाच्छि-वलय-प्पहाओ महिसम्मि ।
तुह सवरि सोणिअ-सिहा तिमूल-मग्गेसु दीसन्ति ॥ ३०५ ॥
वीर-विइण्ण-विकोसासिधेणु-करवाल-कन्ति-कज्जलियं ।
दिअसम्मिवि देवि असङ्क-कोसियं गब्भ-भवणं ते ॥ ३०६ ॥
तं अत्थारुण-रवि-मण्डलेण मुण्डोवहार-पुरवं व ।
तारा-णिह-कय-वलि-तन्दुलाएँ पूइज्जासि णिसाए ॥ ३०७ ॥

कण्टकक्रुतशोणितत्वेनोत्प्रेक्षितम् । तत्र साम्यालंकारत्वेपि भयानकतां देव्यां क्रूरान्प्रति न मुञ्चतीति द्योतयितुम् ॥

॥ ३०५ ॥ संक्रान्ता इव रोषारुणाक्षित्रयवलयप्रभा महिषे हे शबरि वनेचरि शोणितशिखा रुधिरशिखास्त्रिशूलमार्गेषु दृश्यन्ते ॥ महिषासुरशरीरस्फोटितत्रिशूलमार्गत्रयनिर्गतरुधिरधारात्रयं कोपारुणनयनत्रयप्रभाप्रवाहत्रयरूपेणोत्प्रेक्षितम् ॥

॥ ३०६ ॥ वीरवितीर्णविकोशासिधेनुकरवालकान्तिकज्जलित दिवसेपि हे देवि अशङ्ककौशिक गर्भभवनं ते तव ॥ असिधेनुः क्षुरिका । कौशिका उलूकाः । गर्भभवनं मध्यगृहम् । मध्यगृहमिह भाण्डागारादि ॥ २१ ॥

॥ ३०७ ॥ त्वमस्तमयसमयारुणेन रविमण्डलेन मुण्डोपहारपूर्वकमिव तारानिभकृत [ बलि ] तण्डुल्या पूज्यसे निशा रात्र्या ॥ किल मन्त्रोः कौलाः केचित् सिद्धिकामास्तण्डुलौघेन पुरुषमुण्डेन च देवीं पूजयन्तीति श्रूयते । इहापि रात्रौ द्वयं दृश्यते । अस्तसमये चारुणवर्णो रविर्विडरादाशरःसदृशः ताराश्च तण्डुलानिकरनिभा अतस्तत्पूर्वं रजनी तव पूजामिवाचरतीत्युत्प्रेक्षा ॥

१आ. ॰र्णि॰ २. आ. ॰र्म॰

तं सहसि सजल-जीमूअ-गोयरा गोरि विज्जु-भावम्मि ।
कंसोप्पिय-वज्झ-सिला-सहव्व गयणे समुप्पइया ॥ ३०८ ॥
हर-फंस सेय-संवलिय-जावयासङ्गि-णह-मणि-च्छाओ ।
सहइ णय चन्द-लेहा-सुर-सरि-संज्झोव्व ते चलणो ॥३०९॥
सुलहोवहार-रुहिर-प्पवाह-संभावणाएँ लिब्भन्ति ।
अरुण-पडाया-पडिमा-गब्भाओँ सिला इह सिवाहिँ ॥३१०॥

॥ ३०८ ॥ त्वं शोभसे सजलजीमूतगोचरा विद्युद्भावे कंसार्पितवध्यशिलया सहेव गगनं* समुत्पतिता ॥ किल कंसस्य नारदेनाख्यातम् किल देवकीगर्भात्तव प्रलयो भविष्यतीति । ततः कंसेनात्मरक्षणार्थं घातका आदिष्टाः । अस्यां वध्यशिलायां देवकीगर्भा आस्फोट्य निपातनीया इति । तच्च ज्ञात्वा देवक्या गोकुलपतिनन्दभार्यायशोदादुहिता स्वगर्भपरिवर्तनाय समानीता । सा च गौरी वध्यशिलायां घातकैः संयोज्यमाना सती तेषां शिरसि[1] स्वचरणाभिघातं कृत्वा स्वकं तेजः पुञ्जरूपं निधाय गगनमुत्पतिता । सा च विद्युद्रूपा सजलजलधरस्था सती एवमुत्प्रेक्षिता । वध्यशिलयेव सह सोत्पतितेति जलपूर्णाना मेघाना वध्यशिलासादृश्यात् ॥

॥ ३०९ ॥ हरस्पर्शरसजातस्वेदसंवलितयावकासाङ्गिनखमणिच्छायः शोभते सहचन्द्ररेखासुरसरित्संध्य इव ते तव चरणः ॥ चन्द्ररेखासदृशी स्वेदरेखा । यावकरागः संध्याप्रभाप्रायः । नखप्रभाप्रवाहो गङ्गासदृशः । एतास्तिस्रः सपत्न्यः सौभाग्यातिशयेन वशीकृताः सत्यश्चरणनिपतिता इव स्वेदादिव्याजेन भान्तीति तात्पर्यार्थः ॥

॥ ३१० ॥ सुलभोपहाररुधिरप्रवाहसंभावनया लिह्यन्ते आस्वा-

[1] MH. शिर.

पूयाहिसेअ-विअलिअ-णडाल-जावय-रसं पिअन्तिव्व ।
रुहिरासव-परिओसा तुह पुरओ भूय-पडिमाओ ॥ ३११ ॥
पच्चक्ख-भाव-तक्खण-मीलन्तच्छि-हय-दंसण गुणेहिं ।
तियसेहिँवि तुह निद्दत्तणम्मि रूवं ण सच्चवियं ॥ ३१२ ॥

धन्ते शिलाः । लिक्खन्ति इति क्वचित्पाठः विलिख्यन्त इति तत्रार्थः । अरुणपताकाप्रतिमागर्भभूमयस्तव शिवाभिः । प्रतिमा प्रतिबिम्बम् ॥ २५ ॥

॥ ३११ ॥ पूजार्थनाभिषेकेण विगलितो यो ललाटाद् यावक-रसः कुङ्कुमरसस्तं पिबन्तीव रुधिरासवोयमिति परितोष आशा यासां तास्तव पुरतो भूमौ प्रतिमा भूमौ मणिमय्यां प्राणिप्रतिबिम्बानि ॥ भूयपडिमा इति पाठे भूतप्रतिमा इत्यर्थः । भूतानि प्राणिनः ॥

॥ ३१२ ॥ प्रत्यक्षभावेन यत्तत्क्षणमेव तेजस्वितया निमी-लदक्षि चक्षुरिन्द्रियं तेनादर्शनात्तेन [ [1]हतो ] दर्शनगुणो धर्मो येषां तैस्त्रिदशैरपि तव निद्रासारत्वे रूपं न सत्यीकृतं न प्रत्यक्षीकृतम् ॥ यदा त्वदीयं रूपं निद्रायमाणमुदासीनं भवति तदा तावन्न दृश्यते । विद्यात्मिका हि ब्रह्मणः शक्तिर्देवी[2] । विद्यानुविद्धश्च स्वरूपप्रतिभासो द्वैतमते प्रलये च स्वापाख्ये ज्ञानप्रकाशाविर्भावाया विद्याया औदासीन्याद्देवादीनां च तत्रैव लीनत्वात्प्रत्यक्षीकाराभावः । जागरायामपि देवीतेजोतिशयेन चक्षुषः प्रतिबद्धत्वात्प्रत्यक्षीकरणमशक्यं देव्या इति कवेः कल्पना ॥ २७ ॥

---

[1] MH. om. हतो and reads दंसंनं गुणो for दर्शनगुणो. [2] MH. शक्तिर्देवी.

तक्काल-विमुह-हर-वड्डिएहिँ सासेहिं तावसि तुमाए ।
पडिवण्णो पाणायाम णियम वन्धायरो कह णु ॥ ३१३ ॥
काम-डहणाणुतावा हरस्स तुह विब्भमेहिँ णिव्वडिया ।
फुट्टिय-णडाल णयणाणलव्व सन्तावि णोसासा ॥ ३१४ ॥
सइ सिद्ध सिद्धि-मण्डल-पईव-परिकम्पिणो पओसेसु ।
तुज्झासव-गन्ध-सुहा-सुहयन्ति समीरणुग्गारा ॥ ३१५ ॥
तडि-भावम्मि फुरन्ती सवारि-वारिहर-कूड-कोडीए ।
अक्कन्त-महा-महिसव्व सोहसे अमरिसायम्बा ॥ ३१६ ॥

॥ ३१३ ॥ तत्कालहरमुखवार्धितैर्नि.श्वासैर्हे तापसि त्वया प्रतिपन्नः प्र ग्नः प्राणायामनियमबन्धादरः कथं नु ॥ तक्खणविमुहेति[1] पाठे
२ तत्क्षण एव विमुक्तो यो हरस्तेनेत्यादिरर्थः । कालीति हरेणोक्ता सा अपमानात् वरं परित्यज्य तपोविशेषेण गौरवर्णा भगवती बभूवत्यागमः । कोपाच्च विवृद्धश्वासत्वम् ॥

[ ॥ ३१४ ॥ कामदहनानुतापा हरस्य तव विभ्रमैर्निर्वर्तिता· कृष्टललाटनयनानला इव सन्तापि नोच्छ्वासाः[2] ॥ ]

॥ ३१५ ॥ सदा सिद्धा नित्यप्रबन्धप्रवृत्तासिद्धमण्डलैः सिद्धसमूहैः सिद्धमण्डलेषु च निर्मिता. प्रदीपास्तान्परिकम्पयान्त तच्छीला
३ ये ते प्रदोषेषु तवोत्सवनिमित्तदत्तकर्पूरादिगन्धेन सुरा· सुखयन्ति समीरणोद्गाराः ॥ २९ ॥

॥ ३१६ ॥ तडिद्भावे स्फुरन्ती सवारयो ये वारिधरा मेघास्तेषां कूटस्य राशेः कोटौ प्रान्ते स्थिता सती आक्रान्तमहामहिषेव

[1] MH reads तक्खणंहेत &c.
[2] All the MSS. except J. give this couplet.

जण-दिण्ण-केस-कलणा-लोमस-कलुसेहिँ कम्पमुप्पेसि ।
वेयालेहिँव पडियग्गियाइरा वाउ-दण्डेहिं ॥ ३१७ ॥
गम्भीर-गब्भ-मन्द-प्पहाओं तुह देवि दीव-मालाओ ।
उवहार-मुण्ड-केसन्धयार-मूढाओंव खलन्ति ॥ ३१८ ॥
विसासिज्जन्त-महा पसु ःसण संभम-परोप्परारूढा ।
गयणेच्चिय गन्ध-उडिं कुणन्ति तुह कउल-णारीओ ॥ ३१९ ॥

३ शोभसे अमर्षेण आताम्रा[1] । कोडिकोडीए इति पाठे कोटिः संख्या तस्याः कोटौ प्रान्त इति योजनीयम् ॥ ३० ॥

॥ ३१७ ॥ जनैर्दत्ता ये केशास्तेषां कलनया स्वीकारेणोद्भूयनेन लोमशत्वेन कलुषैर्दाहमर्पयासि[2] करोषि वैतालैरिव प्रतिजा-
२ गरिताजिरा वातैर्दण्डैर्दण्डाकारैर्वातैः ॥ देवी मक्त.शिरांसि[3] मुण्डयति । अजिरमङ्गनम् ॥ ३१ ॥

॥ ३१८ ॥ गम्भीरगर्भगृहे मन्दप्रभास्तव देवि दीपमाला उपहारार्थं दत्ता ये मुण्डा बर्करकादिशिरांसि तेषां ये केशा रोमाणि
३ कृष्णानि तैरन्धकारित्वान्मूढा इव स्खलन्ति मन्दप्रकाशा भवन्ति ॥ वितते बहलान्धतमसपटलावृते[4] देव्या गर्भगृहे दीपमाला गृहमाहात्म्यादेव स्खलन्त्यः उपहारमुण्डलोममालिन्यमलिनाकृता इवेत्युत्प्रे-
३ क्षिताः ॥

॥ ३१९ ॥ विशस्यमानो यो [5]महापशुर्मनुष्यस्तद्दर्शनसंभ्रमेणेव परस्परमारूढा अन्योन्योपकलितशरीरा गगन एव आकाश एव गन्ध-
२ कुटीं गन्धद्रव्यगृहं कुर्वन्ति तव कौलनार्यश्चित्रन्यस्तदेवताविशेषाः ॥

---

[1] MH. कमाम्रा. [2] MH. दाहम्. [3] MH. मक्ता.
[4] MH. भृते. [5] MH. °पशुमनुष्य:

णह-मणि-संकमणा मडह-पणय-जण-लञ्छणेहिँ चलणेहिं ।
सोहसि पणमिज्जन्तिव्व अम्ब तं वालिहिल्लेहिं ॥ ३२० ॥
अह परियरो अणेओवयरण-पहरण सहं कर-सहस्सं ।
एक्कस्स वरोरु वरुज्जयस्स ते पाणि-कमलस्स ॥ ३२१ ॥
धय-वड-धारा णिवहेहिँ मन्दिरं वो णवारुणाहेहिं ।
तदियस पसु सिर च्छेय-पीयमामुयइ रुहिरंव ॥ ३२२ ॥

स्वभावादन्योन्योत्पीडनरूपेण मिलिताश्चित्रकीलनार्यो मनुष्यमारणभयादिवान्योन्यरूपमनुप्रविष्टा इति कविकल्पना ॥

॥ ३२० ॥ नखमणिसंक्रमणेन नखमणिप्रतिबिम्बितत्वेन मडहा अल्पपरिमाणा ये प्रणतजनास्तल्लाञ्छनैस्तच्चिह्नैश्चरणैः शोभसे प्रणम्यमानेव हे अम्ब त्वं वालखिल्यैः[1] ॥

॥ ३२१ ॥ अहेति देशीपदमेष इत्यस्यार्थे[2] एष इत्यस्य वापभ्रंशो विशेषार्थः । एष परिकरः[3] परिच्छदमात्रम् । किं तत् । अनेकोपकरणप्रहरणसहं करसहस्रम् । एकस्य हे वरोरु वरदानोद्यतस्य ते तव पाणिकमलस्य ॥ वरदानोद्यतेनैकेनैव करकमलेन सर्वं साध्यते । एकोनसहस्रं तु परिच्छदमात्रमित्यर्थः ॥

॥ ३२२ ॥ ध्वजपटा एव धारा इव । दैर्घ्यात् । तासां निवहैर्मन्दिरं गृहं तव नवत्वेनारुणाभैर्लोहितकान्तिभिः प्रातदिवसपशुशिरश्छेदपीतम् आमुञ्चते रुधिरमिव ॥ प्रत्यक्षध्वजपटधारानिवहेन उपहारपीतं रुधिरधारानिवहमिवोद्वमति तव गृहमित्यर्थः ॥

[1] MH वालिखिल्यैः. [2] MH. इत्यस्यार्थेऽस्य. [3] MH. परिकर परिकर.

मेहायन्तं तुह तइय-णयण-सिहि-धूम-मण्डलं सहइ ।
वासुइ-जीहाओ लहन्ति तडि-लया-विब्भमं जत्थ ॥ ३२३ ॥
सीसम्मि कओ महिसस्स देवि मरणाय जो हि संपण्णो ।
सो चिय जणस्स जाओ तुह चलणो मङ्गल-ट्ठाणं ॥ ३२४ ॥
कोमारम्मि हराराहणाय हिययम्मि मयण-पज्जलिए ।
तइ विहिओ मुद्ध-थणुल्लएहिँ मालूर-होमो व्व ॥ ३२५ ॥
अङ्गमवलम्बियालम्बि सरस-नर-वयण-पायडं वहसि ।
अज्ज वि कंस-प्फोडण-ललन्त-निययट्ठि-सिढिलं व ॥ ३२६ ॥
सूएन्ति वीर-विक्कय-विक्कममिह जामिणी-मसाणेसु ।
अवलम्बिय-कुणव-च्छेय-पाडला साहि-साहाओ ॥ ३२७ ॥

॥ ३२३ ॥ मेघायमानं तव तृतीयनयनशिखि [ धूम ] मण्डलं शोभते । वासुकिजिह्वा लभन्ते तडिल्लताविभ्रमं यत्र ॥ हरार्धदेहाया
३ वर्णनमेतत् ॥

॥ ३२४ ॥ शिरसि कृतो महिषासुरस्य हे देवि मरणाय य एवं संपन्नः स एव जनस्य भक्तस्य जातस्तव चरणो मङ्गलस्थानम् ॥
३ स्मृतस्य शुभहेतुत्वादर्चितस्य च ॥

॥ ३२५ ॥ कौमारे हराराधनाय हृदये मदनप्रज्वलिते त्वया विहितो मुग्धपयोधरैर्मालूरहोम इव ॥ मालूरं बिल्वम् ॥

॥ ३२६ ॥ अङ्गमालम्बितैरालम्बनशीलैश्च सरसनरवदनैः प्रकटं सुपरिज्ञातं[1] वहसि धारयसे अद्यापि कंसास्फोटनचलन्निजकास्थिशिथिल-
३ मिव ॥ देव्याः कंसनिपातनिमित्तत्वं वर्णितम् ॥

॥ ३२७ ॥ सूचयन्ति वीरविक्रयविक्रममिह देवीवने[2] यामिनी-

---

[1] MH. °ज्ञातं. [2] MH. देवीवने.

सरसट्ठि-दण्ड-लोहेण चण्डि अहर-प्पहारुणे तुज्झ ।
जीहाणिय-दसण-मऊह-मण्डलेच्चेय-संवलइ ॥ ३२८ ॥
पयइ-परिसुक्क-काया पुरओ संचरइ रेवई तुज्झ ।
इह सइ संणिहिय-महा-परेय-भय-मुक्क-मासव्व ॥ ३२९ ॥
पूइज्जासि भिण्ण-भुया-विइण्ण रुहिरंव पायवेहिंपि ।
परसु-प्पहार-वियलिय-कसाय रस सोण-साहेहिं ॥ ३३० ॥
अण्णोण्ण-कलह-विअलिय-केसर-कीलाल-कललिय-दारा ।
कयवाउणोवि तुह देवि सासणं अणुसरन्तिव्व ॥ ३३१ ॥

श्मशानेषु अवलम्बितकुणपच्छेदपाटलाः शाखिशाखाः ॥ देवीश्मशाने वीराः सिद्धये महामांसविक्रयं कुर्वन्तीति कौलागमादिषु प्रसिद्धम् ॥

॥ ३२८ ॥ सरसास्थिदण्डलोभेन हे चण्डि अधरप्रभारुणे तव जिह्वा निजदशनमयूखमण्डल एव सवलति ॥ भयानकरसपोषकमेतत् ॥

॥ ३२९ ॥ हे भगवति परिशुष्ककाया पुरतः संचरति रेवती चामुण्डा तव इह सदा संनिहितमहाप्रेतभयमुक्तमांसेव ॥ महाप्रेतदर्शनजभयादिव दुर्बलेत्यर्थः । पयइपरिसुक्केति पाठे प्रकृत्या स्वभावेन कृशशरीरा ॥

॥ ३३० ॥ पूज्यसे भिन्नभुजावितीर्णरुधिरमिव कृत्वा पादपैरपि परशुप्रहारप्रसृतकषायरसशोणशाखैः ॥ भिन्नेभ्यो विदारितेभ्यो भुजेभ्यः आसमन्ताद्वितीर्णरुधिरं कृत्वेति भङ्गः ॥

॥ ३३१ ॥ अन्योन्यकलहेन युद्धेन विलुलितानि अपसृतानि केसराणि लोमानि कीलालं च मज्जारुधिरादिकं तैः कलितं कर्द-

उवहारुल्लूरिय-मास-मण्डलाडम्बरुब्भडेहिंव ।
डिम्भं जावय-पड-मण्डणेहिँ खम्भेहिँ विविहेसि ॥ ३३२ ॥
कुणवत्तण-सुलहूसास-काय-निव्वडिय-गारवो अप्पा ।
तुह धारण-क्खमो कीरइव्व णणु वाहण-सवेण ॥ ३३३ ॥
सोहसि मुह-मुक्कासरिस-रुहिर-धाराहिँ रयणि-रूएसु ।
भत्ति-विइज्जन्तारुण-धयव्व तं भवण-माईहिं ॥ ३३४ ॥

३ मितं द्वारं यैस्ते कृकवाकवोपि नाम विवेकविहीनास्तव देवि शासनमनुसरन्ति ॥ वीराः किलान्योन्योपघातेन देवीमाराधयन्ति । तद्वत्कृकवाकवोपीत्यर्थः ॥

॥ ३३२ ॥ उपहारार्थविदारितमांसमण्डलाडम्बरोद्भटैरिव भयं यावकरक्तपटमण्डनैः स्तम्भैरिव जनयसि ॥ इवशब्दोऽप्यर्थे । स्तम्भै-
३ रपि जनयसि ॥

॥ ३३३ ॥ कुणपः शवम् । तद्रूपत्वेपि सुलभोच्छ्वासकायत्वान्निर्वृत्तगौरव आत्मा तव धारणक्षमः क्रियत इव ननु निश्चितं कृत्वा
३ वाहनभूतेन शवेन ॥ शववाहना देव्यागमः ॥

॥ ३३४ ॥ शोभसे मुखेभ्यो मुक्ता य आतंपा ज्वालानिचयास्त एव कुसुमधाराः पुष्पप्रकरास्ताभी[1] रजनीरूपेषु भक्तिविकीर्य-
३ माणारुणवर्णध्वजेव[2] त्वं भवनमातृभिर्योगीश्वरीभिः ॥ रजनीरूपा देवीत्युक्तम् । रात्र्यश्च मातृः । ताभ्यो[3] योगीश्वरीभिश्च रात्रीणां मुखे सशब्दज्वालाभिः प्रणामाः[4] क्रियन्त इति प्रसिद्धिः ॥

---

[1] MH. °भ्यारा°. [2] MH. ०ध्वजा इ. [3] MH. मातृ. Perhaps MH. leaves out some words which followed मातृ. [4] MH. मानामाः.

बहुल-पओसा बद्धङ्कुरव्व तुह देवि महिस-सिङ्गेहिं ।
पारोहिणोव्व लम्बिर-मऊर-कण्ठेहिँ रेहन्ति ॥ ३३५ ॥
तुह लोह-दप्पणावलि-संकमणालद्ध-कसण-भावव्व ।
सोहन्ति सवर-जुअला मेयय-काया पणामेसु ॥ ३३६ ॥
रूअंचिय णवर कराल-दारुणं काल-रत्ति-लीलाए ।
हिययं पुण ते करुणा-रसेण सइ वच्छलंचेअ ॥ ३३७ ॥
इय विञ्झ-गुहा-णिलयाएँ तम्मि-दल-सवर-सिट्ठ-मग्गाए ।
पहुणा सपरियरं भयवईएँ विहिओ णमक्कारो ॥ ३३८ ॥

अवि य ।७

इह अज्जवि किं णु पुराण-भाव-कविसीकयट्ठि-बन्धम्मि ।
हिययउद्देसे रोसग्गि-पिङ्गिमच्चेय विप्फुरइ ॥ ३३९॥

॥ ३३५ ॥ बहुलप्रदोषा बद्धफला इव [ तव ] देवि महिषशृङ्गैः प्ररोहिण इव अङ्कुरवन्त इव लम्बनशीलमयूरकण्ठै रेहन्ति शोभन्ते ॥

॥ ३३६ ॥ तव लोहमयदर्पणावलिसंक्रमणलब्धकृष्णभावा इव शोभन्ते शबरडिम्भा मेचककायाः प्रणामेषु ॥ लोहः कंसः । संक्रमणं
३ प्रतिबिम्बनम् । शबरा व्याधाः । मेचकः कृष्णवर्णः ॥

॥ ३३७ ॥ रूपमेव केवलं करालदारुणं कालरात्रिलीलायाः कालरात्रिरूपायाः । हृदय पुनः करुणारसेन तव वत्सलं देवि *॥

॥ ३३८ ॥ इति विन्ध्यगुहानिलयायाः पत्रवसनशबरसृष्टमार्गायाः प्रभुणा सपरिकरं कृत्वा भगवत्या विहितो नमस्कारः ॥ सृष्टः कथितः ।
३ परिकरः पुष्पनैवेद्यादिको मन्त्रादिकश्च । तेन सपरिकरमिति तन्त्रेण कर्तृकर्मविषयं क्रियाद्वारेण ॥ कुलकम् ॥

॥ ३३९ ॥ इदानीं देव्यायतनगतकलेवरदर्शनजहृदयनिर्वेदोद्ग-

तम्मिच्चिय संधि-पसूय-कीड-मालाविले णडालम्मि ।
हासाय भिउडि-भङ्गोव्व विलिहिओ अह कयन्तेण ॥ ३४० ॥
वुब्भइ ओलिम्भाभाव-कुडिल-वलिएण वयण-बिम्बम्मि ।
मयणाहिमलय-विच्छित्ति-विब्भमं संपइ रएण ॥ ३४१ ॥
हा हा तंचेय करिल्ल-पिययमा-बाहु-सयण-दुल्ललियं ।
उवहाणीकय-वम्मीय-मेहलं लुलइ सिर-कमलं ॥ ३४२ ॥

वकरुणापरनरपतिः सविमर्शी सप्तकोपनिबद्धेन कुलकेनाह ॥ इहापि किं नु[1] पुराणभावेन कपिशीकृतास्थिबन्धे हृदयोद्देशे रोषाभिषिक्तैव क्रोधवह्निलोहितत्वमिव स्फुरति ॥ मृतमपि[2] जीवदिव कोपाद्याविष्टं विगर्हितशरीरकम् । अतोऽर्थरागद्वेषादिकमाचरतीति तात्पर्यार्थः ॥

॥ ३४० ॥ तस्मिन्नेव संधिप्रदेशप्रसूतकीटमालाभिराविले व्याकुले ललाटे हासाय भ्रुकुटिभङ्ग इव विलेखित एष कृतान्तेनोज्जीवित इव ॥ मृतललाटकीटमाला भ्रुकुटेर्विशेषभाव इत्युपहासार्थः । अहेत्येष इत्यस्यार्थे ॥

[ ॥ ३४१ ॥ उह्यते उद्देहिकाभावकुटिलवलितेन वदनबिम्बे मदनाधिमलयविक्षित्तिविभ्रमः संप्रति रजसा ॥ ]

[ ॥ ३४२ ॥ हा हा तदेव वंशाङ्कुरसदृशप्रियतमाबाहुशयन-दुर्ललितम् उपधानीकृतवल्मीकमेखलं लुठति शिरःकमलम् ॥ ]

---

[1] MH. किं नु.  [2] MH. मृतमिव जीवदपि.

पङ्क-भरिओयरुब्भिण्ण-विरस-तण-जडिलिए कवालम्मि ।
जाओ अहो सिणिद्धो कवरी-बन्धस्स परिणाहो ॥ ३४३ ॥
हा हा कम्पावे इव हरिय-मलालम्बिणी दसण-माला ।
अज्जवि विणिहट्टाणे अ-वीडिया-रसमिव वमन्ती ॥ ३४४ ॥
ठिय-भमर-पक्ख-भावा निव्वाडिय-पत्तणा इव सवेयं ।
कामेण इमम्मिवि णूण पेसिया मञ्जरी-बाणा ॥ ३४५ ॥

॥ ३४३ ॥ पङ्केन कर्दमेन भृतोदरे परिपूर्णमध्ये उद्भिन्नानि जातानि विरसानि विष्ठारसयुक्तानि यानि तृणानि तैर्जटिले कपाले जातः अहो आश्चर्यं स्निग्धः कबरीबन्धस्य परिणामः ॥ यो जीवतः[1] केशपाशस्तस्यैव तृणरूपेण मृतक [ क ] पालेऽभिव्यक्ते[2] सत्कार्यवादालम्बनेन कविना कल्प्यते । वरं कबरीबन्धात्तृणनिचयः । अतः केशपाशसंस्कारादरो मूढानामित्यविद्यावत उपहसति ॥

॥ ३४४ ॥ कष्टं कष्टं कम्पयतीव हरितमलावलम्बिनी दशनमाला अद्यापि विनिघृष्टा या अनेकाः पर्णादिवीटिकास्तासां संबन्धिनं रसमिव वमन्ती ॥ ताम्बूलादिना जीवतः मृतस्य मलविशेषैः रक्ताया दशनास्थिपङ्क्तेर्विशेषाभावेपि वासनाकृतौ भयानुरागावित्यर्थः ॥

॥ ३४५ ॥ स्थितकृष्ण [ भ्रमर ] पक्षभावा[3] निर्वर्तितपत्रा इव सवेगं कामेनास्मिन्नपि मृतककलेवरेपि नूनं निश्चितं प्रेषिताः प्रस्थापिता मञ्जरीरूपाः सायकाः ॥ कथमन्यथा संनिहितभ्रमरपक्षतिसद्भावः स्यात् ॥

[1] MH. जीविनः. [2] So MH. Have we to read °भिव्यक्तेः ? [3] MH निवर्तित°

उद्दिणयरमिन्दु-सहं ठियाणलं सरयण-प्पहमिमस्स ।
एक्कवएच्चिय जायं अखण्ड-तम-चन्धणं भुयणं ॥ ३४६ ॥
इय तम्मि णर-कलेवर-दंसण-मउइय-मणेण णर-वइणा ।
पडिवण्ण विवेय-वियप्प-सरसमणुसोइयं सुइरं ॥ ३४७ ॥
अवि य । २२
वहुसो वहुत्त-विसहर-मणि-प्पहा-रञ्जियव्व ते जाण ।
अन्तोच्चिय णिन्ति णिवेसिय-प्पहा पिञ्छ-पब्भारा ॥३४८॥
वरहीण ताण रसियं पुलिन्द-केयार-पविरल-दुमेसु ।
णन्देइ तस्स तड-णिज्झरेसु गिरि-धूम-कलुसेसु ॥३४९॥ युग्मम्

॥ ३४६ ॥ उद्गतदिनकरमपि इन्दुयुक्तमपि विद्यमानानलमपि स-
रत्नप्रभमपि भुवनम् अस्य मृतककलेवरस्य एकपद एव समकाल एव
३ अखण्डतमसा निरन्तरध्वान्तेन निर्भरमतिशयेन पूरितं जातम् ॥
अयमाशयः। दिनकरेन्दुपावकरत्नैर्भास्वरद्रव्यप्रारब्धैस्तमःसंदोहो विहन्यते।
अस्य तु दीर्घनिद्राप्रपन्नत्वात्तदवस्थमेव संजातमित्यर्थः ॥

[ ॥ ३४७ ॥ इति तस्मिन् नरकलेवरदर्शनमृदुलितमनसा नरप-तिना प्रतिपन्नविवेकविकल्पसरसम् अनुशोचितं सुचिरम्[1] ]

[ ॥ ३४८ ॥ बहुशः उपभुक्तविषधरमणिप्रभारञ्जिता इव ते येषाम् अन्तरेव निर्यान्ति निवेशितप्रभाः पिच्छप्राग्भाराः[2] ॥ ]

[ ॥ ३४९ ॥ बर्हिणां तेषां रसितं पुलिन्दकेदारप्रविरलद्रुमेषु नन्द-यति तस्य तटनिर्झरेषु गिरिधूमकलुषेषु ॥ ]

---

[1] MH. has no Chhâyâ on this stanza which, however, is found in J, P, Do, K.

[2] MH omits the twenty-two couplets beginning with बहुसो, which are found in Do,K,P,and on which the Chhâyâ given here is my own.

उअउत्त-सल्लई-कण्ड-पाडलुब्बार-केसरिल्लीओ ।
पेच्छइ मायङ्ग-वण-त्थलीसु सो जूह-पयवीओ ॥ ३५० ॥
कीरइव तस्स ताली-फल-पिण्डामोडणुम्मुह-करेहिं ।
रिउ-सिर-कवलण-जोग्गा-परिग्गहो जय-गइन्देहिं ॥ ३५१ ॥
भय-लोल पुलिन्द-वहू विरिक्क-गुञ्जावली-कण-कराला ।
जाया से रोसाणल-फुलिङ्ग-भरियव्व-गिरिमग्गा ॥ ३५२ ॥
कण्ण-ट्ठिय-सिहि-पिञ्छ-च्छलेण कय-पत्तणा इव सलीलं ।
मुच्चन्ति सवर-रमणीहिं णयण-बाणा णरिन्दम्मि ॥ ३५३ ॥
अह से भएण गय-दाण-वडल-कलुसिय-दिसा-अडाहोओ ।
माया-णिम्मविय-तमी-मुहोव्व चलिओ मगह-णाहो॥ ३५४ ॥

[ ॥ ३५० ॥ ॥ उपभुक्तशल्लकीकाण्डपाटलोद्गारकेसरवतीः प्रेक्षते मातङ्गवनस्थलीषु स यूथपदवीः ॥ ]

[ ॥ ३५१ ॥ क्रियत इव तस्य तालीफलपिण्डामोटनोन्मुखकरैः रिपुशिरःकवलनाभ्यासपरिग्रहो जयगजेन्द्रैः ॥ ]

[ ॥ ३५२ ॥ भयलोलपुलिन्दवधूत्यक्तगुञ्जावलीकणकरालाः जाता अस्य रोषानलस्फुलिङ्गभृता इव गिरिमार्गाः ॥ ]

[ ॥ ३५३ ॥ कर्णस्थितशिखिपिच्छच्छलेन कृतपत्रणा इव सलीलं मुच्यन्ते शबररमणीभिर्नयनबाणा नरेन्द्रे ॥ ]

[ ॥ ३५४ ॥ अथ तस्य भयेन गजदानपटलकलुषितदिक्तटाभोगः मायानिर्मिततमीमुख इव चलितो मगधनाथः ॥ ]

किं च जायं ।

किंपि विकम्पिय-गिम्हा अवरण्हुक्कण्ठ-सालस-मऊरा ।
हरिय-वण-राइ-सुहया उद्देसा देन्ति उक्कण्ठं ॥ ३५५ ॥
उम्हाइ गिम्ह-विहुरा वहल-वुसासार-लङ्घिय-विमुक्का ।
मइलिय-तलाय-मूला किलन्त-विरलङ्कुरा वसुहा ॥३५६ ॥
णव-रोह-च्छेय-सुयन्ध विसम-वसुहा-विलम्बिअ-पवाहा ।
घोलन्ति हिम-रसोयार-सिसिर-सलिला गिरि-णईओ ॥३५७॥
अग्घन्ति णील-वण-राइ-परियरुम्मिल्लमाण-सोहग्गा ।
अहिणव-पडल-परिग्गह गोर-ग्गामा दिसाहोआ ॥ ३५८ ॥
सायं समाल्यासार-सेय-सद्दलिय-काणणा होन्ति ।
गिम्हेच्चिय जलयारम्भ-कोमला महिहर-णियम्बा ॥ ३५९ ॥

[ किं च जातम् ॥ ]

[ ॥ ३५५ ॥ किमपि विकम्पितग्रीष्मा अपराह्णोत्कण्ठसालसमयूरा हरितवनराजिसुभगा उद्देशा ददत्युत्कण्ठाम् ॥ ]

[ ॥ ३५६ ॥ ऊष्मायते ग्रीष्मविधुरा बहुलबुसासारलङ्घितविमुक्ता मलिनीकृततडागमूला क्लान्तविरलाङ्कुरा वसुधा ॥ ]

[॥३५७॥ नवरोहच्छेदसुगन्धविषमवसुधाविलम्बितप्रवाहा घूर्णन्ते हिमरसावतारशिशिरसलिला गिरिनद्यः ॥ ]

[ ॥ ३५८ ॥ अर्घन्ति नीलवनराजिपरिकरोन्मील्यमानसौभाग्या अभिनवपटलपरिग्रहगौरग्रामा दिगाभोगाः ॥ ]

[ ॥ ३५९ ॥ सायं समास्तामारसेकनाद्रलितकानना भवन्ति ग्रीष्म एव जलदारम्भकोमला महीधरनितम्बाः ॥ ]

सोत्तं-कलुसा णईओ पज्जत्त-कलम्ब-गन्धिणो पवणा ।
घण-डम्बरं विणा पाउसस्स तारुण्णयं गलइ ॥ ३६० ॥
वोलिन्ति गिम्ह-णिद्दं पहिया लिङ्गाहिसेय-सिसिरेसु ।
ऊढ-कलम्बज्जुण-परिमलेसु सुर-मन्दिरन्तेसु ॥ ३६१ ॥
तह तत्त-णयर-रच्छा सहन्ति मेहावलम्बि-रवि-बिम्बा ।
धरणि-परिट्ठिय-गिम्हा णह-घोलिर-पाउसा दियसा ॥३६२॥
णवरि अ वसुहाहिव-जय-गइन्द-सीयर-कयाहिसे अव्व ।
जाया णिआह-परिणाम-धूसरा दिणयर-मऊहा ॥ ३६३ ॥

किं च जायं ।

अन्तो-घर-चिर-णिग्गमण-णसहियालोय कूणिया वलइ ।
णिद्दा-विमद्द-परिलुलिय-सालसायम्बिरा दिट्ठी ॥ ३६४ ॥

[ ॥ ३६० ॥ स्रोतः कलुषा नद्यः पर्याप्तकदम्बगन्धिनः पवनाः घनडम्बरं विना पर्जन्यस्य तारुण्यं गलति ॥ ]

[॥ ३६१ ॥ अतिक्रामन्ति ग्रीष्मनिद्रां पथिका लिङ्गाभिषेकशिशिरेषु ऊढकदम्बार्जुनपरिमलेषु सुरमन्दिरान्तेषु ॥ ]

[ ॥ ३६२ ॥ तथा तप्तनगररथ्याः शोभन्ते मेघावलम्बिरविबिम्बाः धरणीपरिष्ठितग्रीष्मा नभोघूर्णनशीलपर्जन्या दिवसाः ॥ ]

[ ॥ ३६३ ॥ अनन्तर च वसुधाधिपजयगजेन्द्रसीकरकृताभिषेका इव जाता निदाघपरिणामधूसरा दिनकरमयूखाः ॥ ]

[ किं च जातम् । ]

[ ॥ ३६४ ॥ अन्तर्गृहाचिरनिर्गमनासोढालोककूणिता वलति निद्राविमर्दपरिलुलितसालसाताम्रा दृष्टिः ॥ ]

पीलिय-तमाल-पल्लव-सयणिज्ज-रसोल्ल-णह-वयं हरइ ।
णव-केसर-माला-सुरहि-मेहलालङ्किय जहणं ॥ ३६५ ॥
तक्खण-विच्छूढ-मुणाल-वलय-सीयल-पउट्ठ-परिमासा ।
सोहन्ति जलद्दा मलिय-चन्दणा बाहु-लइयाओ ॥ ३६६ ॥
णव-कणय-किङ्किणी-णिह-चम्पय-कुसुमावणद्ध-मञ्जीरं ।
हरइ परिकोमलुव्वूढ-वेस-लडहं परिब्भमियं ॥ ३६७ ॥
पिय-परिरम्भुम्मूलिय-णह-वय-परिसेस-चन्दण-सुयन्धो ।
अग्घइ दल-सवल-कलम्ब-दाम-हारो थणुच्छङ्गो ॥ ३६८ ॥
थोय-सुरा-मय-संभिण्ण-सरस-पाडल कवोल-पडिलग्गं ।
उम्मिल्लइ केयइ-गब्भ-वत्त ताडङ्क-लायण्णं ॥ ३६९ ॥

[ ॥ ३६५ ॥ पीडिततमालपल्लवशयनीयरसार्द्रनखपदं हरति नवकेसरमालासुरभिमेखलालंकृतं जघनम् ॥ हरतीत्यत्र मन इति कर्मपद-
३ मध्याहार्यम् ॥ ]

[ ॥ ३६६ ॥ तत्क्षणोत्क्षिप्तमृणालवलयशीतलप्रकोष्ठपरिमर्शाः शोभन्ते जलार्द्रा मर्दितचन्दना बाहुलतिकाः ॥ ]

[ ॥ ३६७ ॥ नवकनककिङ्किणीनिभचम्पककुसुमावनद्धमञ्जीरं हरति परिकोमलोदूढवेषमधुरं परिभ्रमितम् ॥ ]

[ ॥ ३६८ ॥ प्रियपरिरम्भोन्मूलितनखपदपरिशेषचन्दनसुगन्धः अर्घति शबलदलकदम्बदामहारः स्तनोत्सङ्गः ॥ ]

[ ॥ ३६९ ॥ स्तोकसुरामदसंभिन्नसरसपाटलकपोलमानिलग्नम् उन्मीलति केतकीगर्भपत्रताडङ्कलावण्यम् ॥ ]

इय भमइ भवण-सिहरेसु गिम्ह-परिणाम-थोअ-सत्थामो ।
विरल-जल-विन्दु-णिव्वविय-गण्ड-वासो पिया-सत्थो ॥ ३७० ॥

किं च । १०

इह तेय-मेह-संवलण-सिसिर-विच्छाय-कविस-रुवि-विम्बा ।
अग्घन्ति भग्ग-पवणा अरेणु-परिधूसरा दियहा ॥ ३७१ ॥
उक्कण्ठ-वरहि-चूडा-विडवन्दोलण-तरङ्गिओ वहइ ।
अविरल-जम्बु-फलासार-वडण-मुहलो इह समीरो ॥३७२ ॥
इह उव्वेल्लइ दर-पीय-सलिल-परिसामलोअरद्धन्ता ।
पेरन्त-धवल-गय-कण्ण-कब्बुरा मेह-पत्थारी ॥ ३७३ ॥
इह अहिमुह-मञ्जरिअज्जुणासु अवयाढ-कुडय-गन्धासु ।
वास-सुहआसु मुणिणो गमेन्ति दियहे गिरि-अडीसु ॥३७४॥

॥ ३७० ॥ इति भ्रमति भवनशिखरेषु ग्रीष्मपरिणामेन स्तोकबलो विरलजलबिन्दुनिर्वृतीकृतगण्डपार्श्वः प्रियासार्थः ॥ कुलकम् ॥

॥३७१॥ इत ऊर्ध्वं दशभिः कुलकम् । इहानुभागे तेजोमेघसंवलनशिशिरविच्छायकपिशरविबिम्बाः अर्घन्ति भग्नपवना वृष्टिदानेन [1]खिन्नवा-
३ यव अरेणुत्वेपि परिधूसरा दिवसाः ॥

॥ ३७२ ॥ उद्धटकण्ठमयूरविटपचूडान्दोलनतरङ्गितो वहति अविरलजम्बुफलासारपतनमुखर इह समीरः ॥

॥ ३७३ ॥ इहोद्वेष्टमाना [ भवति ] ईषत्पीतसलिलत्वेन परिश्यामलोद[2]रैकदेशा पर्यन्तधवलत्वेन गजकर्णवत्कर्बुरा मेघसंहतिः[3] ॥

॥ ३७४ ॥ इहाभिमुखमञ्जरीकार्जुनासु अवगाढकुटजगन्धासु वर्षासुखदासु मुनयो गमयन्ति दिवसान् गिरितटीषु ॥

---

1 MH खिन्न०, 2 MH ०देशः 3 MH ०संहत्य.

वूढोअय-कय-रव-चुण्ण-कलुस-पालास-फल-कसव्वाओ ।
इह सोहन्ति दरोव्वुट्ठ-सामला रण्ण-भूमीओ ॥ ३७५ ॥
अण्णेसिअव्व-पवणा आसारन्तेसु समहिउम्हाला ।
एए ते चूय वणाण होन्ति परिणामया दियहा ॥ ३७६ ॥
उम्हाल-कुमूल-मुहुच्चरन्त-रय-फरुस-मेय-गन्धाइं ।
आसार-जडे दियहे णन्दन्ति कुडुम्बि-गेहाइं ॥ ३७७
फल-सार-णलिणि-गहणा इह दारु-च्छेय-पविरला होन्ति ।
मूल-ट्ठिय-वाय-फलम्ब-कविस-वसुहा वणुद्देसा ॥ ३७८ ॥

॥ ३७५ ॥ व्यूढोदकाः परिवृत्तजलास्तथा कृतरवाः कृतशब्दाश्चूर्णेन च वालुकादिधूल्या कलुषायितपलाशास्तेषां फलैः कसव्वाओ कर्कशा इह शोभन्ते ईषदुद्धृष्टश्यामला अरण्यभूमयः ॥ वर्षो वृष्टम् ॥

॥ ३७६ ॥ अन्वेषितव्यपवना आसारान्तेषु समधिकोष्मयुक्ता एते ते चूतवनानां भवन्ति परिणामकाः पाचका दिवसाः ॥

॥ ३७७ ॥ ऊष्मयुक्तकुसूलमुखेभ्य [2]उद्धरणक्रियायुक्तं निःसरद्यद्रजस्तेन परुषस्य मेदसो गन्धा येषु तानि आसारेण जडे शीते दिवसे नन्दयन्ति कुटुम्बिगृहाणि कुटुम्बिनः अर्थात् । मांसादिभक्ष्यविशेषसमृद्धत्वाद्गृहान्निःसरतां कुटुम्बिनां भोज्यविशेषभोगयोग्यतया प्रीतिमुत्पादयन्तीत्यर्थः ॥

॥ ३७८ ॥ फलैः शाराः शबला या नलिन्यस्ताभिर्गहना इह दारुच्छेदेन ग्रीष्मकृतेन प्रविरला भवन्ति मूलस्थितशुष्ककद-

---

[1]MH. omits °ड°. [2] So MH. Have we not to read उद्धरण° ?

णव-केयइ-वासिय-केस-संजमा दक्खिणाओ णारीओ ।
इह ता अणायरुज्जल-हलिद्दि-राया विरायन्ति ॥ ३७९ ॥
इह कोसुमेण चावेण जो जयइ साहुणा विसम-बाणो ।
लहिऊण पाग-सासण-सरासणं कह ण विप्फुरइ ॥ ३८० ॥
इय उक्कण्ठा-पडिवण्ण-हियय-परिकोमला पवट्टन्ति ।
संलावा काल-सहाअ-संसिणो कडय-लोयस्स ॥ ३८१ ॥
कण्ठ-णिहुयं च गीयं अलद्ध-णिद्दं च णिज्जण-पसुत्तं ।
सरसो उक्कण्ठा-णिब्भरस्स हिययस्स वीसामो ॥ ३८२ ॥

म्यस्त्वेन कपिशवसुधा वनोद्देशा विपिनप्रदेशाः । वाय शुष्कम् । बालकअम्बेति पाठे बालकदम्बेत्यर्थः ॥

॥ ३७९ ॥ नवकेतकीवासितकेशसंयमा दाक्षिणात्या नार्यः इह ता अनादरेण [1]अप्रयत्नेन स्वभावेनोज्ज्वलया हरिद्रया रक्ता विराजन्ते ॥

॥ [ ३८० ॥ इह कौसुमेन चापेन यो जयति साधुना विषमबाणः लब्ध्वा पाकशासनशरासनं कथं न विस्फुरति ॥ ]

॥ ३८१ ॥ इति उक्तप्रकारेण उत्कण्ठाप्रतिपन्नहृदयपरिकोमलाः प्रवर्तन्ते संलापाः कालस्वभावशंसिनः कटकलोकस्य ॥ कोमलाः शृङ्गारादिविलासोल्लासरसभाजः । कुलकम् ॥

॥ ३८२ ॥ कण्ठनिभृतं कण्ठमधुरं च गीतं तथा अलब्धनिद्रत्वे पूर्वं सति पश्चान्निर्जनदेशे प्रसुप्तं द्वयमेवोत्कण्ठया कोमलस्य विरहकृतदुःखभिदुरस्य हृदयस्य सरसो विश्रामः ॥ कटकनिवासिनां विरहिणां चेतो निर्वृतावयमुपाय इति प्रसङ्गादुच्यते ॥

---

[1] MH. प्रयत्नेन.

च जायं।

उम्हाअन्त-गिरि-यडं सीमा-णिव्वडिय-कन्दलुब्भेयं ।
णिव्वाइ विरल-धारा-बन्धुरिय-रयं धरणि-वेढं ॥ ३८३ ॥
आसार-ताडियाइं वलाय-लुप्पन्त-चलिय-सहराइं ।
सरिया वहन्ति संपइ अपेअ-पण्डूइँ सलिलाइं ॥ ३८४ ॥
आवण्डु-सलिल-लङ्घिय-वसुआआ मलिण-सेवल-सिहाओ ।
जल-रङ्कु-दुक्ख-लक्खिय-सहरा घोलन्ति सरियाओ ॥ ३८५॥
विलुलिय-पिसङ्ग-वल्ली-वियाण-उद्देस-कोमल-फलाण ।
पविरल-रक्खाण सिरी वियलइ वालुङ्कि-वाडाण ॥ ३८६ ॥

च जातम्।

॥ ३८३ ॥ ऊष्मायमाणगिरितटं सीमनिर्वृत्तकन्दलोद्भेदं शुष्यति विरलधाराबन्धुरितरजस्कं धरणीपीठम् । सीमा संधिः । [1]निर्वृत्तं संपन्नमभिव्यक्तम् । निव्वाइ शुष्यति । बन्धुरितं पिण्डीकृतम् ॥

॥ ३८४ ॥ आसारताडितानि बलाकालुप्यमानचलितशफराणि सरितो वहन्ति संप्रत्यधौतपाण्डूनि सलिलानि ॥ अधौतत्वं जलस्यानि-
३ र्मलीभूतत्वम् । आसारताडनेन गिर्यादिकर्दमस्वीकारः कालुष्यहेतुरुक्तः ॥

॥ ३८५ ॥ आपाण्डुना सलिलेन लङ्घितत्वाद्वसुधाया परिम्लाना अत एव मलिनाः शैवालशिखा यत्र ता जलरङ्कुदुःखलक्षितशफरा
३ घूर्णन्ते सरितः ॥ जलरङ्कुः ढेङ्कः । शफराः सूक्ष्ममत्स्याः ॥

॥ ३८६ ॥ विलुलितपिशङ्गवल्लीवितानप्रदेशकोमलफलानां प्रविरलरक्षाणां श्रीः शोभा विलसति वालुङ्कीवाटानाम् ॥ वालुङ्की
३ चिर्भटिका ॥

1 MS. निवृत्त  2 MS. °बालिनसदृशानि,

न चलइ नवम्बु-धोयंपि पल्लले विरल-मुह-कऊसासं ।
मीण-उलं सहरन्तर-परिसंगय-पङ्क-गरुयङ्गं ॥ ३८७ ॥
विअरइ सद्दल-रेहाअमाण-सुर-धणु-णिवेस-सुहयम्मि ।
गयण-त्थलम्मि गो-मण्डलंव वलयं वलायाण ॥ ३८८ ॥
दीसइ णिरन्तरुब्भिण्ण-हरिय-हरि-चाव-कन्दल-करालं ।
परिओसुप्पइअ-मऊर-जाल-सवलंव गयणद्धं ॥ ३८९ ॥
पयडाअइ गिम्हाणिल-वेया-मूलुक्खयम्मि रय-पडले ।
सद्दल-परिणीलमहो कमढ-कवालंव महि-वेढं ॥ ३९० ॥

॥ ३८७ ॥ न चलति नवाम्बुधौतेपि पल्वले विरलकृतमुखोछ्वासं मीनकुलं शैलान्तरात्परिसगतेनागतेन सबद्धेन पङ्केनाङ्कितत्वादवलिप्त-
३ शरीरत्वात् ॥

॥ ३८८ ॥ विचरति शाद्वललेखायमानसुरधनुर्निवेशसुभगे गगन-स्थले गोमण्डलमिव वलयं वलयाकारत्वाद्बलाकानाम् ॥ बलाकाशब्दोऽ-
३ जहल्लिङ्गो बकवाची ॥

॥ ३८९ ॥ दृश्यते निरन्तरोद्भिन्न [ हरित ] हरिचापकन्दलकरालं परितोषोत्पातितमयूरजालशबलमिव गगनतलम् ॥ कन्दला इन्द्रचापरेखाः
३ कन्दलाकारत्वात् । हरिरिन्द्रः ॥

॥ ३९० ॥ प्रकटायते ग्रीष्मानिलवेगमूलोत्खाते रजःपटले शाद्वलपरिनीलमहाकमठकपाटमिव महीपीठम् ॥ महाकमठो महाकूर्मो
३ भूमेर्धर्ता तस्य कपाटः कोशः ॥

---

[1] MH. °शब्दोजहल्लिंगोबकवाची.

विसहन्ति णिय-विसाणल-पयविज्जन्तङ्ग- मग्गिअ-प्फंसं ।
धारा-दूमिय-फण-मण्डलावि फणिणो णवासारं ॥ ३९० ॥
पडिसन्त-रयासण्णा–अमाण-गिरि-मण्डला विरायन्ति ।
कामं सामीकय-गय-उलाओ आसार-लेहाओ ॥ ३९१ ॥
छाया एक्कासारेवि फुरइ णिद्धोय-रेणु-णीलाण ।
गिम्हाहय-विरलुद्देस-पिङ्ग-विडवाण उच्छूण ॥ ३९२ ॥
घडिय-फुडियन्तराओ गहिय-विस-ट्ठाण-पण्डुर–जलाओ ।
अहिरायन्ति धुयारुण-कसेरु-मूलाओ सरसीओ ॥ ३९३ ॥

॥ ३९० ॥ विषहन्ते निजविषानलप्रतप्यमानाङ्गमार्गितशीतस्पर्श धारादूनफणमण्डला अपि फणिनो नवासारम् ॥ दूमियं ॥ टुदु उपतापे उपतप्तं बाधितम् ॥

॥ ३९१ ॥ परिशान्तरजस्त्वेनासन्नायमानानि गिरिमण्डलानि यासां [ ता ] विराजन्ते कामं पर्याप्तं कृत्वा निरन्तरमज्जनाखिलमूलवि-लयाच्छ्यामीकृतगजकुलाः कासारलेखाः ॥ [1]स्रुतिप्रबद्धप्रवहज्जलाधार-दीर्घिकात्मिकाः कासारलेखा उच्यन्ते ॥

॥३९२॥ छाया कान्तिः । एकासारेपि प्रावृषेण्यप्रथमजलभारेपि स्फुरात शोभते निर्धौतरेणुतया नीलानां ग्रीष्मवशेनागताः प्राप्ता विरलप्रदेशेषु पिङ्गाः पीतच्छायाः शोषवशाद्विटपा येषां तेषामिक्षूणाम् ॥

॥ ३९३ ॥ घटितस्फुटितान्तरा गृहीतबिसस्य स्थाने पाण्डुरजला अभिराजन्ते नैवारुणकसेरुमूलाः सरस्यः ॥ पूर्वघटितान्यन्तरालान्यति-प्रबन्धात् स्फुटन्ति नवबिसजनिवस्थाया[2] प्रतिबिम्बेनैव तत्प्रदेशे जलस्य पाण्डुरता भाति । कसेरुस्तृणविशेषो जलजः[3] ॥

[1] MH. स्रुतिप्रबद्ध प्रवहज्जलाधारदीर्घगनात्मिकाः कासारलेखया उच्यन्ते । The nendation is conjectural. [2] So MH. । [3] MH. °जम्.

जलयाणिल रङ्खोलिय-हरियङ्कुर-सिसिर-पायव-तलाइं ।
सलिलाहय-विरसोउम्बराइ जायाइं रण्णाइं ॥ ३९४ ॥
सिसिर-च्छाएसु चिरं उयसिन्धु-तरङ्ग-पुलिण सुहएसु ।
पहिएहिं वीसमिज्जइ विहङ्ग-मुहलेसु वच्छेसु ॥ ३९५ ॥
णव-वरणय-णारन्तर-हिंसी वण-मत्त लावय कुलाओ ।
जाया भवणग्ग-णियच्छिपव्व-सोहाओ सीमाओ ॥ ३९६ ॥
आयव-कढमाण-णवम्बु-सिप्ण-दर-गोर-सालिणो होन्ति ।
सीमन्ता कच्छव-पोय-पट्ठि-परिधूसरुद्देसा ॥ ३९७ ॥
मसिणुण्णय-पेरन्तं वावीण जलागमोणयं होइ ।
णिद्धोय-कद्दमाणील वक्करुदन्तुरं वरणं ॥ ३९८ ॥

॥ ३९४ ॥ जलदानिलकम्पितहरिताङ्कुरशिशिरपादपतलानि सलिलाहतत्वेन विरसोदुम्बरफलानि जातान्यरण्यानि ॥

[ ॥ ३९५ ॥ शिशिरच्छायेषु चिरम् उदधिसिन्धुतरङ्गपुलिनसुभगेषु पथिकैर्विश्राम्यते विहङ्गमुखरेषु वृक्षेषु ॥ ]

॥ ३९६ ॥ नवचरणकैर्वालतृणविशेषैर्निरन्तराणि यानि हिंसीनां लताविशेषाणा वनानि तत्र मत्तानि लावकाना तित्तिरीणा कुलानि य यत्र ते [sic] जाता भवनाग्रप्रेक्षितव्यत्वयोग्याः सीमान उपवनविशेषाः ॥

॥ ३९७ ॥ आतपक्वथ्यमाननवाम्बुस्विन्नदरगौरशाल्यो[1] भवन्ति सीमान्ताः कच्छपपोतकपृष्ठवत्परिधूसरप्रदेशाः ॥

॥ ३२८ ॥ मसृणोन्नतपर्यन्तं वापीनां संबन्धि जलागमेनावनतं भवति निर्धौतकर्दमत्वेनानीलैः कर्करैरुदन्तुरं वरणं तटम् ॥ .

[1] MH. नवाम्बुस्विन्नदर्यो for नवाम्बु &c. Probably the passage is corrupt.

वारिच्छेअ-दरावीय-सलिल-वोसट्टमाण- कलमाओ ।
जायाओं सीर-खण्डिय-मुत्थ-सुयन्धाओं भूमीओ ॥ ३९९ ॥
आरम्भिणोव्व संपइ दूरुग्गय-दिणयरावि णज्जन्ति ।
दूरुग्गयावि परिलङ्घिणव्व दियहा णवब्भेहिं ॥ ४०० ॥
कावि सिरी गय-गाहण-परिलक्खिज्जन्त-वियड-भावाण ।
ऊससिय-तण-गहीरा-अमाण-मग्गाण कच्छाण ॥ ४०१ ॥

गस्विलत्वेन पर्यन्तानां मसृणत्वम् । उन्नतप्रदेशजलरयानीतकर्दम-
कूटत्वेन चोन्नतत्वम् । जलागमनेन च वापीनां पूर्णत्वादवनतानि
५ तटानि लक्ष्यन्ते ॥

॥ ३९९ ॥ वारिच्छेदे प्रान्ते ईषत्पीतसलिलत्वेन वोसट्टमाणा
[2]सुगन्धामोदायमानाः कलमाः शालिविशेषा यासु जाताः सीरैर्हलैः
३ खण्डितानि यानि मुस्तानि तैः सुगन्धा भूमयः ॥

॥ ४०० ॥आरम्भिण इव उपक्रमयुक्ता इव संप्रति दूरोद्गतदि-
नकरा अपि सन्तो ज्ञायन्ते दूरोद्गता अपि बहुशेषा अपि परिलङ्घिन
३ इव निकटास्तमया इव ज्ञायन्ते नवाभ्रैः ॥ अथवा जलधरपूरिते गगने
सति दूरोद्गता अप्युन्नता अपि लम्बिन इव ज्ञायन्ते दिवसा इत्यर्थः ॥

॥ ४०१ ॥ कापि श्रीः शोभा गतगोधनत्वे परिलक्ष्यमाणवि-
३ कटभावानाम् उच्छ्वसिततृणत्वेन गभीरायमाणमार्गाणां कच्छानामुपवना-
नाम् ॥

1 MH. reads स्विनचन.

[2] MH. वोसट्टमाणसुगन्धामोदायमानाः

समहिय-संज्झा-राया विउणुच्चरमाण-गिरि-णइ-रवाओ ।
जाया संताण-पयत्त कीड-विरुयाओं रयणीओ ॥ ४०२ ॥
उग्गन्ध-मइल-वसुहा सहन्ति णिव्वडिय-रगय-च्छाया ।
दुद्दिण-विसद्द-दूरायमाण-तूराओं णयरीओं ॥ ४०३ ॥
जायाओं सलिल-धारा-विराम-णिव्वडिय-पह-जलुग्गारा ।
विज्जुज्जो आलक्खिय मेह-विहङ्गाओं रयणीओ ॥ ४०४ ॥

॥ ४०२ ॥ समधिकसंध्यारागाः । मेघेषु प्रतिबिम्बितानां[1] रविकिरणाना रागातिरेकेण स्फुरणात् । दूरोच्चरद्गिरिनदीरवाभोगाः । दूरच्चरमाणगिरि[ ण ] इरयाउ इति पाठे दूरवर्धमानगिरिनदीवेगाभोगा इत्यर्थः । जाताः सतानप्रवृत्तकीटविभवा रजन्यः ॥ कीटा मण्डुकादयः । सताणपओत्तकीडविरुआओ इति पाठे संतानरूपप्रवृत्तकीटविरुताः ॥

॥ ४०३ ॥ [1]उद्धतस्कन्धमहाशकुनाः सहन्ते वर्षाकालस्वभावपरिपोषे समर्था भवन्ति । निर्वृत्तरागच्छाया विद्युद्विलसितैः । दुर्दिनविमर्ददूरायमाण[2]तूर्यशब्दा रजन्य ॥ महाशकुन उलूकः । सोन्धकारातिशययुक्तासु रजनीषूद्धततरकन्धरो भवतीति कश्चित् । तत्त्वेन तु अल्पशकुना न बहिरवस्थातुं शक्ता महान्त इव तद्धतग्रीवागर्जितासारवेगाद्याहताः सन्तो भवन्तीत्यनुभवसिद्धम् । दुर्दिने गर्जितम् । तेनाभिभूत वात्कूररवो न श्रयते ॥

॥ ४०४ ॥ जाताः सलिलधाराविरामनिर्वृ[3]त्तपथजलोद्गाराः विद्युद्द्योतोत्क्षिप्तमेघ[ वि ] भागा रात्रय ॥ नीरधारासारावसाने[4] सत्यपि विद्युदालोके [5]मारुतजलोद्गारा नालोक्यन्ते । धारासारेण दृष्टिप्रसरानि-

[1] The commentator's text as given in J is उक्कन्ध महासउणा सहन्ति निव्वडिय रायअ ठ या । दुद्दिण विमद्द–द् रायमाण–भूराआ रयणीओ. [2] MH °त्तर° for °तूर्य° perhaps °तूर° is intended But what may that mean ? [3] MH °निम्रत्त°. [4] So MH. Have we not to read °वसरे ? [5] So MH.

कीडाविलङ्कुर-सिहा धारा-कद्दमिय-कच्छ-कासारा ।
छेत्त-णिसम्मन्त-सराडि-मण्डला होन्ति सीमन्ता ॥ ४०५ ॥
गंयणं च मत्त-मेहं धारा-लुलियज्जुणाइँ अ वणाइं ।
निरंहकार-मियङ्का हरन्ति णीलाओ अ णिसाओ ॥ ४०६ ॥
जलआगमम्मि मज्जइ जलम्मि सीयन्त-णइ-अड-णिवेसं ।
महु-मह-तलिमत्तण-घडिय-सेस-मुक्कंव महि-वेढं ॥ ४०७ ॥

रोधात् । धाराविरामे तु विद्युदालोकेन स्फुटाः प्रतीयन्ते । ते मेघाश्च-
५ विभक्ता इत्यर्थः ॥

॥ ४०५ ॥ कीटाविलाङ्कुरशिखा धाराकर्दमितकच्छकासाराः
क्षेत्रनिपीदच्छरा[1]टिमण्डला भवन्ति [2]सीमांन्ताः ॥ कच्छा उपान्ताः ।
२ कासाराः प्रदेशाः । [3]सराडयः सेधाः ॥

॥ ४०६ ॥ गगनं च मत्तमेघम् । धाराललिताज्र्जुनानिच वनानि ।
निरंहकारमृगाङ्का हरन्ति स्वीकुर्वन्ति विरहितानां मदनोद्दीपनेन
३[ नीलाश्च निशाः ] ॥

॥ ४०७ ॥ जलदागमे [ मज्जति जले ] मज्जन्नदीतटनिवेशं
कृत्वा मधुमथनप्रेरिततलिमे[7] घटितशेषमुक्तमिव महीपीठम् ॥ पृष्ठपूर्ण-
३ स्वेन निमग्नतटनदीत्वात् प्लावितोपरान्तत्वाच्च[4] पृथिवी तावद्दूरमेष्यते[5] ।
जलधिम[6]ध्यशायिना हरिणा प्रेरितं यत्तलं शय्या तेन घटितेन संबद्धेन

[1] MH. °त्मटारि.° [2] MH. मीमता: [3] MH. सरार्दः [4] MH very corruptly पाविनोपरनत्वाश्च The emendation is conjectural. [5] MH तावदिमे दृश्यते. The emendation is mine. [6] MH. ° मध्ये शा°. [7] MH मतर्म.

तणइल्ल-तरु-यलाणं असेव्व कलुसुण्ह-पल्लल-जलाण ।
दूरालोयेच्चिय पाउसम्मि लच्छी वणन्ताणं ॥ ४०८ ॥
ऊसासिय-रण्ण सीमावरोह-सिहराहिलक्ख-तरु-सण्डा ।
दीसन्ति णिबुड्डा इव वलन्त-धूमोच्छआ गामा ॥ ४०९ ॥
धारा-किलिण्ण-वत्तं आसुरहि-कसाय केसरद्धन्तं ।
परिणमइ बन्धणेच्चिय परिसिढिलं जूहिया-कुसमं ॥ ४१० ॥
णन्दन्ति णान्दिअ-दुमा आसार-च्छेय-सीयल-समीरा ।
हिययं थल- मग्ग-वलन्त-गो-हणा रण्ण-पेरन्ता ॥ ४११ ॥

महाभारमसहमानेन शेषेण त्यक्ता सतीव क्रुडितेति ॥ महुमहतलमोलिअ
६ इति पाठः क्वचित् । क्वचित्तु महुमहतलिमत्तणेति । मधुमथतलिमत्वा-
द्घटितेन संवेद्धन शेषेण त्यक्तेवेति तत्रार्थः ॥

॥ ४०८ ॥ तृणवत्तरु [ त ] लानामसेव्यकलुपोष्णपल्वलजलानां
दूरालोक एव प्रावृषि लक्ष्मीः शोभा वनान्तानामुपवनानाम् ॥ इल्लेति
३ मत्वर्थीयः । हेतुगर्भे च वनान्तविशेषणे । हेतुतया दूरादेवो[1]पवनानि
सुन्दराणि दृश्यन्ते न तु सेव्यानीत्यर्थः ॥

॥ ४०९ ॥ उच्छ्वसिता [2]अरण्यसीमसु ये अवरोहास्तृणादयस्तैः[3]
शिखरमात्रेण दृश्यमानेनाभिलक्ष्या अनुमेयास्तरुषण्डा येषा ते दृश्यन्ते
३ निक्कुडिता इव मग्ना इव वलता धूमेनास्तृता आच्छादिता ग्रामाः ॥

॥ ४१० ॥ धाराभिः क्लिन्नपत्रम् ईषत्सुरभिकषायकेसराघ्रातं परि-
णमति विलीयते बन्धन एव वृन्त एव परिशिथिल यूथिकाकुसुमम् ॥
३ क्लिन्नत्वात्कषायत्वं केसरभागानाम् । यूथिका जातिः । सुमनः–
शब्दाभिमाना[4] मालती । यूथरूपेण कदम्बगोलकवत्तत्र कुसुमोद्भवात् ॥

॥ ४११ ॥ नन्दन्ति आनन्दयन्ति नन्दितद्रुमाः आसारच्छेदशी-
तलसमीरा हृदयं स्थलमार्गवलद्गोधनाः अरण्यपर्यन्ताः ॥

---

[1] MH. °मानानि for वनानि. [2] MH. उच्छ्वसितारण.° [3] MH. °स्तैशुन्नाशिखर° for °स्तै शिखर° which is a conjectural emendation. [4] So MH. °शब्दाभिधाना ?

णिविड-दुम-मण्डलाइं णिरन्तरूसासिय-सद्दल-सिहाइं ।
वच्चन्ति बहल- भावं पुञ्जिज्जन्ताइं व वणाइं ॥ ४१२ ॥
णवरि अ पयाण-समुहस्स पाउसोचिय किणावि णर-वइणो ।
णीराइज्जन्तिव वलिय-विज्जु-वलया दिसाहोया ॥ ४१३ ॥
सोहइ विमुह-पयत्तस्स झत्ति मगहाहिवस्स विणियत्तो ।
उक्का-दण्डस्सव सिहि-कणाण णिवहो णरिन्दाण ॥ ४१४ ॥
अग्घइ तत्थ रणारम्भ-भिण्ण-भड सोणि अ-च्छडायम्बं ।
धारायट्ठिय-पल्हत्थ-विज्जु-वलयंव महि-वेढं ॥ ४१५ ॥

॥ ४१२ ॥ निबिडद्रुममण्डलानि । प्रवृद्धशाखत्वात् । निरन्तरोच्छ्रसितशाद्वलशिखानि व्रजन्ति बहलभावं पुञ्जीक्रियमाणानीव वनानि ॥

॥ ४२३ ॥ अनन्तरं च प्रयाणसंमुखस्य प्रावृष्येव केनापि नरपतेर्नीराज्यन्त इव ज्वलितविद्युद्वलयत्वाद्दिगाभोगाः ॥ किल नृपतियात्रारम्भे प्रास्थानिकं कर्म चोदितं शरदि । यत्र नीराजनसंज्ञके चतुर्दिक्षु तृणकाष्ठादिकं प्रज्वाल्यते । तदिहापि प्रावृषि चतुर्दिक्षु प्रज्वलिततडित्तया केनापि क्रियमाणमुत्प्रेक्ष्यते । नीराज्यन्ते नीराजनयुक्ता इव क्रियन्त इत्यर्थः ॥

॥ ४१४ ॥ शोभते विमुखप्रवृत्तस्य पलायितस्य झटिति[1] मगधाधिपस्य विनिवृत्तः संमुखीभूतो लज्जापरलोकभयपरामर्शात् उल्कादण्डस्येव शिखिकणानां निवहो नरेन्द्राणाम् ॥ उल्कादण्डो वज्रः ॥

॥ ४१५ ॥ अर्घति शोभते तत्र संग्रामे रणारम्भे भिन्नभटशोणितच्छटाताम्रं धाराकृष्टपर्यस्तविद्युद्वलयमिव महीपीठम् ॥ महत्यः

1 MH झगिति.

तियस-रह-पेल्लिय-घणो णह-दुन्दुहि-वहल-गज्जिउग्गारो ।
जाओ पडन्त-मन्दार-णिविड-धारो णहाहोओ ॥ ४१६ ॥
अहवि वलाअन्तं कवलिऊण मगहाहिव मही-णाहो ।
जाओ एला-सुरहिम्मि जलहि-वेला-वणन्तम्मि ॥ ४१७ ॥
रयण-कविलासु सोहइ वेला पुञ्जिय-सिलासु से भमियं ।
फल-भङ्ग-महुर-गन्धासु णालियेरी-वणालीसु ॥ ४१८ ॥

शोणितच्छटा वेगवर्षेण मेघेभ्य आकृष्य रणभूमौ क्षिप्ता विद्युल्लता इवोत्प्रेक्षिताः ॥

॥ ४१६ ॥ त्रिदशरथप्रेरितघनो नभोदुन्दुभिनादेनाहतेन रणपटहेन बहलो गर्जितोद्गारो यत्र स जातः प्रवृत्तमन्दारनिबिडधारो नभआभोगः ॥ सुभटचरितपरितोषितसुरवराविमुक्तत्वमत्र मन्दारकुसुमानाम् ॥

॥ ४१७ ॥ अथापि पलायमानं कवलयित्वा मगधाधिपं महीनाथो यातः प्राप्तः एलासुरभौ जलधिवेलावनान्ते ॥ यद्यपि च वंशवीर्यश्रुतादीनि ख्यापयित्वा रिपोरपि । तज्जयान्नायकोत्कर्षवर्णनं च धिनोति नः इत्यलंकारेषु दिष्टम् तथापि प्रथमविजयविषय तत् । अपरिमितविजयभाजस्तु यशोवर्मणः प्रतापसिद्धारिपुवर्णनमेवमप्युत्कर्षमावहतीति भद्रम् ॥

॥ ४१८ ॥ रत्नशबलासु शोभते वेलापुञ्जितशिलासु से अस्य राज्ञो भ्रान्तं फलभङ्ग[1]मधुरगन्धासु नालिकेरीवनालीषु[2]

---

[1] MH, फलसंगममधुर°. [2] MH, adds the word आलय. after °वनालीषु.

किं च । ३

जय-गय-कुम्भप्फालण-फुरन्त-सिन्दूर-राविओ जाण ।
दूरुग्गओवि नो मुयइ रयणि-विरम-च्छविं सूरो ॥ ४१९ ॥

चलण-णह-च्छवि-विच्छोलियाइं काऊण ताण वज्राण ।
अहिणव-पणाम-वेलक्ख-पण्डुराइंपिव मुहाइं ॥ ४२० ॥

चलिओ कुम्भी-फल-दन्तुरासु दिट्ठिं वसुंधरा-णाहो ।
रण्ण-त्थलीसु-दन्तो णिरूसुआसीण-हरिणासु ॥ ४२१ ॥

अवि य । २

वल-भर-पीडा-खुप्पन्त-सेस-सिर-रयण-मण्डला जस्स ।
गब्भ-परिसण्ठियारव्व चलइ विहुरोअरं वसुहा ॥ ४२२ ॥

॥ ४१९ ॥ अथ तिसृभिर्वङ्गराजपराजयवर्णनम् । जयगजकुम्भास्फालनस्फुरत्सिन्दूररञ्जितो येषां दूरोद्गतोपि मध्याह्नस्थोपि नो मुञ्चति रजनीविरमे छविं प्रभातकालकान्तिं सूर्यः ॥ [1]एतस्यामगणितमदगजसमर्थत्वं वङ्गानामुक्तम् ।

॥ ४२० ॥ चरणनख[च्छवि]प्रक्षालितानि कृत्वा तेषामपि गज-[2]श्रीगणपतीनां [3]वङ्गनाम् अभिनवप्रणामवैलक्ष्यपाण्डुराणीव मुखानि ।

॥ ४२१ ॥ चलितः कूष्माण्डीफलदन्तुरासु दृष्टिं वसुंधरानाथः अरण्यस्थलीषु ददन्निरुत्सुकासीनहरिणासु ॥ विशेषकम् ॥

॥ ४२२ ॥ [4]बलभरपीडाकुडच्छेषशिरोरत्नमण्डला यस्य गर्भपरिसंस्थिताङ्गारकेव चलति विधुरोदरं कृत्वा वसुधा । विहुमोअरमिति पाठे विधूतोदरमित्यर्थः । आर अङ्गारको भौमः ।

---

[1] MH. पठेयामगणित°. [2] MH. °शिरि°. [3]MH. पत्नीनामङ्गनाम्.
[4] MH. °पीडाकुड°.

दक्खिण-दिसा-णरिन्देण तेण पायडिय-पेसल-पणामो ।
जाओ पहेण मलयावलम्बिणा मेइणी-णाहो ॥ ४२३ ॥

किं च । ७

रहस-च्छेयाअर-कय-कय-ग्गहुत्ताण-विवलियच्छेण ।
जेण पसायाहिमुहं मुहमसम-सरारिणो दिट्ठं ॥ ४२४ ॥
कण्ठाहोएसु कया ससंभमं जस्स वसह-इन्धेण ।
मउलि-मियङ्कामय-सेय-भग्ग-वियणा वणच्छेया ॥ ४२५ ॥
दिट्ठाओ णव-णवाणण-सोहाओ पुणो वराहि सपुण्णा ।
सायर-वामद्ध-पणामियम्मि मणि-दप्पणे जेण ॥ ४२६ ॥

॥ ४२३ ॥ [1]दक्षिणादिग्नरेन्द्रेण तेन प्रकटितपेशलप्रणामः सन् यातः पथा मलयावलम्बिना मेदिनीनाथः ॥ युगलकम् ॥

॥ ४२४ ॥ इत ऊर्ध्वं सप्तभिः कुलकम् । किं चेत्यर्थान्तरप्रस्तावनायाम् । रभसच्छेदादरकृतकचग्रहोत्तानविवलिताक्षे[2]ण येन दशाननेन प्रसादाभिमुखं मुखम् असमशरारेर्दृष्टम् । हराराधनप्रवृत्तेन रावणेन स्वशिरश्छेदेन पूजा चिकीर्षता प्रसन्नमुखो मदनारिपुरवलोकित इति प्रसिद्धिः ।

॥ ४२५ ॥ कण्ठाभोगेषु कृताः ससंभ्रमं कृत्वा यस्य वृषभचिह्नेन शंकरेण मौलिस्थितमृगाङ्कामृतसेकभग्नवेदना व्रणच्छेदाः । यस्य छिन्नकण्ठव्रणस्य[3] हरेण कृपया चन्द्रादमृतमादाय सेकं कृत्वा पीडा निवारिता ।

॥ ४२६ ॥ दृष्टा नवसंख्याकानाम् अभिनवानाम् आननानां शोभाः पुनर्भवात् हरप्रसादात्संपन्नाः । क्व दृष्टाः । सादरेण वामार्धेन गौरीभा-

---

[1] MH. adds किं च before. °दक्षिण. [2] MH. °वलिताक्षण. [3] MH. °वन° for °व्रण°.

परिउट्ठे साण-णिरूसुएण सा जेण चन्द-हासस्स ।
परिमुट्ठा णिय-कण्ठट्ठि-चुण्णपुञ्जङ्किया धारा ॥ ४२७ ॥
मलिआ पंसुलिअ-करेण जस्स विम्हय-रसा ति-णयणेण ॥
तुलिओआरि अ-कैलास-मूल-पङ्कङ्किआ बाहू ॥ ४२८ ॥
सङ्का-मन्थर-संचार-दूमिओ जस्स भवण-कच्छासु ।
संचरइ तिअस-वन्दी-ससिएहिं णिरग्गलं पवणो ॥ ४२९ ॥
तंपि दस-कन्धरं हरि-सुएण कक्खन्तरम्मि काऊण ।
जम्मि समुद्दुद्देसे भमिअं पत्तो पहू तम्मि ॥ ४३० ॥

३ गेन प्रणामिते समर्पिते मणिदर्पणे येन । असकृत्खड्गप्रहारो दशम शिरच्छेदे न पर्याप्त इति नवै[1]व च्छिन्नानि तान्येव नवानि निर्मितानि हरप्रसादेन ।

॥ ४२७ ॥ परितुष्टे शा[2]तत्वान्निरुत्सुकेन सा येन चन्द्रहासस्य खड्गस्य परामृष्टा निजकण्ठास्थिचूर्णपुञ्जाङ्का धारा । [3]दशमं शिरच्छे-
३ तुमनेन शङ्कितमिति स्पृशनोभिप्रायः ।

॥ ४२८ ॥ मलिताः कृपया मर्दिताः पांसुलितेन पांसुयुक्तेन करेण । कर्दमाविलितत्वेन पिच्छिलत्वाद्धूलिं विना मर्दनायोग्यत्वात् ।
३ यस्य विस्मयवशात् त्रिनयनेन तुलितावतारितकैलासमूलपङ्काङ्किता बाहवः ।

॥ ४२९ ॥ [ [4]शङ्कामन्थरसंचारदुःखितो यस्य भवनकक्षासु संचरति त्रिदशबन्दिश्वसितैर्निरर्गलं पवनः ] ।

॥ ४३० ॥ तमपि दशकन्धरं रावणं हरिसुतेन वासवपुत्रेण वालिना कक्षान्तरे कृत्वा यस्मिन्समुद्रोद्देशे भ्रान्तं प्राप्तः प्रभुस्तस्मिन ॥

[1] MH. नवैव ' [2] MH. शोतत्वात्. [3] MH. दशमाशर°. [4] MH. omits to give any commentary or this Stanza which is found in J. Dc. K.P.

अवि य। ९

रोसारूढो परिपाडलेसु मुह-मण्डलेसु सुहडाण ।
पहर-समचिय णिव्वडइ सामलो सोणिउप्पीलो ॥ ४३१ ॥
बल-संखोहुक्खय-रेणु-णिवह-णिट्ठिय-वसुंधरा-पयडो ।
दीसइ सेस-फणा-मणि-राओ इव रुहिर-विच्छड्डो ॥ ४३२ ॥
परिणइ-कुण्डलिअ-कराववीडणा मडह-गण्ड-विवरेहिं ।
उद्धं णिबद्ध-वेआ गएहिँ मुच्चन्ति मय-धारा ॥ ४३३ ॥
परिरुज्झइ अमरिस-दसण-बट्टिआहर-णिरुद्ध-वयणेहिं ।
असमाणि अ-पहु-कज्जत्तणेण-जी-अंपिव भडेहिं ॥ ४३४ ॥

॥ ४३१ ॥ अधुना पारसीकसंज्ञकजनपदपातिना सह जयान्तं युद्धं नवकुलकेन प्रस्तुतनरपतेराह । रोषवशादारूढः परिपाटलेषु मुखमण्डलेषु सुभटानां प्रहारसममेव [1]निर्वर्तते प्रकटीभवति श्यामलः शोणितसंघातः ॥ उप्पीलो[2] संघातः । उपमागर्भं चैतत् । शोणित इव । कोसौ । यो रोषवशादारूढो वर्णविशेषो मुखमण्डलेषु । खड्गच्छायाछुरितत्वाच्च श्यामलत्वम् । अथवा मुखमण्डलेषु यः स्वाभाविकः श्यामल आकारः स रोषेणारूढः आक्रान्तः । स शोणितसमूह इव प्रकाशत इत्यर्थः ॥

॥ ४३२ ॥ बलभरसंक्षोभितरेणुनिवहनिष्ठितवसुंधरतया प्रकटो दृश्यते शेषफणामणिराग इव रुधिरराशिः ॥

॥ ४३३ ॥ परिणतिकुण्डलितकरावपीडनसंकटगण्डविवरैः ऊर्ध्वं निबद्धवेगा गजैर्मुच्यन्ते मदधाराः ॥

॥ ४३४ ॥ प्रतिरुध्यते अमर्षवशेन दशनैराकृष्टो योधरस्तेन निरुद्धवदनैः असमाप्तेनप्रभुकार्यत्वेने[3] जीवितमिव भटैः ॥

[1] MH. निवर्त्ते.   [2] MH. °ल for °लो.   [3] So MH.

धावन्ति ससल्ल-भडङ्ग-कवलणा अर-दुहावि अ-मुहीओ ।
विरसा सिवाओ सोणिय-कणुल्ल-पविरेल्लिअ-रवाओ ॥ ४३५ ॥
पडिहाइ वूढ-जोहोवि पढम-णिविडोव्व संगरुद्देसो ।
उस्सूण-भाव-संसत्त-तुरय-णर-रुण्ड-कय-डिम्बो ॥ ४३६ ॥
आरक्ख-वण-मुहुग्गिण्ण-भूरि-भङ्ग-ट्ठियङ्कुस-क्खण्डं ।
रहसा विहडिय-भमरंव धुणइ वयणं जय-गइन्दो ॥ ४३७ ॥
अव-जीव-भाव-गरुयायमाण-पल्हत्थ-काय-णिवहाइं ।
जायाइँ दुव्वहाइँव फणिणो ताइंचिय बलाइं ॥ ४३८ ॥

॥ ४३५ ॥ धावन्ति सशल्यभटाङ्गकवलनादरदुःखितमुखा वि-
रसाः शिवाः शोणितकल्लोलविरेल्लितरवा[1]: ॥ शोणितकल्लोलरवेण
विरेल्लितोभिभूतो रवो यासां ताः शोणितविरेल्लितरवाः ॥

॥ ४३६ ॥ प्रतिभाति व्यूढयोधोपि क्षीणभटोपि प्रथमनिबिड
इव संग्रामप्रारम्भानिचित इव संगरोद्देशः उच्छूनभावात्संसक्ता[2] अ-
३ न्योन्यं संबद्धा ये तुरगनरास्तेषां रुण्डैः कलेवरैः कृतडिम्बः संपादि-
ताटोपः ॥ डिम्ब एकार्पणीभाव[3]: ॥

॥ ४३७ ॥ आरक्षव्रणमुखोद्गीर्णभूरिभङ्गस्थिताङ्कुशखण्डं र-
भसा विघटितभ्रमर इव धुनाति वदनं जयगजेन्द्रः ॥ आरक्षं शि-
३ रासि गजस्य मदस्थानं यत्राङ्कुशचञ्चुर्निमज्जति। भूविभंङ्गेति पाठे
भ्रूविभङ्गेति योज्यम् । उद्गताङ्कुशकाणिकासु सादृश्यादुड्डीनभ्रमरभ्रमः ॥

॥ ४३८ ॥ अपगतजीवभावत्वाद्गुरूयमाणो गुरुर्भवन् पर्यस्तो वि-
वशीभूतः कायनिवहो येषु तानि जातानि दुर्वहानीव फणिनः शेषस्य
तान्येव बलानि ॥

---

[1]MH. °विरेल्लि°. [2]MH. °भावास° [3]MH. °कार्पणा°. [4]MH. गुरुभवन्.

इय से जय-पेरन्तो पुहई-वइणो परिक्खय-पहाणो ।
तुमुलो महाहवो आसि चिरयरं पारसीएहिं ॥ ४३९ ॥

किं च । १७

उहओअहि-पडिलग्गा धणु-पेल्लिय-कोडि-चलिय-वीयद्धा ।
णिज्जन्ति जेत्तियं एन्ति तेत्तियंचेय धरणि-हरा ॥ ४४० ॥
एक्कम्मिच्चिय सेले पूरिय-भुवण-वलए समोसरिए ।
आलोइउं पयत्ता सयलच्च परिट्ठिया वसुहा ॥ ४४१ ॥
इह-हुत्तं णिवडन्ता णोल्लेन्ति पणोल्लिया धरा-वलय ।
णज्जइ एत्तो-हुत्तं परओ- हुत्तं व धरणि-हरा ॥ ४४२ ॥

॥ ४३९ ॥ इति तस्य जयपर्यन्तः पृथिवीपतेः परिक्षयप्रधानस्तुमुलो महाहव आसीच्चिरतर पारसीकैः सह ॥ कुलकम् ॥

॥ ४४० ॥ अथ सप्तदशभिः कुलकम् । उभयोदधिप्रतिलग्नाः पूर्वापरतोयनिधिसंबद्धा धनुष्प्रेरितकोटिचलितद्वितीयार्धाः । धनुष्कोटिचलितद्वितीयार्धा इत्यर्थः । निर्यान्ति नीयन्ते वा यावन्तः आगच्छन्ति तावन्त एव धरणिधराः ॥ पृथुराजेन[1] सागरद्वयावस्थिता पृथिवी मानदण्डस्थानीयेन धनुषा परिच्छेत्तुमारब्धा । तत्रातिद्राघीयस्त्वाद्धनुषः पर्वतैरुभयसागरतटवर्तिभिरवकाशेवरुद्धे यावदेकेन प्रान्तेन प्रेर्य परतो गिरयो नीयन्ते तावदपरेण प्रान्तेन धनुषाऽप्रेर्यमाणेनार्वाग्भवता पृथिवी व्याप्यत इति दिग्द्वयगवस्थितगिरिस्वीकरणनिराकरणव्यग्रत्वात्क्षितिपरिच्छेदो न संपन्न इति कथा ॥

[ ॥ ४४१ ॥ एकस्मिन्नेव शैले पूरितभुवनवलये समपसृते आलोकयितुं प्रवृत्ता सकलैव परिस्थिता वसुधा ॥ ]

॥ ४४२ ॥ इह क्षेपयितुः पृथोः संबन्धिनि देशे हुत्तं[2] संमुखं

---

[1]MH. परिक्षिय° [2]MH.om [3]जैन°. [4]MH तु.

एक्केणंचिय चावग्ग-भिण्ण-लग्गेण पेल्लिओ गिरिणा ।
णिज्जइ पुञ्जिय-रय-पूरियन्तरो सेल-संघाओ ॥ ४४३ ॥
सेलाण चाव-पेल्लिय-तड-मेह-पडन्त-विज्जु-वलयाण ।
पक्ख-च्छेय-ट्ठिय-कुलिस-सल्ल-सयलाइं व गलन्ति ॥ ४४४ ॥
णिज्जन्ति मुहल-मूला चल पायव-णिज्झरा खलन्त-सिला ।
सम-विसम-भूमि-लङ्घण-तरङ्गिणो सेल-संघाया ॥ ४४५ ॥

कृत्वा निपतन्तो निष्पपन्तो णोल्लेन्ति प्रेरयन्ति पणोल्लिया प्रणुन्नाः पातिता[1]: सन्तो धनुषा धरावलयम् वलयाकारत्वाद्वलयम् समीपचतुर्दिग्भूमिकटकं विष्टभ्य मज्जन्ति । ततश्च गिर्यवष्टब्धप्रदेशे मज्जति सति भागान्तरमुन्मज्जति तुलान्तवत् । ततश्च[2] प्रतिपत्त्रा णज्जइं ज्ञायते इत्तो-हुत्तं इहाभिमुखं पतन्त्येते धरणीधराः पुरओहुत्तं[3] न पुनः पराभिमुखं पतन्तीति ज्ञायन्ते पराङ्मुखेषु पतत्स्वपि ॥ क्वचित्तु परओहुत्तं वेति पाठः । तत्रेहाभिमुख वा पतन्तीति संशयरूपेण ज्ञायते परभूभागस्याप्युन्मज्जनादित्यर्थः ॥

॥ ४४३ ॥ एकेनैव चापाग्रभिन्नलग्नेन प्रेरितो गिरिणा [ णिज्जइ नीयते ] पुञ्जितरजसा पूरितान्तरः शैलसंघातः ॥ इति धनुषस्तस्य च प्रेरयितुः पृथोर्महाप्रभावत्ववर्णनम् ॥ पंङ्क्तिव्यवस्थिता एकप्रेरणयैव रज्जुकीलकवद्बहवः प्रेर्यन्त इत्यर्थः । चापाटनीद्वयेन वैकस्य रिसंधस्य संमुखं पतनमपरस्य पराङ्मुखम् ॥

॥ ४४४ ॥ शैलानां चापप्रेरिततटमेघपतद्विद्युद्वलयानां पक्षच्छेदस्थितकुलिशशल्यशकलानीव गलन्ति पतन्ति ॥

॥ ४४५ ॥ नीयन्ते मुखराणि शब्दायमानानि मूलानि येषां ते

---

[1] MH. पातनाः. [2] MH. ततश्चप्रतिपत्त्रा. [3] MH. पुरउ०,

आसा-गएहिँ सरहस-चावग्ग-पणोल्लणा-पयत्तन्ता ।
धाविय-पडिगय-सङ्कालुएहिँ भिज्जन्ति कुल-सेला ॥४४६॥
दीसन्ति गमण-णिवडिअ-सिहर-सिला-भरिय-मूल-वित्थारा ।
खुत्त-धणु-मग्ग-णिग्गम-पयत्त-पढमुज्झरा गिरिणो ॥ ४४७ ॥
पाआल-भरिय-मूला पेल्लिय-णिक्खन्त-धणु-समोलइया ।
मुच्चन्ति थोय-तुलिया भू-भङ्ग-भएणधरणि हरा ॥ ४४८ ॥
जे आसि गिरीण पुरा संचय-वियडा महा-णई-पवहा ।
ओसायाण तेच्चिय थलीहिँ पिज्जन्ति जल-सोत्ता ॥४४९॥

चेलाः पादपा निर्झराश्च येषां ते समविषमभूमिलङ्घनेन तरङ्गितैः स्खलिताः शैलसंघाताः ॥ धनुषा नोद्यमानानामेषा वर्णना ॥

॥ ४४६ ॥ आशागजैः सरभसचापाग्रप्रणोदनप्रवर्तमाना धावित[प्रति]गजशङ्कावद्भिर्भिद्यन्ते कुलशैलाः प्रधानपर्वताः ॥

॥ ४४७ ॥ दृश्यन्ते गमननिपतितशिखरशिलाभिर्मूलभृतविस्ताराः [2]कुडितधनुर्मार्गनिर्गमप्रवृत्तप्रथमनिर्झरा गिरयः ॥ धनुपान्तः[3]प्रोतगिरि-
३ मार्गेण नवा निर्झराः प्रवृत्ता इत्यर्थः ॥

॥ ४४८ ॥ आपातालं मूलैर्भृताः स्थापिताः प्रेरितनिष्क्रान्तेन[4] द्वितीयपार्श्वे निर्गतेन धनुषा समोलइया समुरिक्षप्ताः मुच्यन्ते त्यज्यन्ते
२ स्तोकलुलिता भूभङ्गभयेन भूम्युत्पाटनसाध्वसेन रज्जुकीलकवत्पातालतलनिलीनमूलत्वेनाचलानां भूम्युत्पाटनशङ्कया [ धरणीधराः ] ॥

॥ ४४९ ॥ येभुवन् गिरीणां संबन्धिनः[5] पुरा पूर्वे[6] संचयेन गिरीणां परस्परसंलग्नत्वेन विकटा दुर्गमा महानदीप्रवाहा अपसारितगिरीणां

[1]MH. चपला°. [2]MH.°कटित°. [3]MH.°त्प्रोत°. [4]MH. °निष्क्रान्तेन°
[5]MH.°संबन्धेन. [6]MH. पूर्वसिंचयेन.

जेसु गिरी अवणीया जेसुं च णिवेसिया णरिन्देण ।
दोण्णिवि भिण्ण-सरूया जाया अण्णव्व उद्देसा ॥ ४५० ॥
मज्झ-समोसरियम्मि य पेरन्त-परिट्टिए य गिरि-जाले ।
ओअरइ महिंव णहं आरुहइ महिव्व गयण-यलं ॥ ४५१ ॥
चाव-पणोल्लण-णिवडिअ-सेल-भरन्तेक्कवास-पुञ्जइओ ।
वहु-जलयरोव्व दीसइ सोच्चिय मडह-ट्टिओ जलही ॥४५२॥
पढम-विमूढ-च्छाओ ओसारिय-सेल-जाल-णिव्वडिओ ।
मज्झम्मिव पुञ्जइओ धराएँ वहलायवो दियहो ॥ ४५३ ॥

त एव स्थलीभिरुत्खातगिरिभूभागैः पीयन्ते निजेगिल्यन्ते जलस्वरूपाः ॥

॥ ४५० ॥ येषु प्रदेशेषु गिरी गिरयोपनीताः । येभ्यः प्रदेशेभ्यः पर्वता अपसारिता इत्यर्थः । येषु च निवेशिता उत्पाट्य स्थापिता
३इत्यर्थः । केन । नरेन्द्रेण प्रजापतिना पृथुना । ते द्वयेऽपि भिन्नस्वरूपा जाता अन्य इवात्यन्तभिन्ना इवोद्देशाः प्रदेशाः ॥

॥ ४५१ ॥ मध्यात्सम्यगपसृते च [ पर्यन्तपरिष्ठिते च ] गिरिजाले अवतरति महीमिव नभः । मध्यमही शून्येव प्रतिभातीत्यर्थः ।
३आरोहति महीव गगनम् ॥ महीयमिव भातीत्यर्थः ॥

॥ ४५२ ॥ चापप्रेरितं निपतित[शैल] भ्रियमाणैकपार्श्वेन पुञ्जीकृतः संकोचितो वहुजलचरो दृश्यते । सर्वजलचराणामेकत्र स्थाने
३संघटनात् । स एव मडहास्थित उदधिः ॥

॥ ४५३ ॥ प्रथमं पर्वतोत्पाटनसमये पर्वतैर्व्याप्तगगनत्वाद्दिनकरकरप्रवेशाभावे विमूढच्छायः अस्फुटकान्तिर्धूलिपटलेन[1] चलद्गिरि-
३निचयेन च आकुलीकृतत्वात् ततोपसारितशैलजालत्वेन [2]निर्वृत्तः प्रकटीभूतः अतश्च मध्ये प्रान्तस्थितगिरिसंवन्निधाने पुञ्जीकृत इव धरायां समस्तायां वहलातपो दिवसः ॥

[1] MH. °कान्तिधूलि°. [2] MH. निवृत्तः

उक्खय-गिरि-गहिर-ट्ठाण-भाव-दूरुण्णयन्तर-क्खण्डं ।
दीसइ तह-संट्ठिय-सेल-जाल-विसमंव महि-वेढं ॥ ४५४ ॥
उम्मिल्लन्ति मही-हर-गमणुव्वेल्लिय-धरा-समक्कन्ता ।
उल्लन्त-रेणु-मइला सु-इरेण महा-णई-मग्गा ॥ ४५५ ॥
थिइ-लम्भ-निव्वुयाणं कालेण विरूढ-काणण-तणाणं ।
पक्ख-च्छेयाहिवि महि-हराण चलिएहिँ अवरद्धं ॥ ४५६ ॥
पेरन्ती-कअ-उत्तुङ्ग-गरुअ-गिरि-वलय-बद्ध-परिवेसं ।
मज्झोणयंव दीसइ पासोणमिअंपि महि-वेढं ॥ ४५७ ॥

॥ ४५४ ॥ उत्खातगिरिस्वाद्गम्भीरस्थानत्वेन दूरोन्नतान्तरखण्डं संदृश्यते तथासंस्थितशैलजालविषममिव महीपृष्ठम्[1] ॥

॥४५५॥ उन्मील्यन्ते[2] प्रकटीभवन्ति महीधरगमनोद्वेष्टितया धरया समाक्रान्ताः सन्तः आर्द्रीभवद्रेणुमलिनाः सुचिरेण महानदीमार्गाः ॥

॥ ४५६ ॥ स्थितिलाभेन निर्वृतानां कालेन विरूढकाननतृणानां पक्षच्छेदादपि महीधराणां चलितैरपराद्धम् ॥ छिन्नपक्षैर्यथातथा स्थितिरासादिता । समासीनधनुष्कोटिविघटनचलितैः पुनर्नगैर्न कथंचिरपदबन्धो लब्ध इति वज्रादप्याधिक्यं पृथुधनुषो वर्णितमनेन । कालेण विरूढकाणण-तलाण इति पाठे विरूढकाननानि तलानि येषामिति ॥

[ ॥ ४५७ ॥ पर्यन्तीकृतोत्तुङ्गगुरुगिरिवलयबद्धपरिवेषं मध्यावनतमिव दृश्यते पार्श्वावनतमपि महीपृष्ठम् ॥ ]

[1] MH. °पीठम्. [2] MH उन्मीलन्त.

ओसारिअ-गिरि-गारव-विणमिअ-पेरन्त-पुञ्जइज्जन्तं ।
वित्थारित्थं तंचिअ जायं मडहंव महि-वेढं ॥ ४५८ ॥
इय पिहुणो धणु-पेल्लण-णिविडीकय-सेल-जाल-दुल्लङ्घा ।
भू-पेरन्ता जे इर तेसुवि गाहिओ करो पहुणा ॥ ४५९ ॥

अवि य । ६

अरइ-परिसक्कणा रणिर-णेउराराव-संगलन्तीसु ।
ठिय-परियआसु दिट्ठी लग्गइ कल-हंस-मालासु ॥ ४६० ॥
विविणेह-मज्जण-ट्ठिय-थोउब्भिज्जन्त-दाण-रायंव ।
दीसइ सामायन्तं सइ सुह-भङ्गेसु लायण्णं ॥ ४६१ ॥

[ ॥ ४५८ ॥ अपसारितगिरिगौरवविनमितपर्यन्तपुञ्जीक्रियमाणं विस्तारितं तदेव जातमल्पमिव महीपृष्ठम् ॥ ]

॥ ४५९ ॥ इति उक्तप्रकारेण पृथोः संबन्धिना धनुषा यत्प्रेरणं तेन निविडीकृतं यत् शैलजातं तेन दुर्लङ्घ्या भूमेरन्ता ये किल
३तेष्वपि गृहीतः करो दण्डः प्रभुणा यशोवर्मणा ॥ कुलकम् ॥

॥ ४६० ॥ अधुना नर्मदाख्यनदीनिवासं [1]षट्कुलकेनाह ।

अरत्या यत्परिष्वक्कणं तस्माद्रणरणनशीलानां नूपुराणां य आ-
३रावः ईषच्छब्दस्तत्र [2]संगलन्तीषु संघटमानासु स्थिरपरिचयासु लगति दृष्टिः कलहंसमालासु ॥ महानदीनां देवतारूपत्वान्नर्मदा नाम नायिका कार्तवीर्यार्जुने बद्धानुरागा सती राजर्षिं तमनुससार । अय-
३मपि च राजर्षिस्तां प्रत्यनुपजाताभिलाप इति तदलाभे संजातरणरणका॥

॥ ४६१ ॥ विपिनेभमज्जनस्थितस्तोकोद्भिद्यमानदानरागमिव दृश्यते विरहजदुःखेन श्यामायमानं सदा स्वाङ्गेषु लावण्यम् ॥
३सौन्दर्यातिशयं विरहवेदनाकृतां[3] च श्यामिकां धत्त इत्यर्थः ।

[1]MH. षट्कुलकेनाह [2]MH. संगलन्तु [3]MH. °कृता

संतावायासोप्पिय-चन्दण-पङ्क-प्पएस-पण्डूइं ।
दोब्बल्ल-समुम्मीलिअ पुलिणाइँव होन्ति अङ्गाइं ॥ ४६२ ॥
बहुसो घडन्त-विहडन्त-सइ-सुहासाय-संगमुल्लोले ।
हियए च्चेय समप्पन्ति चञ्चला वीइ-वावारा ॥ ४६३ ॥
कुसुम-सयणिज्ज-मलणा सोरह-घोणन्त महुअरं हरइ ।
उद्देस-पहुत्त-जणाहिलक्ख-सीसंपिव सरीरं ॥ ४६४ ॥

अत्र नर्मदानद्या सह तदधिष्ठायकाया देवताया अभेदाध्यवसाये विविणेभमज्जणाइ्विश इत्युत्प्रेक्षा ॥

॥ ४६२ ॥ संतापायासार्पितचन्दनपङ्कप्रदेशपाण्डूनि दौर्बल्यसमुन्मीलितपुलिनानीव भवन्त्यङ्गानि ॥ नदी परिशुष्कोभयपुलिनत्वाच्छुष्ककर्दमतटा सैवमुत्प्रेक्ष्यते विरहजसंतापदुर्बला संतापनिवृत्त्यर्थलागितशुष्कचन्दनपाण्डुरपुलिनेवेति ॥

॥ ४६३ ॥ वारंवारं संयुज्यमानो वियुज्यमानश्च यः स्मृतिसुखास्वादसंगमः स्मरणेन हृदयप्रत्यक्षीभूतो यः प्रियतमस्तत्संगः सुखानुभवसंगमस्तत्रोल्लोले उत्सुके हृदय एव समाप्यन्ते चञ्चला वीचिव्यापारा ॥ बहुशो घटमाने सति सुखास्वादसंगमोल्लोले हृदय एव समाप्यन्ते चञ्चला वीचिव्यापाराः। सती साध्वी यदा विरहिणी भवति तदा हृदय [1]एवाशाकल्पितप्रियसंगमकल्लोलाः समाप्यन्ते न तु बहिः प्रयोगयोगमधिरोहन्ति नियतनरानियताचित्तत्वात् ॥

॥ ४६४ ॥ कुसुममयशयनीयमलनसौरभघूर्णमानमधुकरं हरति हृदयम् । उद्देशपर्याप्तजनाभिलक्ष्यशिरस्कमिव शरीरम् ॥ तत्र हि नद्या संनिहितबहुकुसुमविपिनतया क्वचित्क्वचित्प्रदेशे शैत्यमाश्रित्य

[1] MH. °हृदयवाशा°.

इय जम्मि पएसे णम्मयाएँ राएसि-बद्ध-भावाए ।
भमियं संभरिअ-कहेण तत्थ वसिअं णरिन्देण ॥४६५॥
मुह-विणिमिय-नव-मङ्गल-किसल-कलाव-च्छलेण गन्तूण ।
पिज्जन्तंपिव अहि-दीह-दीह-जीहा-सहस्सेहिं ॥ ४६६ ॥
अणुणिज्जन्तं रक्खा-परिअर-धुअ-धवल-चामर-णिहेण ।
बन्दीकयामर-जरा-बन्धूहिँव बहु-पणामेहिँ ॥ ४६७ ॥
मरण-भएणव चिन्ता-सामाअन्तेहिँ जीव-जालेहिं ।
अवलम्बिज्जन्तं सोरहायरा महुअर-कुलेहिं ॥ ४६८ ॥
हरि-चक्क-विरिक्क-ट्ठिअ-पाणागय-राहु-सीस-वलयंव ।
नियअ-च्छाआ-मण्डल-निहेण पासे पयासन्तं ॥ ४६९ ॥

परिभ्रमन्ति भ्रमरपङ्क्तयः कामाक्रान्ताकुसुमशय्याविश्रान्तक्रीडितग-लक्रान्तकेशकलापस्त्वेन कल्पिताः ॥

॥ ४६५ ॥ इति यत्र प्रदेशे नर्मदया[4] राजर्षिबद्धभावया भ्रान्तं नर्मदासहस्रार्जुनयोः संस्मृतकथेन तत्राप्युषितं नरेन्द्रेण ॥ कुलकम् ॥

[ ॥ ४६६ ॥ मुखविनिर्मितनवमङ्गलकिसलयकलापच्छलेन गत्वा पीयमानामिव अहिदीर्घदीर्घजिह्वासहस्रैः ]

[ ॥ ४६७ ॥ अनुनीयमानं रक्षापरिचरधुतधवलचामरनिभेन बन्दीकृतामरजराबन्धुभिरिव बहुप्रणामैः ]

[ ॥ ४६८ ॥ मरणभयेनेव चिन्ताश्यामायमानैर्जीवजालैः अव-लम्ब्यमानं सौरभादरात् मधुकरकुलैः ]

[ ॥ ४६९ ॥ हरिचक्रविरिक्तास्थितप्राणागतराहुशीर्षवलयामिव निजकच्छायामण्डलनिभेन पार्श्वे प्रकाशमानम् ]

---

[1]MH. °क्रान्तास्कुसुमः° [2]MH. °क्रडित°. [3]MH.°कान्त°.
[4] MH. नर्मदाया.

इय अमअ-कुम्भमुब्भिज्जमाणमुअहीओँ जम्मि दट्ठूण ।
तिअसेहिँ विम्हिअं तम्मि साअरन्ते ट्ठियं पहुणा ॥ ४७० ॥
मुक्का णिसासु दप्पिय-मइन्द-संपाय-विससिय गयन्दा ।
पुञ्जिय सेणा-कलुसीकयावडा तेण मरु-मग्गा ॥ ४७१ ॥

अवि य । १३

होन्त रसा-यल-भय-पिसुण कसण-घण धूमकेउ दण्डेहिँ ।
दीसन्ति भीअ-विवलायमाण-भुअया ओँव दिसाओ ॥ ४७२ ॥
तक्खण पसरन्तुप्पाय-तरल तारा-करम्बिओ फुरइ ।
भीओरय सुर दिज्जन्त-भोय रयणोव्व णह-मग्गो ॥ ४७३ ॥

[ ॥ ४७० ] इति अमृतकुम्भम् उद्भिद्यमानम् उदधेर्यस्मिन् दृष्ट्वा त्रिदशैर्विस्मित तस्मिन् सागरान्ते स्थित प्रभुणा ॥ ]

[ ॥ ४७१ ॥ मुक्ता लङ्घिता । कदा । निशासु रात्रिषु शीतलासु । न तु दिवा आतपेन जाज्वल्यमानत्वात् । दर्पितमृगेन्द्रसपातविशसितगजेन्द्रा अपि पुञ्जितसेनाकलुषीकृतावटास्तेन राज्ञा मरुमार्गा ॥ विशसिता मारिता । अवटा कृपा । ते पिपसितै पुञ्जीभूतैरहमहमिकया निपतद्भिराकृष्टामलजलत्वेन [1]शिष्टकर्दमत्वात्कलुषीकृता ॥ ]

॥ ४७२ ॥ अपि चेत्यथान्तरसभावनायाम् ॥ अधुना श्रीकण्ठसञ्ज्ञजनपददेशप्राप्तिं राज्ञो वर्णयितु जनमेजयकृतसर्पसत्त्र वर्णयितु त्रयोदशभि कुलकमाह । [2]भवद्रसातलभयपिशुनकृष्ण [घन] धूम केतुदण्डैर्दृश्यन्ते भीतविपलायमानभुजगा इव दिश ॥

॥ ४७३ ॥ तत्क्षण प्रथमारम्भानिष्टसूचकत्वेन प्रसरन्त्यो या

[1]MH जत्वेन for जलत्वेन° [2]MH °भवनरसा

विल-वलय-मुहुव्वेल्लन्त-सरल-भुयइन्द-जाल-कलिलाए ।
चलियं संभम-रहसुद्ध-केस-दण्डाएँव महीए ॥ ४७४ ॥
सज्झस-संजाय-जराउरेहिँ णिम्मोअ-पट्ट-मालाओ ।
भुअएहिँ वेय-पज्जलण-सङ्किएहिंव मुचन्ति ॥ ४७५ ॥
अट्ठिअ-पडन्त-विसहर-संवलिअ-वलन्त-धूम-जालेण ।
एक्काहुईकयं-पिव णहम्मि पडिहाइ पायालं ॥ ४७६ ॥
संभम-पुणरुत्तारुण-फुरन्त-जीहा-कडप्प-पल्लविआ ।
दीसन्ति रोस-कवलिअ-हव्ववह-सिहव्व भुअइन्दा ॥ ४७७ ॥

उत्पाततरलतारास्ताभिः करम्बितः संवलितः स्फुरति भीतोरगसुर-
३दीयमानोत्कोचैरत्न इव नभोमार्गः ॥

॥ ४७४ ॥ बिलवलयमुखादुद्वेल्लत् निःसरत्[1] सरलभुजगेन्द्रजालं तेन कलिलया समाकुलया चलितं संभ्रमरभसोर्ध्वकेशदण्डयेव[2] मह्या ॥

॥ ४७५ ॥ साध्वससंजातजरातुरैर्निर्मोकपट्टमाला भुजगाधिपैः* प्रज्वलनशङ्कितैरिव मुच्यन्ते ॥ भयातिशयेन हि प्रागेव जरा भवति ।
३निर्मोको मुक्तं सर्पचर्म । वृद्धस्य ध्रुवभावी निकटो निर्मोकत्याग इति प्रज्वलनशङ्कितैरिव दाहभयादिव कविना कल्पितम् ॥

॥ ४७६ ॥ [3]अस्थितपतद्विषधरसंवलितवलध्दूमजालेनैकाहुतीकृतमिव नभोपि* प्रतिभाति पातालम् ॥ उत्पतनयोग्यत्वमिहाहीनां
३ कविना कल्पितम् । [4]धूमकेतुश्च धूमत्वेनाहवनीयाग्निधूमः । अस्थितमनवरतम् ॥

॥ ४७७ ॥ संभ्रमपुनरुक्तारुणस्फुरज्जिह्वासमूहपल्लविता दृश्यन्ते रोषकवलितहव्यवाहशिखा इव भुजगेन्द्राः ॥ संभ्रमो भयम् । तेन

[1]MH. °सरन्. [2]MH. दंडा इव. [3]MH. वलधूम°. [4]MH. केतश्च. It is probable the words धूमकेतुश्च धूमत्वेन are corrupt.

डज्झन्त विसहरुक्कर-सुक्कारन्दोलमाण मुहल-सिहो ।
णीससइव विसम विसाणुभाव दर घुम्मिरो जलणो ॥ ४७८ ॥
अरुण-विसारि फणा रयण-राय-पडिअग्गिआओ णिवडन्ति ।
गहियाणुमरण-मण्डण चिन्धाओव्व णाय णारीओ ॥ ४७९ ॥
कुसुमिअ हरि-अन्दण कणय-दण्ड परिरम्भ-ललिअङ्गीओ ।
वलयन्ति णिव्विआरं भुअङ्ग ललणा सिहि-सिहाओ ॥ ४८० ॥
लक्खिज्जइ आहारुद्धुमाय-परिवेल्लिरन्त वलउव्व ।
डज्झन्त-कुडिल-विसहर-समूह-कलिलोअरो जलणो ॥ ४८१ ॥

१पुनरुक्त पुन कोपारुणा स्फुरन्तो ये जिह्वाकलापास्ते सजातपल्लवा इवेति योजना कार्या ॥

॥ ४७८ ॥ दह्यमानविषधरोत्कर [ फूत् ] कारैरान्दोल्यमानमुखरशिखो नि श्वसितीव विषमविषानुभावेषध्दूर्णनशीलो ज्वलन ॥

॥ ४७९ ॥ अरुणविसरणशीला ये फणारत्नरागास्ते प्रतिजागरिता व्याप्ता निपतन्ति गृहीतानुमरणमण्डनचिह्ना इव नागनार्य ॥ २नार्यो हि भर्तुरनुगमाय रक्तवाससो भवन्ति । रागो रश्मय ॥

॥ ४८० ॥ कुसुमितहरिचन्दनलतादण्डपरिरम्भेण ललिताङ्ग्यो वलयन्ति आलिङ्गन्ति निर्विकार कृत्वा भुजङ्गललना कर्त्र्य. शिखि-३शिखा कर्मभूता ॥ हरिचन्दनम्[1] । परिरम्भ आलिङ्गनम् । ललित सुकुमारम् । निर्विकारत्व स्त्रीत्वेन मुग्धत्वात् ॥

॥ ४८१ ॥ लक्ष्यते आहारोद्ध्मातपरिवेल्लनशीलान्त्रवलय इव

[1]MH has nothing between this and परिरम्भ Probably some words have been left out

पुरुहूआहुइ-पढमोअरन्त-सुर-चाव-गब्भिणाओव्व ।
दीसन्ति बहु-विहोरय-मणि-राय-वहाओ जालाओ ॥ ४८२ ॥

वेवइ सरणागय-विस-हरिन्द-फण-वलय-फलिय-चलणग्गो ।
कुविय-णरिन्द-विसज्जिय-सुयाहिरूढोव्व सुर-णाहो ॥ ४८३ ॥

इय जम्मि पिउ-वहा पण्डवेण विहियं पुरा भुयय-सत्तं ।
चिरमुसिओ सिरि-यण्ठोवअण्ठ-मग्गे पहू तम्मि ॥ ४८४ ॥

दह्यमानकुटिलविषधरसमूहसंकुलोदरो ज्वलनः ॥ हूयमानानां सर्पाणामतिबहुलत्वमिति सूचितम् ॥

॥ ४८२ ॥ पुरुहूत इन्द्रः । स एवाहुतिस्तस्याः प्रस्तुतत्वात् प्रथममवतरत्सुरचापस्तेन गर्भिण्य[1] इव दृश्यन्ते बहुविधोरगमणिरागवहाः सत्यो ज्वालाः ॥ किल तक्षककोपेन जनमेजयेन सेन्द्राय तक्षकाय स्वाहेति सेन्द्रतक्षकाहुतिः प्रस्तुता ॥

॥ ४८३ ॥ वेपते शरणागतविषधरेन्द्रफणावलयफलितचरणाग्रः कुपितो यो नरेन्द्रो जनमेजयस्तेन विसृष्टः प्रेषितो यः पुरोहितोऽर्थात् तस्य स्रुचि अधिरूढ इव सुरनाथः ॥ [2]स्रुच्यारूढ इवास्म्यनेनापराधेनेति मन्यमानः कम्पित इत्यर्थः ॥

॥ ४८४ ॥ इति यस्मिन्पितृवधाद्धेतोः पाण्डवेन जनमेजयेन विहितं पुरा भुजगसत्त्रं निरुषितः श्रीकण्ठोपकण्ठमार्गे प्रभुस्तस्मिन् ॥ महापुरुषनिषेवितत्वं तत्र निरन्तिवासे हेतुः ॥

[1]MII. °र्भिण्यः. [2]MII. स्रुच ऋचा १°.

पण्डु-तणएण कर-यल-पाविय कवयञ्चलेण अक्खित्तो ।
जाल ट्ठिय-जल-यर-विब्भमेण सो जम्मि कुरु-णाहो ॥ ४८५ ॥

भाविय-भारह-कलहं भारह-कलहेण सरवरे तम्मि ।
कामं सकामिणीएण सलिल-कीला विरइयाओ ॥ ४८६ ॥

कि च । ५

माया-माहप्प गुणेहिँ जेण बद्ध जयंपि णीसेसं ।
तं संजमिउं माहवमीहन्त णरिन्द मूढोसि ॥ ४८७ ॥

॥ ४८५ ॥ पाण्डुतनयेन भीमेन करतलप्राप्तकवचाञ्चलेनाक्षिप्तो
[1]जालस्थितजलचरविभ्रमेण सो यस्मिन्कुरुनाथ ॥

॥ ४८६ ॥ भावितभारतकलहेन* भृतकलभेन* सरसि तस्मिन्
काम सकामिनीकेन सलिलक्रीडा विरचिता ॥ विभ्रमोत्राध्यवसाय ।
२कुरुनाथो दुर्योधन । भावित स्मृतम् । *कलभभरण* हस्तिपोतक-
पोषणम् ॥

॥ ४८७ ॥ यत्र प्रदेशे भीमेनापराधमुद्घोष्य दुर्योधनस्योरुभङ्गो
विहितस्तत्र नृपस्य करुणा वर्णयितु पञ्चभि कुलकमाह । माया-
३माहात्म्यगुणैर्येन बद्ध जगदपि नि शेष त सयमितु बन्दु माधव
वासुदेवम् ईहम न हे नरेन्द्र दुर्योधन मूढोऽसि इत्यपराधोद्घाटनम् ।
माया अविद्या । तस्या गुणा रागादय । अन्योऽपि चौरादिर्गुणैर्बध्यत
६इति गुणरूपणम् ॥

[1]MB जल°.

जा जिण्हुणा णराहिव धय-माला गो-ग्गहे परिग्गहिया ।
दुवय-सुया-सिचय-परम्पराएँ सो आसि पडिबिम्बो ॥ ४८८ ॥

मोत्तूणबाहु-सिहरं ठाणे अप्फालिया तए ऊरू ।
एएसुंचिय जङ्घा-बलाण भीरूण आसङ्घो ॥ ४८९ ॥

॥ ४८८ ॥ या जिष्णुना जयशीलेनार्जुनेन हे नराधिप सुयोधन ध्वजमाला गोग्रहे परिगृहीता एकाकिनापि पराजित्यापहृता [1]द्रुपदसुताचिन्हपरंपरायाः* स आसीत् प्रतिबिम्बोदयः[2] । [3]द्रौपद्याश्चिन्हपरंपरा केशविमोकवस्त्रापहारादिका तत्प्रतिरूपकं [4]तदेकाकिनापि भूयसां पत्तीनामाचरितम् । भवद्भिः पुनरबलायाः खलीकारः कृतः । अतः प्रतिबिम्बमात्रमिदं न तु त्वदाचारसमानं मलिनमित्यर्थः ॥

॥ ४८९ ॥ मुक्त्वा बाहुशिखरं स्थाने औचित्ये आस्फालिते त्वयोरू । यतः एतेष्वेव ऊरुषु जङ्घाबलानां पलायनैकशरणानां भीरूणां भवादृशानां संभावना आस्था ॥ किल सुभटानां करास्फोटाख्यं प्रसिद्धम् । तद्वदिह ये दुर्योधनेन ऊरू प्रस्फालिते तत्र[5]........। थामे इति पाठे ऊर्वोरेव स्थाम पलायनबलं संभवतीत्यर्थः ॥

---

[1] MH. adds सिता between सुता and चिह्न°.

[2] So MH.

[3] MH. °द्याचि°.

[4] MH. देककेनापि-

[5] This is doubtless a very corrupt passage. The MH. reads थामे इति पाठे ऊर्वोरेव स्थाम लिनायनबलं सहनीत्यर्थः. Even with our emendations it is easy to see that some words which stood after तत्र have been left out, and that थामे इति पाठ &c., begins a note on the reading 'थामे' which has become intermixed with the previous note on the meaning of Duryodhana having beaten his thigh, when he invited Draupadi to come and sit upon it.

तइया ठिओसि जं किर पलोट्ट-संरम्भ-सेय-विणिवुड्डो ।
एसा सा तइ सलिल-प्पवेस-जोग्गा कया आसि ॥ ४९० ॥

इय ऊरु-रुयं भीमेण जम्मि संभारियावराहेण ।
गमिओ रिऊ विहायम्मि तम्मि करुणाइयं पहुणा ॥ ४९१ ॥

कवलिय-किरीडि-चूडा-रयण-कणे इव विसाणल-फुलिङ्गे ।
जम्मि मुयन्तो न पुणो कण्णेण सरीकओ भुयओ ॥ ४९२ ॥

॥ ४९० ॥ तदा स्थितोसि यत्किल प्रवृत्तसंरम्भस्वेदे विनिकुडितः एषा सा त्वया सलिलप्रवेशयोग्या कृतासीत् ॥ त्वया किल उदासीनेष्वस्मासु प्रथमसंरम्भसमये समुद्योगविशेषमुपासता[1] कुपुरुषेण संरम्भातिशयजस्वेदप्रवाहैरङ्किता स्वतनुरासीत् । तेन चाचरितेनेदं सूचितम् । यदुत उद्योगयोगिषु पाण्डवेषु मया पलाय्य जलप्रवेश आश्रयणीय इति ॥

॥ ४९१ ॥ इति भणितप्रकारेण [2]ऊरुरुजं भीमेन यस्मिन्संस्मारितापराधेन[3] गमितः प्रापितो रिपुः सुयोधनो विभागे प्रदेशे तस्मिन्करुणायितं प्रभुणा यशोवर्मणा ॥ तादृक्सहायसंपदोपि दुर्योधनस्य तादृशी आपत् कथं वा आपरपयोधिमग्नोपि भीमेन महाबलपराक्रमेण कोपान्धतमसविलुप्तविवेकालोकेन न कृपास्पदीकृत इति करुणाबीजम् ॥ कुलकम् ॥

॥ ४९२ ॥ अथ तिसृभिर्विशेषकम् । कवलित यत्किरीटिनः अर्जुनस्य चूडारत्नं तस्य कणानिव [4]विषानलस्फुलिङ्गान्यस्मिन्नुद्देशे मुञ्चन्न पुनः कर्णेन शरीकृतो भुजगः ।

---

[1]So MH. [2]MH. is here much confused, and seems to read °णोभणभयं ( for णोरुमरुमयं ?).

[3]MH. सभारिताप° । [4]MH. °ज्ञानस्मिन्.

उक्कत्तंपि हु खण-मेत्त-तह-परिट्ठिय-पसाय-रोमञ्चं ।
जम्मि निय-कत्ति-कवयं तेणेय पणामियं हरिणो ॥ ४९३ ॥

तम्मि महारह-राहेअ-रह-रहङ्गग्ग-दारिय-धरम्मि ।
उद्देसे आसि णराहिवाण वियडा कहुल्लोला ॥ ४९४ ॥

[1]खाण्डववनदाहसमये कृतवैरः कण्डपुच्छो नाम सर्पः अर्जुनेन सह युद्धोद्यतस्य कर्णस्य शरीभूय अर्जुनस्य शिरश्छेत्तुं प्रसृतः । तेन च सारथीभूतवासुदेवकृतरथप्रयोगविशेषस्यार्जुनस्य शिरस्यप्रभवता शिरश्चूडामणिरेव[2] प्राप्तः सन्कवलितः । ततः पुनस्तेन सर्पेण गत्वा कर्णोऽभ्यर्थितो यदुत भूय एकवारं मां शरं कुर्विति । कर्णेन तु कथमहमेकस्यैव द्वितीयं शरं क्षिपामीति दर्पान्न पुनः शरीकृतोऽसौ ॥

॥ ४९३ ॥ उत्कृत्तमपि खलु क्षणमात्रं तथैव परिस्थितं विलम्बितं महतोऽर्थिनो मम च दातुरल्पकमेतदिति धिया प्रसादवशोत्पन्नरोमाञ्चं कृत्वा यस्मिन्प्रदेशे निजकृत्तिभूतं स्वशरीरधर्मत्वापन्नं कवचं *हसित्वा प्रणामितमर्पितं हरेरिन्द्रस्य । तद्योगाद्दुर्जयं कर्णं बुद्ध्वा स्वतनयार्जुनस्नेहादिन्द्रेण ब्राह्मणरूपेण कर्णः कवचं प्रार्थितस्तेन चासावुत्कृत्य दत्त इति प्रसिद्धिः ॥

॥ ४९४ ॥ तस्मिन्महारथराधेय [रथ] रथाङ्गाग्रेण दारितधरे उद्देशेऽभूवन्नराधिपानां विकटा विततः कथोल्लोलाः कथाप्रबन्धाः कर्णादिगुणदोषोद्ग्राहणिकात्मकाः । किल भार्गवरामेण कर्णस्य [3]शापो दत्तो भुवि ते रथचक्रं गमिष्यतीति कथा ॥ विशेषकम् ॥

---

[1]MH. खंडग॰ for खाण्डव॰. [2]MH. adds शिरःस्थाने after ॰मणिरेव.
[3]MH. has स्थाने यशोवर्मणैकेनैव दिनेन between ॰शा and पो॰ दत्तो, doubtless transferred by the copyist from the following comment.

अवि य । १४

गोउर-मेत्त-विणिग्गय-ससङ्क-जण दीसमाण-वोच्छेयं ।
जायं णीसामण्णं परिहा वलयं णहंचेय ॥ ४९५ ॥

ओयरणा दिट्ठ-च्छेय-पयड णह मग्ग पडिनियत्तेहिं ।
विल-मज्झेच्चिय भय-पुञ्जिएहिँ भुयएहिँ वीसमियं ॥ ४९६ ॥

कहवि समुप्पयण-वसा तह-लद्ध-च्छेय-विहडियद्धाओ ।
दीसन्ति अहिणवाओॅव ठिएयरद्धाओॅ वडहीओ ॥ ४९७ ॥

॥ ४९५ ॥ अपि च । अधुना यत्र हरिश्चन्द्रनगरी स्वमाहात्म्येनैव स्वर्गमुत्पतिता तत्र स्थाने यशोवर्मणा एकेनैव दिनेन [1]सुरप्रसाद महदत्र विनिर्मितमिति वर्णयितु नगर्युत्पतनसनिवेश द्वादशकुलकेन वर्णयितुमाह । गोपुरमात्रविनिर्गतसशङ्कजनदृश्यमानव्युच्छेद नि:-*सामान्य जात परिखावलय नभ एव ॥ परिखा वरनगररक्षार्था चतुर्दिक्का वेदि । सा च वलयाकारत्वाद्वलयमिव । गगनोत्पतितायां च नगर्यां गगनमेव [2]अनुलङ्घनीयम् अनन्तत्वात् परिखावलयमवलोकितम् ॥

॥ ४९६ ॥ अवतरणाद् दृष्टच्छेदत्वेन अवलोकितभूमिनगरीविभागेन हेतुना प्रकटान्निराधारान्नभोमार्गान्निवृत्तैर्बिलमध्य एव *सपिण्डितै कुण्डलीभूतैर्भुजगैर्विश्रान्तम् ॥ अवतरन्त्यनेनेत्यवतरण तस्मान्नभोमार्गादधोमुखान्निवृत्तैरित्यन्वय कार्य । आधारभूमिखण्डोत्पाटनेनोत्पतिताया नगर्यां भूतलबिलेभ्यो निर्जिगमिषूणां भुजगानां चरितमेतत्॥

॥ ४९७ ॥ कथमपि समुत्पतनवशात्तथा तेन प्रकारेण लब्धच्छेदत्वाद्विघटितमर्धं यासा ता दृश्यन्ते अभिनवा इव स्थितेतरार्धा

[1] So MH, both as to form and gender MH ल्ङ्घनी°

छिन्न-धरा-यल-पडिबन्ध-खुडिय-सोत्तुग्गमेहिँ पडिवण्णं ।
तुच्छत्तणमुम्मिल्लन्त-गाहिर भावेहिँ अवडेहिं ॥ ४९८ ॥
परिलम्बिज्जइ घोलन्त-सङ्कल-च्छेय-पायडद्धेहिँ ।
मूलम्मि मुहल-घण्टा-लीलाएँ णिहाण-कलसेहिं ॥ ४९९ ॥
उव्वेयन्तिव अहिणव-निमेस-वोच्छेय-णिच्च-पिहुलाइं ।
अविलासाइँव दंसण-रसेवि मिहुणाण अच्छीइं ॥ ५०० ॥

३वलभ्यः काकिण्यः [1]प्रासादायतनपुराणि ॥ दूरत्वान्नवनिर्मिता इव भान्तीत्यर्थः ॥

॥ ४९८ ॥ छिन्नधरातलमेव प्रतिबन्धः प्रतिबध्नातीति कृत्वा तेन [ [2]खण्डिताः स्रोतउद्गमा येषां तैः उन्मील्यमानाः प्रकटीभवन्तो
३गभीरभावा येषां तैरवटैः कूपैस्तुच्छत्वं प्रतिपन्नं प्राप्तम् ॥ ]

॥४९९॥ [ परिलम्ब्यते घूर्णमान] [3]शृङ्खलाच्छेदप्रकटार्धैर्मूले नगर्या मुखरघण्टालीलया निधानकलशैः ॥ शृङ्खला एव च रणरणायमान-
३त्वाद्धण्टात्वेन कविना कल्पिताः । दूरीकृतनिखातानि [4]निधानानि नगरीपीठोत्पाटनोत्पाटितानि शब्दायमानशृङ्खलानि प्रलम्बन्त इत्यर्थः ॥

॥ ५०० ॥ उद्वेजयन्तीव अभिनवनिमेषव्युच्छेदनित्यपृथूनि अविलासानीव दर्शनरसेपि मिथुनानामक्षीणि ॥ देवत्वमापन्नानां स्वर्ग
३गतानां नागराणामनिमेषदृष्टित्वम् । निमेषाभावादन्योन्यदर्शनाविच्छेदेन सविलासत्वे सत्यपि अनारतदृष्टित्वं तरुणानां निर्लज्जत्वमेव बोधयति । लज्जैव भूषणं योषितामित्यविलासानीवेत्युक्तम् ॥

---

[1] MH. प्रसादा.

[2] MH. omits couplet 499 and mixes up into one the commentary which belongs to the two couplets 495 and 499. My attempt to restore the chhâyâ is given within brackets.

[3] MH. प्रकटार्धे. [4] MH. निधनानि.

मारुअ-संचरण-वसा कम-भिज्जन्तम्मि भूमि-पडिवन्धे ।
तद्दियस-पलहुओच्चेअ होइ णयरीएँ विणिवेसो ॥ ५०१ ॥
पउराण जामिणीसुवि अभिण्ण-णिद्दालसाण निव्वडइ ।
णयरि-परिसक्कणक्कन्त-दियस-सीमाण पडिबोहो ॥ ५०२ ॥
पावन्ति कुलाल-उलाइँ भूमि-दुलहत्तणेण तद्दियसं ।
कह-कहवि पङ्क-पिण्डं परिरक्खा-परिमियंचेय ॥ ५०३ ॥
हेट्ठाअव-वसुआइज्जमाण-मूल-क्कमूससन्त-रसं ।
जायमहो-रय-सिढिलं अग्ग-सिणिद्धं धरा-वेढं ॥ ५०४ ॥

[॥ ५०१ ॥ मारुतसंचरणवशात् क्रमभिद्यमाने भूमिप्रतिबन्धे प्रतिदिवसप्रलघुक एव भवति नगर्या विनिवेशः ॥ ]

॥ ५०२ ॥ पौराणां यामिनीष्वपि अभिन्ननिद्रात्वेन अलसानां निर्वर्तते[1] संपद्यते नगरीसंबन्धिना [2]परिष्वक्कणेन गमनेन आक्रान्तः प्राप्तो दिवससीमा नित्यदिवसावधिः स्वर्गो यैस्तेषां प्रतिबोधः ॥ स्वर्गे किल सदा दिवसः । आदित्यस्य अनावरणात् अस्ताचलादिना । अतश्च नगर्योत्पतितया मध्यरात्रे स्वर्गे प्रापितानां पौराणामादित्यालोकं पश्यतां निद्रालसानामेव प्रबोधो जातः ॥

॥ ५०३ ॥ प्राप्नुवन्ति कुलालकुलानि भूमिदुर्लभत्वेन प्रतिदिवसं [ कथं ] कथमपि पङ्कपिण्डं परिरक्षापरिमितमेव । राजाश्रयेत्यर्थः ॥

॥ ५०४ ॥ अधस्तनातपशोष्यमाणमूलक्रमोच्छ्वसद्रसं जातम् अधोरजःशिथिलम् अग्रस्निग्धं [3]धरापृष्ठम् ॥ आदित्यस्योपरि स्थितत्वान्नगरीभूपीठम् अधः शुष्कं प्रान्ते तु आर्द्रमित्यर्थः ॥

[1]MH. निवतते. [2]MH. परिष्कणेन- [3]MH. °पिठम् .

दिव्व-विडवाहिरामेवि उववणे सरस-मञ्जरि-फलम्मि ।
लालिज्जन्तिचिय पढम-णेह-बन्धेण भू-तरुणो ॥ ५०५ ॥
सामायन्तेवि मही-यलम्मि रयणी-तमाणुवन्धेण ।
उप्पइय-दिणयरायव-वसेण दियसोच्चिय पुरम्मि ॥ ५०६ ॥
इय जम्मि पएसे पहु-पहाव-पडिवण्ण-परियर-सहाए ।
उप्पइयं स-तरु-सुरालयाएँ हरियन्द-णयरीए ॥ ५०७ ॥
तम्मि जहागम-पडिवण्ण-वियड-भू-वाल-कित्ति-सरसम्मि ।
सुर-पासाओ पहुणा एक्केण दिणेण निम्मविओ ॥ ५०८ ॥

॥ ५०५ ॥ दिव्यविटपाभिरामेऽपि उपवने *सुरभिमञ्जरीफले [1]लाल्यन्त एव प्रथमस्नेहबन्धेन भूतरवः ॥ स्वर्गोपवने पारिजातकादि-
२दिव्यतरुसुन्दरतरेऽपि पूर्वपरिचितत्ववशेन क्षितिवृक्षा रक्ष्यन्त एव नोपेक्ष्यन्ते पौरैः । आश्रितवत्सलत्वादित्यर्थः ॥

[ ॥ ५०६ ॥ श्यामायमानेऽपि महीतले रजनीतमोनुबन्धेन उत्पतितदिनकरातपवशेन दिवस एव पुरे ॥ ]

॥ ५०७ ॥ इति उक्तप्रकारेण यस्मिन्प्रदेशे प्रभुप्रभावप्रतिपन्न-
परिकरसहितया उत्पतितं *सरससुरालयया प्रत्यग्रदेवागारप्रयुक्तया
२हरिश्चन्द्रनगर्या ।

परिकरो नरकरितुरगादिरनुचरः ॥

॥ ५०८ ॥ तस्मिन्प्रदेशे प्रतिपन्नयथागमविकटभूपालकीर्तिसरमे [2]सुरप्रासादः प्रभुणा एकेन दिनेन निर्मापितः ॥ उत्तमं स्थानं मया
२दृष्टं कथं नाम शून्यमास्तामिति मत्वा देवप्रतिष्ठा तत्र कृता । प्रभु-
शक्तियोगश्चैकदिननिर्माणेन सूचितः । कुलकम् ॥

[1] MH. लाल्यन्त. [2] MH. °प्रसादः

जस्स कडय-ट्ठियाओ केसव-केऊर-कणय-रेहाओ ।
अज्जवि कुणइ णडाले सिला-णिहट्टङ्गुली लोओ ॥ ५०९ ॥
णीलं सिहर-च्छायं पेच्छन्तो तस्स मन्दर-गिरिस्स ।
पडिवज्जइ तम्मि समिद्ध-जणवओवायणे देओ ॥ ५१० ॥
अहिलेन्तस्स कमेणय जक्खाहिव-लक्खियं दिसं तस्स ।
जाओ विसेस-दुसहो पयण्ड-किरणस्सव पयाओ ॥ ५११ ॥
अग्घन्ति सरस-सुर-दारु-भङ्ग-णीसन्द-सुरहिणो तस्स ।
गिम्हहिय-णव-पुरामोय-सीयला तम्मि उद्देसा ॥ ५१२ ॥

॥ ५०९ ॥ अथ युगलकम् । यस्य कटकस्थिताः केशवकेयूरकनकरेखा अद्यापि करोति ललाटे शिलानिघृष्टाङ्गुलिर्लोकः ।

क्षीरोदधिमथनसमये हि हरिकराकर्षणं मन्दरस्य बभूव । तद्वशात्केशवबाहुकेयूरनिघर्षणेन निकषपाषाणवत् कटकशिलासु कनकरे-
२खायाः संभवः । तत्र च लोकः अङ्गुलिनिघर्षं कृत्वा वन्दनार्थं ललाटतलं स्पृशति ॥

॥ ५१० ॥ नीलां शिखरच्छायां प्रेक्षमाणस्तस्य महेन्द्रगिरेः प्रतिपद्यते प्राप्नोति "तस्मिन्स्निग्धजनपदानां सस्नेहलोकानामुपायनानि
२कौशलिकानि देव ॥ नीलमणियोगान्नीलाः शिखरच्छायाः । स्निग्धजनाः पराजित्य संमुखत्वमापादिता नृपाः । युगलकम् ॥

॥ ५११ ॥ अभिलातः आभिमुख्येन गृह्णतः अभिलीयमानस्य वा क्रमेणैव यक्षाधिपलक्षिताम् उत्तरां दिशं तस्य जातो विशेषदुः-
२सहः प्रचण्डकिरणस्यैव प्रतापः ॥

॥ ५१२ ॥ अर्घन्ति शोभन्ते सरससुरदारुभङ्गनिष्यन्दसुरभ-

किंच जायं। १४६

एस सरो जस्स इमा हरन्ति उब्बुद्ध जल-कलम्बाओ ।
णल-कुञ्ज-मुहल-जल-रङ्कु-संकुला कूल-लेहाओ ॥ ५१३ ॥
अह कमल-काणण-ट्ठिय-सिरि-दंसण-मिलिय-जल-णिहि च्छायं ।
उव्वहइ मलिय-पायाल-पल्ललं सलिल-संघायं ॥ ५१४ ॥
एए विहय-वहुव्वेल्ल-णलिणि-दल-सण्ड-पण्डुरद्धन्ता ।
विरल दल-जज्जरुद्दण्ड-जरढ-कमला सरुद्देसा ॥ ५१५ ॥
सुरहिमिह गन्धमासिसिर-वाल-मउलुग्गमाण जम्बूण ।
मयरन्दमारविन्दं च इह समीरो पसारेइ ॥ ५१६ ॥

यस्तस्य संबन्धित्वेन निर्मथितनवसुरामोदशीतलास्तस्मिन्दिग्भागे
२प्रदेशाः ॥ सुराया निर्मथनं कर्पूरादिवासः ॥

॥ ५१३ ॥ अष्टात्रिंशदधिकेन शतेन महाकुलकम् । एतत्सरो यस्येमा हरन्ति उद्बुद्धजलकदम्बा नडकुञ्जमुखरजलरङ्कुसंकुलाः
२कूलरेखाः ॥ जले स्थले च कदम्बसंभव इति विशेषणमर्थवत् । जलरङ्कवष्टिट्टिभाः ॥

॥ ५१४ ॥ अथेति निपातस्तथार्थे । तथा कमलकाननस्थित-श्रीदर्शनमिलितजलनिधिच्छायमुद्वहति [1]मर्दितपाता [ लपल्व ] लं
२सलिलसंघातम् ॥

॥ ५१५ ॥ एते विहगवधूभिश्चञ्चुकोटिप्रहतिवशादुद्वेल्लानि परिवृत्तान्युच्छलितानि नलिनीदलषण्डानि तैः पाण्डुरार्धान्ताः पाण्डुर-
२पर्यन्ता विरलदलजर्जरोद्दण्डजरठकमलाः सरुद्देसा सरःप्रदेशाः ॥-
शरदि हि [2]पत्रपर्णानां पातो भवतीति विरलादित्वम् ॥

॥ ५१६ ॥ सुरभिमिह गन्धम् ईषच्छिशिरबालमुकुलोद्गमानां

---

[1]MH. मलि॰. [2]MH. ॰पर्णपातो.

इह ते मय-कल-कायम्ब-कण्ठ-कन्दलिअ-सारसक्कन्दा ।
सोहन्ति वलायालीढ-णील-णिउला तडुद्देसा ॥ ५१७ ॥
सुसिरोसरिय-सकद्दम-जड-जल-लव-भिण्ण-भङ्ग-रस-सारो ।
इह सो परिदलिय-कसाय-गण्ठि-गन्धो मुणालाण ॥ ५१८ ॥
अण्णुण्ण-णिग्गमुक्खित्त-विसम-दल-संणिवेस-णिबिडाओ ।
इह ता संचार-क्खलिय-कुक्कुहा रण्ण-णलिणीओ ॥ ५१९ ॥

जम्बूनां मकरन्दमारविन्दं चेह समीरः [1]प्रसारयति ॥ सुरहिनवग-
२न्धमिति पाठान्तरम् । सुरभिनवगन्धमिति तत्रार्थः ॥

॥ ५१७ ॥ [2]इह ते मदकलकादम्बकण्ठसंचँलितसारसाक्रन्दाः शोभन्ते बलाकालीढनीलनिचुलास्तटोद्देशास्तटप्रदेशाः ॥ कादम्बाः
२पक्षिविशेषास्तत्कण्ठशब्देन च शब्दो लक्षितः । निचुलो वेतसः । बलाका बकाः ॥

॥ ५१८ ॥ सुषिरापसृतसकर्दमजललवसंभिन्नभङ्गरससारः इह परिगलितकषायो[4] ग्रन्थिगन्धो मृणालानां बिसानाम् ॥ [3]अत्रोपलभ्यत
३इति शेषः ॥

॥ ५१९ ॥ अन्योन्यनिर्गमनोरिक्षप्तविषमदलसंनिवेशनिबिडाः इह ताः संचारस्खलितकुक्कुहा अरण्यनलिन्यः ॥ [4]कुक्कुहाः पक्षिविशेषाः । सर्वनामानि सर्वत्र ते लोचने[5] इतिवत् ॥

---

[1]MH. adds गन्धम् after प्रसारयति.

[2]MH. is wanting in all this couplet except the first words इह ते मय and the words इह ते मद of the obhâya. The text given above is restored from Do. P. K.

[3] MH. ⁰लभ्यत इति. [4] So MH [5] MH. लोचन इ⁰.

मोह-रसियाइँ इह णिव्वडन्ति णह-घोलिराण कुरराण ।
उव्वत्त-मीण-ताडिय-घण-णलिणि-दलासु सरसीसु ॥ ५२० ॥
इह वायस-सेविअ-कीडइल्ल-वसुआय-चिविड-सालूरा ।
जालिय-कड्डिय-सम्बूय-सेवला तीर-पेरन्ता ॥ ५२१ ॥
उव्वेल्लेइ समीरो कलह-करग्गावसोण-मूलाइं ।
संखाय-फेण-फुड-पिच्छिलाइँ इह नलिणि-वत्ताइँ ॥ ५२२ ॥
पेरन्त-लूण-कमला थोय-जलुव्वत्त-तुङ्ग-णालाओ ।
इह रोह-सद्दलावद्ध-मडह-वत्ताओ णलिणीओ ॥ ५२३ ॥

॥ ५२० ॥ [1]मोघरसितानीह [2]निर्वर्तन्ते *घनघूर्णितानां कुरराणा-
मुद्वृत्तमीनताडितघननलिनीदलासु सरसीषु ॥ मोघं निष्फलम् । घनं
३निविडम् । कुररा [3]ढेङ्काः । घननलिनीदलच्छन्नत्वेन मत्स्यान्प्राप्तु-
मशक्नुवन्त इति मत्वा रोदनप्रायरसिताः संपद्यन्ते कुररा इत्यर्थः ॥

॥ ५२१ ॥ इह *वायससंकुलकीटयुक्तशुष्कचिपिटमण्डूका जा-
*लकाकृष्टशम्बूकशैवलास्तीरपर्यन्ताः ॥ इल्लो मत्वर्थीयः । वसुआयं
३शुष्कम् । चिपिटं पिण्डितदुर्बलम् । सालूरो मण्डूकः । शम्बूकाः सू-
क्ष्मशङ्खाकृतयः कृमिकलेवरप्राया अस्थिशेषाः शङ्खोडा इति प्रसिद्धाः ।

[ ॥ ५२२ ॥ उद्वेल्लयति समीरः कलभकराग्रापशोणमूलानि
संस्त्यानफेनस्फुटपिच्छिलानि इह नलिनीपत्राणि ॥ ]

॥ ५२३ ॥ पर्यन्तलूनकमलाः स्तोकजलत्वेनोद्वृत्ततुङ्गनाला इह
[4]रोधःशाद्वलाबद्धाल्पपत्रा नलिन्यः ॥ रोधस्तटम् । बद्धत्वं शैवा-
३लेन । मडहं अल्पम् ॥

---

[1]MH. मेघ° [2]MH. निवर्नन्ते. [3]MH. ढिङ्काः [4]MH. रोधशा°.

णिव्वावेन्तिव हिययं एए घण-मलिय-तल-वणा गिरिणो ।
मुहल-विहङ्गा अ सरा सुण्ण-पसण्णाइँ अ वणाइं ॥ ५२४ ॥
सरिआण तरङ्गिय-पङ्क-वडल-पडिबद्ध वालुया मसिणा ।
एए ते पविरल-कास पल्लवा पुलिण-वित्थारा ॥ ५२५ ॥
इह मत्ताणेय-विहङ्ग-मुहल-कल्लोल-कलयलुप्पित्था ।
विरलं सुअन्ति सरसी-परिसर परिवेसिणो गामा ॥ ५२६ ॥
एए पूरालुङ्खण-विराय-पङ्कोल्ल-पढम-वित्थारा ।
जाया अहिणव-णिग्गम-हरिय-सिहा सद्दलुद्देसा ॥ ५२७ ॥

॥ ५२४ ॥ [1]निर्वृतं कुर्वन्तीव हृदयमेते [2]घनमार्दिततलवना गिरयः। मुखरविहङ्गानि च सरांसि शून्यप्रसन्नानि च वनानि ॥ घना मेघास्ते[3] ३निर्वृतं कुर्वन्त इव हृदयं गिरितल एव तिष्ठन्ति। शून्यानि निर्जनानि ॥

॥ ५२५ ॥ सरितां तरङ्गितपङ्कपटलप्रतिबद्धवालुका मसृणाः एते ते [4]प्रविरलकाशपल्लवाः पुलिनविस्ताराः ॥

॥ ५२६ ॥ इह मत्तानेकविहंगमुखरकल्लोलकलकलत्रस्ताः सन्तो . विरलं स्वपन्ति परिसरँसरसीपरिवेशिनो महासरःसमीपनिवेशिनो ३ग्रामाः ॥ परितः सर्वदिक्कं समन्तात्सरन्तीति परिसरास्ताश्च ता महान्ति सरांसि सरस्यः ॥

॥ ५२७ ॥ एते पूरस्पृष्टत्वेन विरतः आच्छादितः [5]पङ्कार्द्रैः प्रथमविस्तारो येषां ते तथा जाता अभिनवविनिर्गमहरितशिखाः शाद्व-

[1]MH. निवृत्तं कुर्वती for निवृर्तं कुर्वन्तीव. [2]MH. °मलिन°. [3] MH. घना मेघाःस्ते सरणाई निवृत्तं कुर्वन्त च हृदयादि गिरितल एव &c. The emendation is conjectural. [4]MH. °राम°. [5]MH पंकार्द्रा प्रथम°.

कमल-वण-विणिग्गय-मुहल-कुक्कुहा सायमिह सुहावेन्ति ।
थोउम्हाअन्तुम्मस अ-सद्दला कच्छ-वोच्छेया ॥ ५२८ ॥
सम्बूअ-चुण्ण-सबला इह णिहसण-मसिण-वामलूराओ ।
विडिमाण पयन्तर-णिन्त-विसम-हरियाओ पयवीओ ॥ ५२९ ॥
तड-णिउल-मञ्जरी-णिम्महन्त-जल-गन्ध-सीयला एए ।
तणु-सुत्ति-सार-पेरन्त-वालुया सद्दलुद्देसा ॥ ५३० ॥

लोद्देशाः ॥ आलुङ्खियमिति देशीपदं स्पर्शार्थम् । उल्लियमिति देशीधातुरार्द्रीभावे ॥

॥ ५२८ ॥ कमलवनविनिर्गतमुखरकुक्कुहाः सायमिह सुखयन्ति स्तोकोष्मायमाणोद्गतमशकशाद्वला[1]: कच्छविच्छेदाः ॥ निवासार्थितया कुक्कुहानां पक्षिविशेषाणां कमलवनात्सायं विनिर्गमनम् ॥

॥ ५२९ ॥ शम्बूकानां कीटास्थिविशेषाणां चूर्णेन शबला इह निघर्षेण पांसुकृतेन मसृणवल्मीकाः । वामलूरो वल्मीकः ॥ अन्यथाप्यत्र पाठो दृश्यते । [2]संपुन्नचुन्नसबला इह णिहसणमासिणवामलूराओ । विहयाण [3]पयन्तराणिन्तविसमहरियाउ पयवीओ ॥ संपूर्णेन रजसा शबला विहगानां पदान्तरेभ्यः पदबिम्बमध्येभ्यो निर्यन्तो निर्गच्छन्तो विषमं कृत्वा हरिता अङ्कुरा यत्र ता इत्यर्थस्तत्र पाठे ॥

॥ ५३० ॥ *नइवलतलेपु ये निचुला वेतसास्तेषां या मञ्जर्यस्ताभिर्निर्महतः [4]आमोदयतो जलस्य गन्धेन शीतलाः सुन्दरा एते तनुशुक्तिशैवलपीठवालुमंस्त्यायाः[5] । शुक्तयो जलप्राणिविशेषास्थीनि ।

[1]MH. °शद्दलाः. [2]MH, °चदन° for °चुन्न°. [3] MH, °त° [4]MH.आमोदयते. [5]MH. °स्नंस्यायाः for °संस्त्यायाः.

एयाओँ वाय-धूसर-करीस-कविस-धरणी-सुअन्धाओ ।
रण्ण-त्थलीओँ उव्वुत्थ-गोउला देन्ति उक्कण्ठं ॥ ५३८ ॥
सोहन्ति सरस-सूई-णिग्गम-हरियायमाण-मूलाओ ।
इह चिण्ण-विसह-वड्ढिय-रूढ-तणा रण्ण-सीमाओ ॥ ५३९ ॥
इह धाउ-लिहिय-देव-त्थलाओँ रण्ण-त्थलीओँ सूएन्ति ।
आलीयमाण-भासा परिवुत्थं महिस-सत्थाण ॥ ५४० ॥
संतत्थ-विरल-कङ्कन्तरेसु गोमाउणो इह उवेन्ति ।
भय-चलियण्ण-दिसा-घडिय-वायसं महिस-कङ्कालं ॥ ५४१ ॥

॥ ५३८ ॥ एताः शुष्कधूसरकरीषकपिशधरणीसुगन्धाः अरण्यस्थल्यः [1]उद्‌षितगोकुलाः प्रोषितगोधना ददत्युरुत्कण्ठां गोकुलस्मृति-
२मुपजनयन्त्यः ॥ वायं शुष्कम् ॥

॥ ५३९ ॥ शोभन्ते सरससूचीनिर्गमहरितायमानमूलाः इह वृषभभक्षित [वर्धित] रूढतृणा अरण्यसीमानः ॥ चिन्नं चरितं
२भक्षितम् । चिन्नविसिहेति पाठे चरितविशिखेत्यादिरर्थः ॥

॥ ५४० ॥ इह धातुलिखितदेवस्थलत्वादरण्यस्थल्यः सूचयन्ति आलीयमानभासत्वाच्च पर्युषितं परिवासं महिषसार्थानाम् ॥ भासाः
२पक्षिविशेषा महिषपुरीषोपजीविनः ॥

॥ ५४१ ॥ संत्रस्तविरलस्थितकङ्कान्तरेषु[2] गोमायवः शृगाला इह वसन्ति भयचलितान्यदिक्संघटितवायसं महिषकङ्कालं महिषक-
२लेवरम् ॥ कङ्का गृध्राः । [3]कङ्कालं इति सप्तम्यर्थे द्वितीया । महि-

[1]MH. उदुषिता०. [2]MH. कंकानरासु. [3]MH. ०कंकान इति.

इह रविणो मय-तण्हा-णिहेण णीहार-पण्डुरा होन्ति ।
सरसीसु तुलिय-तरलम्बु-वलण-विसमा इव मऊहा ॥ ५४२ ॥
कल्लोल-सिसिर-पवणा सलिलुद्देसे दिसाओँ सूएन्ति ।
इह उड्डन्त-विहङ्गम-धुयम्बु-कण-चुण्ण-मइलाओ ॥ ५४३ ॥
इह कय-फुक्कार-पडन्त-वालुया-दूसियग्ग-तोयाओ ।
पहिएहिँ कहवि पिज्जन्ति वाउ-वेएहिँ सरियाओ ॥ ५४४ ॥
उम्हाल-तरु-च्छाया गो-रेणु-विइण्ण-मारुय-णिरोहा ।
सायमिह समहिउण्हा वलन्त-भट्टाणला गामा ॥ ५४५ ॥

पक्लेवराभ्यन्तरे वसन्तीत्यर्थः । संतुट्टविरलमम्मन्तरेष्विति क्वचित्पाठः । सम्यक्त्रुटितत्वेन विरलानि यानि मर्मान्तराणि तेषु । संतुट्टेत्यपि पाठे संतुष्टास्तृप्ताः सन्त इति योजना ॥

॥ ५४२ ॥ इह रवेर्मृगतृष्णानिभेन नीहारपाण्डुरा भवन्ति सरसीषु[1] तुलिततरलाम्बुवलनविषमा इव मयूखाः ॥

॥ ५४३ ॥ कल्लोलशिशिरपवनाः सलिलोद्देशान्दिशश्च शीतलाः सूचयन्ति इह उड्डीयमानविहङ्गमधूताम्बुकणचूर्णमलिना इति दिशां विशेषणम् ॥ दिशः पवनाश्च जलप्रदेशान्निकटान्सूचयन्तीत्यर्थः ॥

॥ ५४४ ॥ इह कृतफूत्कारपतद्वालुकादूषिताग्रतोयाः पथिकैः कथमपि पीयन्ते वायुवेगैः सह सरितः ॥

॥ ५४५ ॥ ऊष्मयुक्ततरुच्छाया गोरेणुवितीर्णमारुतनिरोधाः सायमिह समधिकोष्णाः वलद्भ्राष्ट्रानला[2] ग्रामाः ॥

[1]MH. सरसीभिति तुलित°. [2]MH. om. नला.

सहरी-पसत्त-कुररा अन्तो-सद्दल-सिहं परिवहन्ति ।
अहि-गन्ध-कमलमाबद्ध-घग्घरा वारि-लेहाओ ॥ ५३१ ॥
सोहन्ति बाल-सरयम्मि नील-भू-सद्दला तहच्चेय ।
पासायग्ग-सिलन्तर-पढम-किलन्तङ्कुरा दियहा ॥ ५३२ ॥
एयाओ परूढारुण-फल-भर-बन्धुरिय-भूमि-खज्जूरा ।
कण्ठीओ निव्ववन्तिव अमन्द-करमन्द आमोया ॥ ५३३ ॥

ताभिः शबलवालुकं पीठं यत्र ते शाड्वलोद्देशाः ॥ क्वचित्तु पाठः । तणुसुत्तिसारपेरन्तवालुआ । तनुशुक्तिसारपर्यन्तवालुका इति तत्रार्थः ॥

॥ ५३१ ॥ शफरीभक्षणप्रसक्ताः कुररा यासु ता अन्तर्मध्ये शाड्वलशिखा परिवहन्ति । अहिगन्धकलमं कलमवदधिकगन्धम् ३आबद्धघर्घरा वारिलेखाः ॥ घर्घरं शाड्वलं शैवालादिजालम् ॥

॥ ५३२ ॥ शोभन्ते बालायां प्रथमायां शरदि नीलभूशाड्वलास्तथैव पार्श्वोलग्नशिलान्तरप्रथमक्लान्ताङ्कुरा दिवसाः ॥ आक्रान्त-३शिलान्तरपार्श्वलग्नाङ्कुरा इत्यर्थः । माकृते पूर्वनिपातनियमाभावात् । प्रान्यादित्यसांमुख्ये वर्तन्ते तेषामेव शिलान्तराणां पार्श्ववर्तिनो नवाङ्कुरा म्लायन्ति । न तु च्छायावर्तिनामित्यन्तरमहणम् ॥

॥ ५३३ ॥ एताः [1]प्ररूढारुणफलभरबन्धुरितखर्जूराः कण्ठ्यः पर्वतकण्ठे भवा उपकण्ठशब्दवाच्याः कण्ठिका इति लोके ख्याता ३निर्वापयन्तीव निर्वृतिं जनयन्तीव [2]अमन्दकरमन्दकामोदाः ॥ प्ररूढानि पक्कानि पक्करसयोगाच्च अरुणानि फलानि । करमन्दः फलवृक्षविशेषः ॥

---

[1] MH. °फलभरबन्धु°, [2] MH.° करचन्द.

इह सा स-केसरोव्वत्त-कुसुम-कविला करीर-वण-राई ।
रेहइ निहस-ट्ठिय-करभ-केसर-च्छेय-जडिलव्व ॥ ५३४ ॥
इह वीसमइव हिययं फुल्लक-समीर-सुरहि-गन्धेसु ।
आवाय-घडिय-कमलामोएसु वणन्त-मग्गेसु ॥ ५३५ ॥
वाढं लीढूस-घणत्तणेण गामेइआओ णोचेन्ति ।
इह अहुआसेय-विवण्ण-गोमआ रण्ण-भूमीओ ॥ ५३६ ॥
एए ते वण-सेरिह-परिमलण-पइण्ण-गोमयामोया ।
धोऊस-रेणु-परिकविस-वारिणो पल्ललुच्छङ्गा ॥ ५३७ ॥

॥ ५३४ ॥ इह सा सकेसरोद्वृत्तकुसुमकपिला करीरवनराजिः रेहइ शोभते निहसट्ठियकरभकेसरच्छेयजडिलव्व । करभ उष्ट्रपोतकः करीरपल्लवभक्षकः । तस्य निघर्षेण च्छिन्नास्त्वङ्मात्रेण स्थिता ये केसरास्तैः संजातजटेव ॥

॥ ५३५ ॥ इह विश्राम्यतीव हृदयं फुल्लार्कसमीरसुरभिगन्धेषु आपातघटितकमलामोदेषु वनान्तमार्गेषु ॥

॥ ५३६ ॥ इह ग्रामसमीपवर्तिन्योऽरण्यसीमानः अरण्यप्रदेशा ग्रामेयिका ग्राम्याः स्त्रियो नोच्चिन्वन्ति आरण्यकाः शुष्कगोमयपिण्डिका न गृह्णन्ति यतोऽहुताशेयविवर्णगोमया हुताशनायोग्यविरुद्धवर्णगोमयपिण्डकाः । वह्न्यज्वलने कारणमाह । बाढं लीढूसघनत्वेन बाढमत्यर्थं लीढः प्राप्तो य ऊषः क्षारस्तस्य घनत्वेन प्राचुर्येण शुष्कगोमयपिण्डानामूषेण वेष्टितत्वाद्वह्नेरप्रवेश इति नोच्चिन्वन्ति स्त्रियः ॥

॥ ५३७ ॥ एते ते [1]वनमहिषपरिमर्दनप्रकीर्णगोमयामोदाः अवश्यायधौतरेणुत्वे परिकपिशवारयः पल्वलोत्सङ्गाः ॥ सेरिभो महिषः ॥

[1]MH. °मलन°.

करि-कर दण्डामोडण-विसाह-सूसन्त सरल-तरु-जालं ।
एय त धूसर विरल सल्लइ मेहल रण्णं ॥ ५४६ ॥
वोलेइ लया संकलिय मुहल कलहं णियत्त करिणीयं ।
इह कुञ्जराण मुह मेत्त वलिय-जूहाहिवं जूहं ॥ ५४७ ॥
इह दिण्ण-भूमि मद्दा परिलूणासण्ण विडवि-साहग्गा ।
सूएन्ति महा तरुणो गइन्द-जूहाण वीसमिअ ॥ ५४८ ॥
इह अजवोरु वराहा अवरोप्पर-सत्तु-सावय वहाओ ।
भमियव्वाओं पविरलं रुरु सिङ्गग्गईओं भूमीओ ॥ ५४९ ॥
इह मूल पविरलेसुं संवग्गिय मुणि जणावसेसेसु ।
संवज्जन्ति विहङ्गा फलेसु नीवार-विडवाण ॥ ५५० ॥

॥ ५४६ ॥ [ ¹करिकरदण्डामोटनविशाखशुष्यत्सरलतरुजालम् ] एतत्तध्दूसरविरलसल्लकीमेखलमरण्यम् ॥ ²सरलतरवो देवदारव. । ²सल्लकी कदली ॥

॥ ५४७ ॥ वेत्रलतासंकलितत्वेन मुखरो य कलभस्तस्मान्नि-वृत्तकरिणीकम् इह कुञ्जराणा मुखमात्रवलितयूथाधिप यूथम् ॥ ³करिणी स्त्रीस्वभावाद्भयान्निवर्तते । यूथाधिपस्तु धैर्यादेव हेलया वलितवदनमात्रेण वीक्षत इति स्वभाव ॥

॥ ५४८ ॥ इह दत्तभूमिमर्दा परिलूनासन्नविटपिशाखाग्रा सूचयन्ति महातरवो गजेन्द्रयूथाना विश्रान्तम् ॥

॥ ५४९ ॥ इह अजवीरुवराहा परम्परशत्रुश्वापदवधा भ्रमणी-या प्रविरल [illegible] भूमय ॥

[ ॥ ५५० ॥ इह मूलप्रविरलेषु संवर्गितमुनिजनावशेषेषु सम-र्जन्ते विहङ्गा फलेषु नीवारविटपानाम् ॥ ]

¹MH omits chhâyâ of the first half of the couplet ²MH [illegible]

निविड-लया-जाल-पिणद्ध-सिहर-तरुसण्ड-पडिहउप्पयणा ।
इह तंसं उड्डेऊण खं विहङ्गा वलग्गन्ति ॥ ५५१ ॥
इह केसरिणो विहुणन्ति ताडणुड्डीण-छप्पय-कडप्पं ।
रहस-दलिएह-मय-सलिल-गरुइयं केसरुप्पङ्कं ॥ ५५२ ॥
मुहल-मऊराइं हरन्ति किंपि इह णव-पलास-कविसाइं ।
उव्वाय-पल्ललुप्पण्ण-पण्डु-भावाइं रण्णाइं ॥ ५५३ ॥
झिल्ली-जल-कण-सीयल-पलास-परिवेसिणो इह हरन्ति ।
असलिल-मज्झागय-विरल-किंसुआ पल्ललुच्छङ्गा ॥ ५५४ ॥
तद्दियसाणिल-णिव्वूढ-रेणु-णिव्वडिय-कढिण-पह-दण्डा ।
वाओलीसुवि जाया इह विरल-रयाओ भूमीओ ॥ ५५५ ॥

॥ ५५१ ॥ निविडलताजालपिनद्धशिखरतरुखण्डप्रतिहतोत्पतना इह तिर्यगुड्डीय खं विहङ्गा विलगन्ति ॥

॥ ५५२ ॥ इह केसरिणो विधुन्वन्ति ताडनोड्डीनषट्पदकलापं सरसदलितेभमदसलिलगुरूकृतं केसरकलापम् ॥

॥ ५५३ ॥ मुखरमयूराणि हरन्ति किमपीह नवपलाशकपिशानि आशुष्कपल्वलत्वादापन्नपाण्डुरूपाण्यरण्यानि ॥

॥ ५५४ ॥ [1]लहरीजलकणशीतपलाशपरिवेशिनः इह हरन्ति हृदयम् असलिलं यत्पल्वलतटं तन्मध्यगता विरलाः किंशुका यत्र ते २पल्वलोत्सङ्गाः ॥ [2]झिल्ली लहरी । परिवेशिनः समीपवासिनः ॥

॥ ५५५ ॥ प्रतिदिवसानिलनिर्व्यूढरेणुप्रकटितकठिनपथदण्डाः वातालीष्वपि वात्यास्वपि सतीषु [जाता] इह विरलरजस्का भूमयः ॥ २तद्दियसं प्रतिदिवसम् । निर्व्यूढमपसारितम् । पन्थान एव दण्डास्तदाकृतित्वात् ॥

[1]MH. लहरि°. [2]MH. झल्ली.

इह उवसरं वराहाण गलिय-जल-विन्दु-बद्ध-हरियाओ ।
संकन्त-पङ्क-गारव-बन्धुरिय-तणाओ॑ पयवीओ ॥ ५५६ ॥
एयाओ॑ गाढ-फुडणा पुञ्जइऊससिय-भू-दल-कवाला ।
संपीड-विरस-दीहरिय-तलिण-मुत्थाओ॑ भूमीओ ॥ ५५७ ॥
इह हि गय-जूह-णिदं सुएइ अमारुए वणन्तम्मि ।
कर-णीसासुग्गाहिय-महि-रय-कविसो णहुद्देसो ॥ ५५८ ॥
उक्किण्ण-रय-भरोणय-तल-जज्जर-भू-विसट्ट-बिल-विसमा ।
थोउज्जडक्क-विडवा इमाओ॑ ता उन्दुर-थलीओ ॥ ५५९ ॥
इह भूइ-दण्ड-सेसावि णियय-दीहत्तणेण णज्जन्ति ।
पासल्ल-भाव-पज्जत्त-हुयवहा पायव-णिवेसा ॥ ५६० ॥

॥ ५५६ ॥ इह उपसरः सरःसमीपे वराहाणां गलितजलबिन्दुबन्धैर्हरिताः संक्रान्तपङ्कगौरवबन्धुरिततृणाः पदव्यः ॥ बन्धुरितं
३नम्रीभूतम् ॥

॥ ५५७ ॥ एता गाढं कृत्वा यत्स्फुटनं तेन पुञ्जितान्युच्छ्वसितानि च भू[तल]कपालानि यत्र ताः संपीडनेन विरसानि दीर्घकृतानि
३[तलिनानि] मुस्तानि यत्र ता भूमयः ॥ तलिनं सूक्ष्मम् ॥

॥ ५५८ ॥ इह हि गजयूथनिद्रां सूचयति अमारुते वनान्ते करनिःश्वासैरुद्ग्राहितेन उत्क्षिप्तेन महीरजसा कपिशो नभउद्देशो गगनप्रदेशः ॥

॥ ५५९ ॥ उत्कीर्णरजोभरावनता अत एव तलजर्जरा या भूस्तद्भावेन विशीर्णानि बिलानि तैर्विषमाः स्तोकोज्जटार्कविटपा
२इमास्ता उन्दुरस्थल्यः ॥ उन्दुरा मूषकास्तैश्छिन्नमूलत्वादन्तरान्तरार्कविटपा उज्जटिताः ॥

॥ ५६० ॥ इह [1]भूतिदण्डशेषा अपि निजकदीर्घत्वेन ज्ञायन्ते

---

[1] MH. ॰सेमा.

इह काला रुग्ग-तरुत्तणेण थलइल्लमन्तरा हरइ ।
भाएसु उववणाअन्त-वाल-तरु-मण्डलं रण्णं ॥ ५६१ ॥
वल्ली-वियाण-बहलत्तणेण छाया-णिवेस-सिसिराइं ।
इह अणह-हलिद्दी-सद्दलाइँ गिरि-कच्छ-रण्णाइं ॥ ५६२ ॥
तद्दियह-णिहस-संपीय-सयल-सीरा असाओँव सहन्ति ।
परिकढिण-कसिण-दल-वन्धणाओँ इहकच्छ-भूमीओ ॥५६३ ॥
इह दीसइ कणय-सिला-मऊह-पुञ्जाहिरञ्जियं रविणो ।
णिच्छल्लिय-परिणय-ताल-पिञ्जरं पडिय-पडिबिम्बं ॥ ५६४ ॥

पार्श्वीकृतावस्थानभावेन पर्यासहुतवहाः पादपनिवेशाः ॥ हुतवहोऽत्र
३दावाग्निः ॥

॥ ५६१ ॥ इह कालवशाद्रुग्णतरुत्वेन हेतुना स्थलयुक्तं सत्
अन्तरान्तरा हरति भागेषु च उपवनायमान [वाल] तरुमण्डलम् अर-
३ण्यम् ॥ रुग्णं भग्नम् । इलः प्राकृते मत्वर्थीयः ॥

॥ ५६२ ॥ वल्लीवितानबहलत्वेन च्छायानिवेशशिशिराणीह
अनघहरिद्रापिञ्जराणि गिरिकच्छारण्यानि ॥

॥ ५६३ ॥ प्रतिदिवसनिघर्षणात्संपीतसकलसीरायसा इव शो-
भन्ते परिकठिनकृष्णदलबन्धना इह कच्छभूमयः ॥ सीरं हलं तस्या-
३ [1]यसः प्रान्तलग्नः फालो लोहमयः । [2]सोऽन्तः किल प्रतिदिनं विलि-
ख्यमानायां भुवि क्रमेण विगलितः । तत्र स्वभावकृष्णापि भूमिरे-
वमुत्प्रेक्ष्यते पीतविगलितफाललोहचूर्णत्वेनेव कृष्णेति ॥

[॥ ५६४ ॥ इह दृश्यते कनकशिलामयूखपुञ्जाभिराञ्जितं रवे-
र्निश्छलपरिणततालपिञ्जरं पतितप्रतिबिम्बम् ॥]

[1]MH. om. the visarga. [2]MH. सोनतः.

इह वाउध्दुय-धूली-गरुय-कणावडण-छिद्दिय रयाओ ।
दीसन्ति विरल-जल-बिन्दु-मुद्दियाओव्व रत्थाओ ॥ ५६५ ॥
इह ता तरु-मूल-किलिण्ण-कुसुम-दल-दारु-सयल-कलिलाओ ।
आणील-कविस-फरुसा करीस-सिढिलाओं भूमीओ ॥ ५६६ ॥
इह होन्ति मुहल-सिहिणो पुराण-फल-सवल-कुसुमिय-कलम्बा ।
फल-कोस-विउण-पत्तल-पलास-सिसिरा वणुद्देसा ॥ ५६७ ॥
एए वण-वारण-गण्ड-निहस-मय-गन्धिणो भयं देन्ति ।
रोसुद्ध-सीह-णह-दलिय-वक्कला पायव-क्खन्धा ॥ ५६८ ॥
रय-पुञ्ज-रुद्ध-गयणा सहन्ति इह सायमणवसाआओ ।
पच्छद्ध-पसण्ण-मियङ्क-मण्डला गिम्ह-रयणीओ ॥ ५६९ ॥

॥ ५६५ ॥ इह वातोध्दूतधूलीगुरुककणावँपतनच्छिद्रितरजस्काः सत्यो दृश्यन्ते विरलजल[बिन्दु]मुद्रिता इव रथ्याः ॥ प्रशिथिलरजोराशौ[1] गुरौ धूलिकणे प्रविष्टे सति जलकणाहतत्वमिव भातीत्यर्थः ॥

॥ ५६६ ॥ इहैतास्तरुमूलक्लिन्नकुसुमफँलदारुशकलकलिलाः व्याप्ता आनीलकपिशपरुषाः करीषवच्छिथिला भूमयः ॥

॥ ५६७ ॥ इह भवन्ति मुखरशिखिनः पुराणफलशबलकुसुमितकदम्बाः पुराणफलैरतिक्रान्तवर्षसंजातैः फलैः शबला व्याप्ता एकस्मिन्प्रदेशे कुसुमिताश्च द्वितीयप्रदेशे फलकोशद्विगुणपत्रलपलाशशिशिरा वनोद्देशाः ॥

[ ॥ ५६८ ॥ एते वनवारणगण्डनिघर्षमदगन्धा भयं ददति रोषोर्ध्वसिंहनखदालितवल्कलाः पादपस्कन्धाः ॥ ]

॥ ५६९ ॥ रजःपिञ्जरीक्रियमाणगगनाः शोभन्ते इह साय-

[1] MSS.° शो for °शी.

गय-जूहोयरण-विभिण्ण-नलिणि-णिव्वडिय-सलिल-दण्डाओ ।
इह ता वसुयाय-परिप्पवन्त-कमलाओ सरसीओ ॥ ५७० ॥
इह पायव-लग्गट्ठिय-णलिणि-दल-च्छेय-कविल-कूलाओ ।
लूयाविल-फुडिय-दलन्तराओ कासार-भूमीओ ॥ ५७१ ॥
इह मारुय-तंसीकय-दाव-सिहा-सिहर-संवलन्ताइं ।
दिप्पन्ति पढममग्गेण तअणु मूलेण रण्णाइं ॥ ५७२ ॥
अग्घन्ति ता णव-ट्ठिय-सिहि-वाय-पिसङ्ग-वामलूरग्गा ।
इह हेट्ठुव्वाअ-दुमा थलीओ णव-दाव-गन्धाओ ॥ ५७३ ॥

मनवश्याया अवश्यायरहिता गवादिसंचरणोत्थितमहीरजःप्रशमत्वेन
३पश्चार्धप्रसन्नमृगाङ्कमण्डला ग्रीष्मरजन्यः ॥

॥ ५७० ॥ गजयूथावतरणविभिन्ननलिनीनिर्वृत्तसलिलदण्डाः इह ताः शुष्कपरिप्लवमानकमलाः सरस्यः ॥

॥ ५७१ ॥ इह पादपलग्नस्थितनलिनीदलच्छेदकपिशमूलाः । कलिलकूला इति पाठान्तरम् । लूताविलस्फुटितदलान्तराः जलाभावे
३स्फुटितमृत्तिकाया दलविवरेषु कौलिका जालकान्कुर्वन्ति । कासार-भूमयो नितम्बप्रदेशाः ॥ [1]वर्षासमयजलरयापहृतलग्नचिह्नवर्णनमेतत् ॥

॥ ५७२ ॥ इह मारुतत्र्यश्रीकृतदावशिखाशिखरैः सह संवलमानानि संवध्यमानानि दीप्यन्ते प्रथमम् अग्रभागैस्तदनु [2]मूलैररण्यानि ॥

॥ ५७३ ॥ अर्घन्ति शोभन्ते ता नवस्थितशिखिशुष्कपिशङ्गवल्मीकाग्राः इहाधस्ताच्छुष्कद्रुमाः स्थल्यो नवदावगन्धाः ॥ शिखी
३वह्निः । [3]वायं वानं शुष्कम् । पै ओवै शोषण इत्यस्य ओदितश्चेति निष्ठा-

[1]MH. °जलरयापहृत°. The emendation is mine [2]MH. om अरण्यानि.
[3] MH. वायवाना शुष्कम्.

इह तोअ-लङ्घणुम्मुक्क-रेणु-दल-सुण्ण-भाव-लहुईओ ।
तुरिअयरं समहिसरन्ति मारुआ वत्त-वल्लीओ ॥ ५७४ ॥
दीसन्ति तह-परिट्ठिअ-तण-मण्डल-पण्डुरन्तरालाओ ।
इच्छा-वीसन्त-दवाणलाओ इह रण्ण-भूमीओ ॥ ५७५ ॥
इह पङ्क-लोलणाविल-पुड-मन्दुम्मिल्ल-लोअणद्धन्तं ।
सायं विअडयरङ्गंव णीइ जूहं वराहाण ॥ ५७६ ॥

नत्वे कृते वानमिति रूपम् । तस्य भ्रंशो वायमिति । एवम् उव्वायमिति उद्वानप्रकृतिकम् । वामलूरो वल्मीकः । यद्यपि स्थलीशब्दः 'कृत्रि-६मायामेव साधुस्तथापि इह 'उपचारादकृत्रिमास्वपि प्रयुक्तः ॥

॥ ५७४ ॥ इह तोयेन यल्लङ्घनं वर्षासु प्रक्षालनं तेन मुक्तरेणुदल-त्वाच्छून्यमनावृतमवकाशस्थानं नभोग्रं यासां तास्त्वरिततरं समभि-३सरन्ति सम्यगभिसारयन्ति मारुताः कर्तारः पर्णवल्लीः पलाशलताः कर्मभूताः ॥ क्वचिदसत्यपि णिचि प्रयोजकव्यापारः प्रतीयते । दशभि-र्हलैः कृषतीतिवत् । तेनेहापि समभिसरन्तीत्युक्ते समभिसारयन्तीति ६गम्यते ॥

॥ ५७५ ॥ दृश्यन्ते तथापरिस्थिततृणमण्डलपाण्डुरान्तरालाः इच्छाविश्रान्तदवानला [ इह ] अरण्यभूमयः ॥ तथा परिष्ठितत्वमद-३ग्धत्वम् । इच्छाविश्रान्तत्वमप्रयत्नोपरतत्वम् ॥

॥ ५७६ ॥ इह पङ्कलोलनाविलपुटमन्दोन्मीललोचनार्धान्तम् सायं विकटतराङ्गमिव निर्याति यूथं वराहाणाम् ॥ विलोचनं मुस्त-३प्राप्त्यर्थं नोदनम्' ॥

---

[1]This is obviously a mistake of the commentator. See Pāṇ. 4-1-42.
[2]MH. नोदनम् What does the word refer to? The word लोअण in the original means 'eye'.

इह रण्ण-गोउलेसुं उण्हाइँवि पन्थिएहिँ पिज्जन्ति ।
कामं गोरस-पारी-णिवेस-पण्डूइँ सलिलाइं ॥ ५७७ ॥
इह सलिल-कास-सक्कारि-मूल-पडिलग्ग-कड्डिय-दलाओ ।
पवणो आयासिय-सारसाओँ तरलेइ णलिणीओ ॥ ५७८ ॥
तंसीकय-कण्ठ-समोसरन्त-विहयावलोय-सरसाइं ।
इह किंपि पुलिण-परिसक्कियाइं सायं सुहावेन्ति ॥ ५७९ ॥
संगलण-मासलाअन्त-सीयलो विविह-वल्लि-कुसुमाण ।
आमोओ इह संचरइ कोवि सु-सुयन्ध-सुरहीण ॥ ५८० ॥

॥ ५७७ ॥ इहारण्यगोकुलेषु उष्णान्यपि पँथिकैः पीयन्ते पर्याप्तं गोरसपारीनिवेशपाण्डूनि [सलिलानि] ॥ पारी दोहनपात्रविशेषः ॥

॥ ५७८ ॥ [इह] सलिलेनानिलाहतेन काशैश्च तृणविशेषैर्मारुताभिहतैः शादिति शब्दं याः कुर्वन्ति तच्छीलास्ताश्च ता आकृष्ट-
३मूल [प्रति] लग्नदलाः पवनः आयासितसारसास्तरलयति नलिनीः ॥ सारसाः पक्षिविशेषाः ॥

॥ ५७९ ॥ त्र्यश्रीकृतकण्ठसमपसरद्विहगावलोकनसरसानि इह किमपि पुलिनपरिष्वक्कितानि[1] तटगमनानि सायं सुखयन्ति ॥ तटविहा-
२रिषु मानुषेषु पक्षिणो भयात्परिवर्तितग्रीवया पश्यन्तस्त्वरन्ते पद्भिः ॥

॥ ५८० ॥ संघँटनेन मांसलीभवन्घनीभवन्नत एव शीतल आह्लादकृत् विविधवँल्लकुसुमानां संबन्धी आमोद इह संचरति कोपि
१सुसुगन्धसुरभीणाम् ॥ सुरभिशब्दस्य सुगन्धपर्यायस्यापि अतिशयार्थः प्रयोगः । यथा । अहो रमणीया अहो रमणीयेति ॥

[1]MH. परिष्वाङ्कितानि.

करह-पओअर-विसमाइँ इह पहोलन्ति मालुहाणीण ।
उव्वत्त-धूसराइं दलाइँ पेरन्त-कविसाइं ॥ ५८१ ॥
इह रेहन्ति च्छाया-णिविट्ठ-पहियावलोइयग्गाओ ।
कक्कोल-दालि कवि-सत्थ-संकुला रण्ण-भूमीओ ॥ ५८२ ॥
इह गोर-विरहिणी-गण्ड-वास-धूसर-पिसङ्ग-वट्ठाण ।
भमइ अवरण्ह-महुरो गन्धो करहाड-कुसुमाण ॥ ५८३ ॥
घोलइ उल्लिन्त सुरा-मूल-कसाय-जरढो कलम्बाण ।
एस मिलाणारुण-केसराण दर-सीयलो गन्धो ॥ ५८४ ॥
खज्जूर-मञ्जरी-पिञ्जराण इह परिमलो पियङ्गूण ।
रुढारविन्द-मयरन्द- कण-कसाओ परिब्भमइ ॥ ५८५ ॥

॥ ५८१ ॥ करभपयोदरवद्विषमाणीह प्रघूर्णन्ते मालुधानीसंज्ञाना लताविशेषाणामुद्वृत्तत्वेन धूसराणि दलानि पर्यन्तकपिशानि ॥

॥ ५८२ ॥ इह शोभन्ते छायानिविष्टपथिकावलोकिताग्राः कङ्कोलदालिवरकपिले कपिसार्थे सकुला अरण्यभूमय ॥ अत्रानेकपाठाः ३सन्ति । अनयैव दिशा गतार्था ॥

॥ ५८३ ॥ इह गौराविरहिणीगण्डपार्श्ववध्दूसरपिशङ्गपृष्ठाना भ्रमति अपराह्णमधुरो गन्ध [करहाटकुसुमानाम्] । करहाटः कोवि-३दाराख्यस्तरु ॥

॥ ५८४ ॥ घूर्णते[1] सुरया दोहदार्थं दत्तया आर्द्रीभवन्ति[2] यानि मूलानि तै कषाय [3]शबल अत एव जरठ प्रगल्भ कदम्बाना ३सम्बन्धी एष म्लानारुणकेसराणामीषच्छीतलो गन्ध ॥ दर ईषत् ॥

॥ ५८५ ॥ खर्जूरमञ्जरीवत्पिञ्जराणा परिपक्वमञ्जरीत्वेन इह

[1] MH घूर्णे   [2] MH °भवति   [3] MH शेवल°

मउल-णिविडासु इह मरुवयस्स मुह-पाडलासु वल्लीसु ।
आससइ सिसिर-लच्छी तारेसु अ कुन्द-कुसुमेसु ॥ ५८६ ॥
इह लोलेइ खण-क्खण-विवण्ण-जव-मञ्जरी-तरङ्गाओ ।
पवणो संचार-विमूढ-मय-विमलिआओ सीमाओ ॥ ५८७ ॥
जरढायन्त-फलूसास-पविरलायन्त-मञ्जरी-सूया ।
इह अग्घन्ति जवाणं अग्ग-भवन्तीओ सीमाओ ॥ ५८८ ॥
इह ताओ पुलोस-सुयन्ध-जव-कसायाणणेहिं पिज्जन्ति ।
फुल्ल-करवीर-पाली-समुज्जला रण्ण-वावीओ ॥ ५८९ ॥

परिमलः प्रियङ्गूनां रूढारविन्दमकरन्दकणकषायः परिभ्रमति ॥
३रूढं जरठम् । अरविन्दं पद्मम् । कषायो मिश्रः ॥

॥ ५८६ ॥ [मुकुलनिबिडासु] इह मरुबकस्य सुगन्धपत्रिका-
विशेषस्य मुखपाटलासु वल्लीषु आवसति शिशिरलक्ष्मीस्तारेषु च
३सुपुष्पितेषु कुन्दकुसुमेषु ॥

॥ ५८७ ॥ इह लोलयति कम्पयति क्षणक्षणविवर्णयवमञ्जरी-
तरङ्गयुक्तान्पवनः संचारविमूढमृगविमर्दितान्सीम्नः[1] । सीमशब्दः
३पुंस्यपि दृष्टः । तदुक्तम् । लिङ्गमसंख्यं लोकप्रमाणत्वादिति ॥

॥ ५८८ ॥ जरठायमानफलत्वेनोपचि[त]यवकोशत्वेनोच्छ्वासयुक्त[2]-
त्वादुन्नतत्वात्प्रविरलायमानमञ्जरीशूका इहार्घन्ते यवानामग्रे भवन्त्यो
३दृष्टिपथमागच्छन्त्यः सीमानः ॥ शूकाः [3]किंसारुकाः ॥

॥ ५८९ ॥ इह ताः प्लोषसुगन्धयवकषायाननैः पीयन्ते फुल्ल-
करवीरपालीसमुज्ज्वला अरण्यवाप्यः अटवीपुष्करिण्यः ॥ उज्ज्वला
३रक्ताः । करवीरं कणहीरकमिति लोकभाषया प्रसिद्धम् ॥

---

[1]MH. विमर्दिताम्. [2]MH. °युक्ता°. [3]MH. °स्काः.

इह दावाणल-धूमाहिओय-पडिबद्ध-महि-रयाअम्बा ।
दिवसम्मिवि होन्ति पओस-राय-मइला दिसाहोया ॥ ५९० ॥
इह विहडिअ-तन्तु-त्तुडुप्प-पम्हलाअम्ब-धूसरं पियइ ।
णारङ्ग-गब्भ-सयलं पहिओ अहरंपिव पियाए ॥ ५९१ ॥
सिसिरम्मि विरल-कुसुमे गाढालिङ्गण-णिहेण अवबाणो ।
बाहु-कलहम्मि मिहुणाइं वम्महो इह निओएइ ॥ ५९२ ॥
इह तं संचारिय-कञ्चणार-केसर-कसाय-गन्धाण ।
उच्छङ्खलिय-वणाणं सोहग्गं किंपि पवणाण ॥ ५९३ ॥
इह माहवीण कोमल-पलास-दर-कविस-बन्धणाहरणं ।
उब्भिज्जइ जरढ-कवोय-कण्ठ-मइलारुणं मउलं ॥ ५९४ ॥

॥ ५९० ॥ इह दावानलधूमाभियोगप्रतिबद्धमहीरजस्त्वेन आताम्रा दिवसेपि भवन्ति प्रदोष[राग]मलिना दिगाभोगाः ॥ अभियोगः ३संबन्धः ॥

॥ ५९१ ॥ [इह] विघटिततन्तुकं यत् अौतुप्पं चर्म तेन हेतुना पक्ष्मलं संजातपक्ष्मकमिव तथा आताम्रधूसरं पिबति नारङ्गगर्भशकलं ३पथिकः अधरमिव प्रियायाः ॥

[ ॥ ५९२ ॥ शिशिरे विरलकुसुमे गाढालिङ्गनच्छलेन अपबाणो गतबाणो बाहुकलहे मिथुनानि मन्मथ इह नियोजयति ॥ ]

॥ ५९३ ॥ इह तत् संचारितकाञ्चनारकेसरकषायगन्धानाम् उच्छृङ्खलीकृतवनाना सौभाग्यं किमपि पवनानाम् ॥

॥ ५९४ ॥ इह माधवीनां कोमलपलाशदलकपिश[बन्धन]वर्तमानाभरणम् उद्भिद्यते विकसति जरठकपोतकण्ठमलिनारुणं मुकु३लम् ॥

इह अहिरायन्ति कमावमुक्क-परिरूढ-विडव-जालाइं ।
हरियारुण-पण्डु-कसाय-विसम-वण्णाइँ रण्णाइं ॥ ५९५ ॥
फल-बन्ध-विरल-हरियायमाण-सहयार-मञ्जरि-सुहाण ।
साहु महु-वासराणं अकुण्ठ-कल-यण्ठि-कण्ठाण ॥ ५९६ ॥
णव-वाण-कोउहल्लेण णूणमेमेअ वम्महो मुयइ ।
सहआर-सरे अविओइणोवि इह ऊसुया जेण ॥ ५९७ ॥
टिविडिक्किअ-डिम्भाणं णव-रङ्गय-गव्व-गरुय-महिलाण ।
णिक्कम्प-पामराणं भद्दं गामूसव-दिणाण ॥ ५९८ ॥

॥ ५९५ ॥ इहाभिराजन्ते क्रमावमुक्तप्ररूढविटपजालानि हरितारुणपाण्डुकषायाणि च तानि विषमपर्णानि च हरितारुणपाण्डुक-
३पायविपमपर्णानि [अरण्यानि ]॥ वसन्ताद्यृतुक्रमेण केषांचिद्विटपावस्थाविशेषाणां त्यागः केषांचिदुपादानम् ॥

॥ ५९६ ॥ फलबन्धविरलहरितायमानसहकारमञ्जरीकत्वेन सुखानां प्रीतिजनकानां साधु चरितं मधुवासराणाम् अकुण्ठकलक-
३ण्ठीकण्ठानाम् ॥ कलकण्ठी कोकिला ॥

॥ ५९७ ॥ नवबाणकुतूहलेन नूनमेवमेव न तु विरहिणमेवोद्दिश्य मन्मथो मुञ्चति सहकारशरान् । अवियोगिनोपि इह वसन्ते उत्सुका
३येन यस्मात् ॥

॥ ५९८ ॥ टिविडिकिआ प्रसाधिता डिम्भा बाला येषु तेषां नवरङ्गेण कौसुम्भवाससा प्रावृतेन यो गर्वस्तेन गुरुकमहेलानां
३निष्कम्पपामराणां भद्रं श्रेयोस्तु ग्रामोत्सवदिनानाम् ॥

विरल-ट्ठिय-महुयर-कब्बुराओं इह मञ्जरीओं चूआण ।
दर-दड्ढ-मयण-बाणोवमाओं विडवेसु दीसन्ति ॥ ५९९ ॥
इह सोहन्ति दरुम्मिल्ल-किसलयायम्बिरच्छि-वत्ताइं ।
पाविय-पडिबोहाइंव सिसिर-पसुत्ताइं रण्णाइं ॥ ६०० ॥
इह हि हलिद्दा-हय-दविड-सामली-गण्ड-मण्डलानीलं ।
फलमसअल-परिणामावलम्बि अहिहरइ चूयाण ॥ ६०१ ॥
एण-खुर-खण्डियापण्डु-जच्च-कप्पूर-चुण्णमुण्णमइ ।
इह अहिणव-सव्वण-वेणु-रोयणा-रेणु-रमणीयं ॥ ६०२ ॥

॥ ५९९ ॥ विरलस्थितमधुकरकर्बुरा इह मञ्जर्यश्चूतानाम् ईषद्दग्धमदनबाणोपमा विटपेषु दृश्यन्ते ॥

॥ ६०० ॥ इह वसन्ते शोभन्ते समुन्मीलिताः किसलया एव आताम्राण्यक्षिपत्राणि पुटकानि येषु तानि प्राप्तप्रतिबोधानीव
२शिशिरप्रसुप्तान्यरण्यानि ॥

॥ ६०१ ॥ इह [हि] हरिद्राविच्छुरितद्रविडसुंन्दरीगण्डमण्डलवदानीलं यत्फलम् । कीदृशम् । असकलपरिणामावलम्बितम् ।
२अर्धपक्वमित्यर्थः । अभिहरति चूताना संबन्धि ॥

॥ ६०२ ॥ एणखुरखण्डितापाण्डुजात्यकर्पूरचूर्णम् उन्नमति इह अभिनवसव्रणवेणुरोचनारेणुवद्रमणीयम् ॥ एणा हरिणाः ॥ [1]अपाण्डु-
२जात्यम् [2]अपाण्डुजातीयम् । बाहुल्येन सव्रणस्य वेणोर्मज्जा रोचना भवति ॥

---

[1] So MS. distinctly. [2]MS. °जातीयन्त्व.

दीहर-हेमन्त-णिसा-णिरन्तरुप्पण्ण-चाव-वावारो ।
जिय-लक्खो मा इर माहवम्मि कुसुमाउहो होउ ॥ ६०३ ॥
पल्लव-सिहाओँ इह णिव्वडन्ति दूरारुणा महु-मुहम्मि ।
साहा-विभेअ-पाविय-णिअ-रस-सोणाओॅव तरूण ॥ ६०४ ॥
इह कहवि समासाइय-नव-सहयार-मयरन्द-विन्दुइआ ।
रुण्टन्ता भमरच्चेय भमर-मालाहिँ पिज्जन्ति ॥ ६०५ ॥
णालायड्ढिअ-परिणाम-पसिढिलूससिय-बन्धणाहोयं ।
रस-गारवेण फलमिह चूयाण कमोहुरं पडइ ॥ ६०६ ॥
फल-लम्भ-मुइय-डिम्भा सुन्दारु-घर-संणिवेस-रमणिज्जा ।
एए हरन्ति हिययं अजणाइण्णा वण-ग्गामा ॥ ६०७ ॥

॥ ६०३ ॥ दीर्घहेमन्तरात्रिनिरन्तरोत्पन्नचापव्यापारो यः स जितलक्ष्यः अमोघबाणो मा किल माधवे वसन्ते कुसुमायुधो भूत् ॥

॥ ६०४ ॥ नवपल्लवशिखा इह निर्वर्तन्ते प्रकटीभवन्ति दूरारुणाः सुष्ठुलोहिता मधुमुखे वसन्ते । उत्प्रेक्ष्यते । किसलयविभेदप्राप्तनिजरसशोणा इव तरूणाम् ॥ विभिन्नाङ्गस्य किल लोहितलिप्तत्वम् अवलोकितम् ॥

॥ ६०५ ॥ इह कथमपि समासादितनवसहकारमकरन्दबिन्दुविलिप्ताः क्रन्दन्तो भ्रमरा एव भ्रमरमालाभिः पीयन्ते ॥ कथमपीति भ्रमरबाहुल्येन दुष्प्रापत्वं मञ्जरीणां द्योतितम् ॥

॥ ६०६ ॥ नालाकृष्टपरिणामप्रशिथिलोच्छ्वसितबन्धबन्धुरितं रसगौरवेण फलमिह चूतानां क्रमेणाधोमुखं पतति ॥

॥ ६०७ ॥ फललाभमुदितडिम्भाः सुदारुसंचयसंनिवेशरमणीयाः

किंपि दुम-जज्जरेसुं हिययं घोसावबद्ध-धूमेसु ।
लग्गइ विरल-ट्ठिय-वायसेसु उव्वत्थ-गामेसु ॥ ६०८ ॥
इह गामागय-धम्मिय-संमज्जिय-सुण्ण-लिङ्गमुवसेलं ।
दल-गन्धि गहीराणील-कुण्डमुरु-पायवं सण्डं ॥ ६०९ ॥
अवमारुय-मूल-णिमिल्ल-पल्लवाउञ्चिणो परिसरेसु ।
इह तरुणो सिहर-वहम्मि णवर झङ्कारिणो होन्ति ॥ ६१० ॥

एते हरन्ति हृदयं सुजनाकीर्णा वनग्रामाः ॥ अजनाकीर्णा इति पाठे विरलजना इत्यर्थः ॥

॥ ६०८ ॥ [किमपि] [1]उध्द्वस्तत्वात् गृहमध्योत्पन्नैर्वृक्षैर्जर्जरेषु विदारितगृहभित्तिषु [घोषावबद्धधूमेषु] [हृदयं] लगति विरलस्थितवायसेषु [2]उध्द्वस्तग्रामेषु ॥ घोषो गोकुलं तदधिष्ठितत्वेनैव [3]अत्युध्द्वस्तत्वेपि हृदयहारित्वकारणम् ॥

॥ ६०९ ॥ इह ग्रामागतधार्मिकसंमार्जितशून्यलिङ्गम् उपशैलं शैलसमीपम् पतितवृक्षादिदलगन्धयुक्तं गभीरेपन्नीलजलकुण्डम् उरुपादपमुन्नततरुकं षण्डं पादपसमूहो हृदयं हरति ॥ धार्मिकस्तपस्वी ॥

॥ ६१० ॥ अवाङ्मारुतेन अधोमुखवायुत्वेन यन्निमीलितमूलपल्लवत्वं तेनाकुञ्चिनो मूलप्रदेशेषु निश्चलाः । वायुना अनाहतत्वान्मूलानाम् परिसरेषु सरःसमीपेषु इह तरवः [शिखरपथे केवलं झङ्कारिणो भवन्ति[4]] ॥ ते नित्यजलस्निग्धभूमित्वेन अनावृष्ट्यादिना अनुपहता इत्यतिमहान्तः । ततश्च वायुरतिनिविडवनमध्यमलभमानस्तदभिहतः [5]ऊर्ध्वं धावित्वा अधोमुख आगत्य शिखराण्येव कम्पयतीत्यर्थः ॥

[1]MS. उद्ध्वस्तत्वात्. [2]MS. उद्ध्वस्त°. [3]MS. °द्ध्वस्तेपि. [4]MH. seems to have omitted part of the commentary between तरव. and ते. [5]MH. ऊर्ध्वंधावित्वा°.

इह भूरि-भमिर-साहा-सारङ्ग-विराविणो विरायन्ति ।
आवद्ध-महा-महु-पिण्ड-मण्डला जर-तरु-क्खन्धा ॥ ६११ ॥
परिणाम-सोस-लहुआयमाण-फल-थोय-पाविओसासा ।
इह जाया पढम-समोणयाओ मालूर-साहाओ ॥ ६१२ ॥
सावय-पयवी-भिण्णावसाय-हरिअन्तरा विरायन्ति ।
एए पहाय-सरसा वण-त्थली-सद्दलद्धन्ता ॥ ६१३ ॥
परिसडिय-वेणु-दल-रङ्ग-पिङ्गलं गलइ गिरि-अड-दरीसु ।
जलमिणमो मल-हरियायमाण-जरढोवल-क्खलियं ॥ ६१४ ॥

॥ ६११ ॥ इह भूरिभ्रमरत्वेन शाखाभिः सारङ्गविराविणो [1]सारङ्गवज्झङ्काररवकारिणो विराजन्ते संबद्धमहामधुपिण्डमण्डला २ [2]जरतरुस्कन्धाः ॥

॥ ६१२ ॥ परिणामेन पाकेन यः [3]शोपस्तेन लघूयमानफलत्वात् स्तोकोच्छ्वासा इह जाताः प्रथमं सम्यगवनता अपक्वफलभरेण २मालूरस्य शाखाः ॥

॥ ६१३ ॥ श्वापदपदवीभिन्नावश्यायत्वेन हरितान्तरा विराजन्ते एते प्रभातसरसा वनस्थलीशाद्वलार्धान्ताः ॥

॥ ६१४ ॥ परिशटितवेणुदलानां संयोगेन यो रङ्गो रञ्जनं तेन पिङ्गलं गलति निःसरति गिरितटदरीभ्यः । अत्र पञ्चम्यर्थे सप्त-२र्मी । जलमेतत् मलहरितायमानजरठोपलस्खलितम् ॥ दलतीति पाठे खण्डशो गच्छतीत्यर्थः ॥

---

[1]MH. गवज्झात्कार° for सारङ्गवज्झङ्का°. The emendation is mine.
[2]MH. जरन्त°  [3]MH. शेपस्तेन  [4]MH. °भरेणालूरस्य.

इह सोत्तागम-विहडिय-सिलासु मुणिणो गुहासु णिवसन्ति ।
कासायमुव्वहन्ता पुराण वोरट्टि-विच्छायं ॥ ६१५ ॥
इह फलइ दुमवईसुं पणओ भमराण कुसुम-पीआण ।
सिद्ध-परिग्गहिय-गुहा-गेहासु णियम्ब-मालासु ॥ ६१६ ॥
इह कड्ढिय-वियड-सिला-वडण-ट्ठिय-चुण्ण-रासि-पंसुलिया ।
विसमुज्जल-मुहल-तडा घडणा-जोग्गोवला गिरिणो ॥ ६१७ ॥
इह परिसक्किज्जइ कढिण-कक्करुक्केर-णिसिय-णह-हीरं ।
कुरुविन्द-कन्दरा-मन्दिरेसु मन्दं मइन्देहिं ॥ ६१८ ॥

॥ ६१५ ॥ [इह] स्रोतसामागमनविघटितशिलासु मुनयो गुहासु निवसन्ति काषायं [1]कषायेण रक्तं वस्त्रमुद्वहन्तः [2]पुराणबदरास्थिवह्निच्छायम् ॥

॥ ६१६ ॥ इह फलति द्रुमवतीषु प्रणयो भ्रमराणां पीतकुसुममकरन्दानां सिद्धपरिगृहीतगुहा[गेहा]सु नितम्बमालासु ॥ प्रणय उपनयः । सदा तत्र निवासो भ्रमराणां सफलो भवति सिद्धमाहात्म्येन सर्वदा सर्वर्तुकुसुमविकासादिति तात्पर्यार्थः ॥

॥ ६१७ ॥ इह आकृष्टविकटशिलापतनस्थितचूर्णराशिपांसुलिता विषमोज्ज्वलमुखरदण्डैवरपतनयोग्योपला गिरयः ॥ मुहलदण्ड[[3]वड]णजोग्गोवला इति पाठेर्थोयम् । कचित्तु मुहलतला घडणाजोग्गोवला इति । पतन्तीभिर्मुखरतटाः । संबन्धयोग्यपाषाणाश्च[4] । पांसुमिश्रत्वेन रचनायोग्यत्वात् । आकृष्टत्वं च शिलानां वेगवर्षादिना । विषमोज्ज्वलत्वं तु[5] अन्तरान्तराभिव्यक्तशिलान्तरयुक्तपाषाणतया ॥

॥ ६१८ ॥ इह परिष्वक्यते कठिनकर्करोत्करनिशितनखमान्त-

[1]MH. कषायेन. [2] MH. °बदराग्नि°. [3]MH. omits °वड° is our emendation right? [4]MH. °पाषाणः. [5]MH. त्वंतरान्तराभिव्यक्तशिलान्तरयुक्त पाषाणतया for तु अन्तरा°, &c, which is a conjectural emendation.

इह दर-खलइअ-तडोवलाओ परिविरल-वाल-मीणाओ ।
फेण-च्छाया-सारोयराओ रेहन्ति सरियाओ ॥ ६१९ ॥
अववक्कल-णीसह-मूल-बन्धुरायन्त-वाल-धव-कुञ्जा ।
इह बहुलं गाढ-कसाय-सीहुणो गिरि-अड-ग्गामा ॥ ६२० ॥
इह दियसम्मिवि सिहरावरोह-परिअत्त-रवि-यरुम्मिल्ला ।
धूमायन्तिव दूरावलोय-मइला गिरि-वणन्ता ॥ ६२१ ॥
चलण-णिसण्णुण्णामिय-चिबुअ-यलायामि-तलिण-मुह-रेहं ।
सोहइ पसुत्तमिह केसरीण भर-णिग्गय-णहग्गं ॥ ६२२ ॥

-स्वात् कुरुविन्दकन्दरामन्दिरेषु मन्दं कृत्वा मृगेन्द्रैः ॥ निशितास्ती-२क्ष्णीकृताः । हीरं प्रान्तम् । कुरुविन्दाः पाषाणमणिविशेषाः ॥

॥ ६१९ ॥ इह ईषत्स्खलतीकृततटोपलाः श्लक्ष्णीकृततटपाषाणाः प्रविरलबालमीनाः फेनच्छायाशारोदराः[1] शोभन्ते सरितः ॥

॥ ६२० ॥ अपवल्कलाः अपगतशल्का अत एव निःसहमूला अशक्तमूलावष्टम्भा बन्धुरायमाणा जटाग्रथितस्थितमात्रं स्वरूपमा-२चरन्तो[2] बालधवकुञ्जा यत्र ते इह बहुलं गाढकषायसीधवो गिरितटग्रामाः ॥ सीधु मद्यम् ॥

॥ ६२१ ॥ इह दिवसेपि [3]शिखरावरोधपरिवृत्तरविकरोत्पीडा धूमायन्तीव धूममिवोद्वमन्ति दूरावलोकमलिनच्छाया इव गिरिव-२नान्ताः ॥

॥ ६२२ ॥ चरणनिषण्णोन्नमितचिबुकतलायामितनुकमुखरेखं[4] शोभते प्रसुप्तम् इह केसरिणां भरानिर्गतनखाग्रम् ॥ चिबुकं मुखमुण्डा[5] । २तलिनं सूक्ष्मम् ॥

[1]MH. °शारोदराः [2]MH. °चरते, The emendation is mine. [3]MH. °वावाध° for °वरोध. [4]MH. °यासि° for यामि° [5]So MH.

इह सुइरेण पसम्मइ कप्फाड-परंपरा-पडिक्खलिओ ।
अहिताडिय-कंसुग्गार-झञ्झणा-पडिरवाहोओ ॥ ६२३ ॥
इह दीसइ विमलायन्त-मणि-सिला-सण्ड-संधिउज्जोयं ।
परिदलिय-दाडिमी-कुसुम-दल-सिहायम्बिरं गयणं ॥ ६२४ ॥
इह दूर-ट्ठिय-सिहरा वित्थारासण्ण-पायड-नियम्बा ।
दीसन्ति अग्ग-मइला कमेण मूलुज्जला गिरिणो ॥ ६२५ ॥
इह ताओँ खण्डिउव्वाय-पायवालग्ग-वल्लि-कलिलाओ ।
सबरुक्खय-कन्दुद्देस-विवर-विसमाओँ भूमीओ ॥ ६२६ ॥

॥ ६२३ ॥ इह चिरेण प्रशाम्यति कपाटपरंपराप्रतिस्खलितो गुहापरंपराप्रतिबिम्बितः सन् [1]अभिताडितकांस्योद्गारेण झणझणायमानः प्रतिरवाभोगः उत्सववाद्यप्रतिबिम्बाटोपः ॥

[॥ ६२४ ॥ इह दृश्यते विमलायमानमणिशिलाषण्डसंध्युद्द्योतं परिदलितदाडिमीकुसुमदलशिखाताम्रं गगनम् ॥]

॥ ६२५ ॥ [इह] दूरोत्थितशिखरत्वाद्विस्तारासन्नप्रकटनितम्बत्वाद्दृश्यन्ते अग्रमलिनाः क्रमेण मूलोज्ज्वला[2] गिरयः ॥ नैकट्याद्वैत[3]स्याच्च तलम् उज्वलनं स्फुटमुपलभ्यते । दूरोन्नतत्वात्सौक्ष्म्याच्च शृङ्गाणि श्यामलान्युपलभ्यन्त इत्यर्थ. ॥

॥ ६२६ ॥ इह ताः खण्डितशुष्कपादपलग्नाभिर्वल्लिभिः कलिता व्याप्ताः संकुलाः शबरोत्खातकन्दोद्देशविवरैर्विषमाः निम्नोन्नता भूमयः ॥ उव्वायं शुष्कम् । कन्दा मूलविशेषाः ॥

---

[1]MH. °सन्नि.° for सन् अभि. [2]MH. °मूलोज्ज्वला°. [3]MH. नैरन्त्याद्वैत-स्याच्चतलमुज्ज्वलनं.

इह वाहेहिँ वराहाण वाण-विहयाणमणुसरिज्जन्ति ।
अग्गग्ग-समुज्जल-रुहिर-विन्दु-मुद्दाओँ पयवीओ ॥ ६२७ ॥
मणि-वित्थार-परिट्ठिय-वसुहा-पयडाअमाण-पेरन्तो ।
लक्खिज्जइ सेस-फणा-यडोव्व अह निम्मलो जलही ॥६२८॥
णिविड-दल-णाल-परिजडिल-दीहरुद्दण्ड-पिण्डखज्जूरा ।
एयाओँ जलहिणो तड-तमाल-णीला वणालीओ ॥ ६२९ ॥
गोसे वियसन्ति मराल-चञ्चु-परिचुम्बियाओँ सरसीसु ।
इह कमलिणीओँ महुयर-पुलिन्द-विणिवेस-पल्लीओ ॥ ६३० ॥
एइ इहं जलणिहिमुत्तरेण उय-महिहरे णह-विसारी ।
सामीरं रयमणुयत्तिऊण गन्धो वन-लयाण ॥ ६३१ ॥

॥ ६२७ ॥ इह व्याधैर्वराहाणां [1]बाणविहतानामनुस्रियन्ते अग्राग्रसमुज्ज्वलरुधिरबिन्दुमुद्राङ्काः पदव्यः ॥ मुद्रा चिह्नम् ॥

॥ ६२८ ॥ मणिविस्तारपरिस्थितवसुधाप्रकटायमानपर्यन्तःलक्ष्यते शेषफणातट इव असौ निर्मलो जलधिः ॥

॥ ६२९ ॥ निबिडदलनालपरिजटिलदीर्घोद्दण्डपिण्डखर्जूराः एता जलधेस्तटतमालनीला वनाल्यो वनपङ्क्तयः ॥

[॥ ६३० ॥ गोसे प्रभातकाले विकसन्ति मरालचञ्चुपरिचुम्बिताः सरसीषु इह कमलिन्यो मधुकरपुलिन्दविनिवेशपल्लयः ॥ ]

[॥ ६३१ ॥ एति इह जलनिधिम् उत्तरेण उदङ्महीधरे हिमवति नभोविसारी सामीरं समीरसंबन्धि रजः अनुसृत्य गन्धो वनलतानाम् ॥ ]

[1]MH. °स्रियन्ते.

पाडलिय-भू-रओ णिहसणेण पूयाण परिमल-कसाओ ।
कविलिअ-णियंसणो इह जणस्स संज्झायइ रओहो ॥६३२॥
इह पवण-भिण्ण-ताली-रस-च्छडा-पिच्छिले परिक्खलिया ।
कइणो महुर-सुयन्धे लिहन्ति हत्थे गिरि-यडीसु ॥ ६३३ ॥
रङ्खोलिर-परिणय-गब्भ-सार-संभिडण-मुहल-फल-कोसा ।
इह पवणो णच्चावेइ णालिएरी-वणालीओ ॥ ६३४ ॥
मुहलन्दोलिय-ताडी-पल्लव-संवेल्लिया इह वहन्ति ।
वन्धण-दलन्त-तणराय-फल-चडक्कारिणो पवणा ॥ ६३५ ॥
अइ केलासो वोलेइ जम्मि हिम-कण-किलामिय-च्छायं ।
सम्भरिय-मयण-विणिवाय-खेय-विहुरं व ससि-बिम्बं ॥ ६३६ ॥

॥ ६३२ ॥ पाटलितभूरजस्कः परस्परनिघर्षेण पूगाना परिमलकषायः [1]कपिलीकृतवल्क इह जनस्य संध्यायते रजओघः ॥

॥ ६३३ ॥ इह पवनभिन्नतालीरसच्छटापिच्छिलान्[2] परिस्खलिताः [3]कपयो मधुरसुगन्धान् लिहन्ति हस्तान्गिरितटीषु ॥

॥ ६३४ ॥ संचालितपरिणतगर्भसारसंभिन्नमुखरफलकोशाः इह पवनो नर्तयति नालिकेरीवनालीः ॥ संभेदः[4] आघातः । संभिल-२मुहलेति पाठे [5]संभिन्नमिति देशी आघाते वर्तते ॥

॥ ६३५ ॥ [6]मुखरान्दोलनशीलसंवेल्लितताडीपल्लवाः परिवहन्ति बन्धनदलत्तृणराजफलचटत्कारिणः पवनाः ॥ चटत्कारश्चटदिति शब्दः ॥

॥ ६३६ ॥ एष कैलासः अतिक्रामति यस्मिन्हिमकणक्लमितच्छायं स्मृतमदनविनिपातखेदविधुरमिव शशिबिम्बम् ॥ हिमहतक्रान्तेति ३पाठान्तरम् ॥

[1] MH. कपिमली. [2] MH. पिच्छले [3] MH कणायो. [4] None of our four MSS. have the reading संभेम° in the text. [5] So MH. Have we to read संभिन्नमिति or is it. संभिन्ननमिति ? [6] MH. मुरला.

इह हर-जडाहिसंजमण-गण्ठि-णिविडिय-गलेण वासुइणा ।
उप्फुल्ल-फणा-धरिया मुचन्ति समीरणुग्गारा ॥ ६३७ ॥
इह णेह णिसासुवि णिव्वडन्ति आमोय-पेल्लिय-भुयङ्गा ।
रणय-च्छवि-संवलिया कडएसु महोसही-विडवा ॥ ६३८ ॥
इह मणि-यडाण दीसइ उव्वत्तिय-वरहि-पिञ्छ-विच्छाओ ।
णीहार-पड-परिक्खलिय-णिग्गमो किरण-विच्छड्डो ॥ ६३९ ॥
इह फुरइ पण्डु-भावो वासागम-भङ्ग-गहिय-सिहराण ।
अणवरय-विसाज्जिय-विज्जु-रुहिर-धाराणव घणाण ॥ ६४० ॥

॥ ६३७ ॥ इह हरजटाभिसंयमनग्रन्थिनिगँडितगलेन वासुकिना उत्फुल्लफणाधृता मुच्यन्ते [ समीर ] गण्डूँषाः ॥ गण्ठिनिविडिय इति ३पाठान्तरम् । ग्रन्थिनिबिडितेत्यर्थः । धृता धृता [1]इवेत्यर्थः । समीरो गण्डूष इव ॥

॥ ६३८ ॥ इह नैव निशास्वपि रात्रिष्वपि [2]निर्वर्तन्ते विवेकेन प्रकाशन्ते एतानि रत्नान्येता ओषधय इति । दीपप्रायत्वेनातिसादृश्यात् । ३विषविघातकामोदप्रेरितभुजङ्गाः रत्नच्छविसंवलिताः कटकेषु महौषधिविटपाः ॥ रत्नानामोषधीनां [3]विवेको रात्रावपि न जायत इत्यर्थः ॥

॥ ६३९ ॥ इह मणिमयतटानां दृश्यते उद्वर्तितबर्हिपिच्छवद्विच्छायः नीहारभैँरपरिस्खलितनिर्गमः किरणसमूहः ॥ नीहारपडेति ३पाठे नीहारो धूमरिका पट इव ॥

॥ ६४० ॥ इह स्फुरति पाण्डुरत्वं वर्षागमभङ्गगृहीतशिखरा-

---

[1]MH. इत्यर्थः for इवेत्यर्थः. [2]MH. निवर्तन्ते.

[3]MH. विवेको रात्रावपि न ज्ञायते इत्यर्थः

इह सिद्ध-सुन्दरीणं थणाण णव-णह-वयाण निव्वडइ ।
आयम्ब-राइ-लञ्छिय-विइत्त-भुय-वत्त-लायण्णं ॥ ६४१ ॥

इह मुणि-वराण णिक्कम्प-णिअम-पडिवन्ध-संधिआलोआ ।
झाण-विरमम्मि जायन्ति णवर मलिणा गिरि-गुहाओ ॥६४२॥

इह मुक्क-पल्ललुम्मुह-पसण्ण-महिसावलोइआ होन्ति ।
सेल-सिहरन्तरिज्जन्त-रवि-अरा दियस-परिणामा ॥ ६४३ ॥

णाम् अनवरतविसृष्टविद्युद्रुधि [रधा] राणामिव घनानाम् ॥ किल प्रहारनिर्गतरुधिरा योद्धारः पाण्डुवर्णा भवन्ति दुर्गं चाश्रयन्ते पलायितधाराः सन्तः । घना अपि प्रोषितप्रावृषो[2] [1]विगतजललोहिता गृहीतगिरिशिखरदुर्गा गलितविद्युद्रुधिरधाराः । गलन्ती विद्युदेवैषां रुधिरधारेव । निर्जलीभूतेषु हि घनेषु प्रायो विद्योतते विद्युत् ॥

॥ ६४१ ॥ इह सिद्धसुन्दरीणां संबन्धिनां स्तनानां नवनखपदानां [3]निर्वर्तते आताम्रराजिलाञ्छनविचित्रभूर्जपत्रलावण्यम् ॥

॥ ६४२ ॥ इह मुनिवराणां निष्कम्पं कृत्वा यो नियमेन प्रतिबन्धः सर्वेन्द्रियवृत्तिनिरोधस्तेन नासाग्रस्फुरत्तेजस्त्वात्संधितः प्रसारित आलोको यासु ध्यानविरम एव नवरं केवलं जायन्ते मलिना गिरिगुहाः [4]नतु ध्यानावस्थायाम् ॥ असंप्रज्ञातयोगदशायां योगिनां तेजोमयप्रकाशैकरूपत्वं भवतीति योगशास्त्रेषु गीयते ॥

॥ ६४३ ॥ इह मुक्तपल्वलोन्मुखप्रसन्नमहिषावलोकिता भवन्ति शैलशिखरान्तरीयमाणरविकरा दिवसपरिणामा दिवसावसानानि ॥

---

[1] So MH [2] MH. °प्रावृषा. [3] MH. निवर्तते. [4] MH. ननु.

छाया-णिव्वाविय-सद्दलाण भद्दं दिणावसाणाण ।
णयर-विणिअत्त-गोवी-परिगीय-वणन्त-मग्गाण ॥ ६४४ ॥
इह पल्ली-धूमुब्भेय-धूसरिज्जन्त-कुञ्ज-रमणिज्जा ।
होन्ति गिरि-यडय-दण्डा णिसागमारम्भ-गम्भीरा ॥ ६४५ ॥
उयअ-च्छविं मुयन्तो पुराण-करि-दन्त-पिङ्गल-मऊहो ।
इह सोहइ सिहरासत्त-मण्डलो जामिणी-णाहो ॥ ६४६ ॥
धाराहिसित्त-णव-कन्दलाण इह ता चलन्ति मालाओ ।
जरढ-कलविङ्क-गल-मण्डलाहिणीला जल-हराण ॥ ६४७ ॥

॥ ६४४ ॥ छायानिर्वापितशाड्वलानां भद्रमस्तु दिनावसानानां नगरविनिवृत्तगोपीपरिगीतवनान्तमार्गाणाम् ॥ [1]निर्वापितं सुखितम् ॥

॥ ६४५ ॥ इह पल्लीधूमोद्भेदधूसरीक्रियमाणकुञ्जरमणीया भवन्ति गिरिकटका एव दण्डा इव रात्र्यागमारम्भवत्संध्यावद्गम्भीरा रात्र्यागमे वा गम्भीराः सान्धकारतराः ॥ पल्ली गिरिकुटी । कुञ्जो वनगहनम् ॥

॥ ६४६ ॥ उदयच्छविं विमुञ्चन् विकिरन् पुराणकरिदन्तवत्पिङ्गलमयूखः इह शोभते शिखरासक्तमण्डलो यामिनीनाथः ॥ शिखरम् इह उदयगिरेरर्थात् ॥

॥ ६४७ ॥ धाराभिषिक्तनवकन्दलानामिह ता वर्लन्ति मालाः जरठकलविङ्कगलमण्डलवदभिनीला जलधराणाम् ॥ कलविङ्कश्चटकः ॥

---

[1]MB निर्वात.

इह सो तरु-अल-वसुआय-सलिल-संभिण्ण-केसरामोओ ।
परिणय-किण्ण-सुरा-गन्ध-गाढ-महुरो विणिम्महइ ॥ ६४८ ॥

पढमासारे इह तत्त-भू-णिवेसाइँ वण-कुरङ्गेहिं ।
दर-घडिय-मुहं पिज्जन्ति अग्ग-सिसिराइँ तोयाइं ॥ ६४९ ॥

इह वेल्लन्त-दुमुज्झिअ-भिण्ण-वओ-अण्ड-कलल-सीअरिणो ।
वाअन्ति मेह-सीयल-धूलि-लवुत्थल्लिणो पवणा ॥ ६५० ॥

एए विराय-गोमय-हरियन्तर-बुब्बुआ परिवहन्ति ।
सद्दल-संदाणिअ-सहर-चित्तला पूर-वित्थारा ॥ ६५१ ॥

॥ ६४८ ॥ इह स तरुतलशुष्कसलिलसंभिन्नकेसरामोदः परिणता या किण्वसुरा तद्गन्धवद्गाढमधुरो विनिर्गच्छति प्रसरति ॥
२ केसरो वकुलः । किण्वः फलवृक्षविशेषः ॥

॥ ६४९ ॥ प्रथमासारे आदिवर्षे इह तप्तभूनिवेशानि वनकुरङ्गैरीषद्घटितमुखं कृत्वा पीयन्ते अग्रशिशिराणि [तोयानि] ॥
२ अधस्तु तप्तभूयोगात्तप्तानि ॥

॥ ६५० ॥ इह वेल्लद्द्रुमोज्झितभिन्नवयोण्डकललशीकरिणो [1]वान्ति मेघशीतलधूलिलवोत्क्षेपणशीलाः पवनाः ॥ वयांसि पक्षिण-
२ स्तेषामण्डानि । [2]तरुफललमकठिनं गर्भद्रव्यम् ॥

॥ ६५१ ॥ एते विलीनं विद्रुतं यद्गोमयं तेन हरितबुद्बुदाः [3]प्रवहन्ति [4]शाड्वलसदानितशफरचित्राः पूरविस्तारा वर्षारम्भजलौघाः ।
२ संदानितं बद्धम् । शफरा लघुमत्स्याः ॥

---

[1]MH. °दर्पित° [2]MH. वान्ति. [3]MH. तरुफल°.
[4]MH. °सदानित°.

इह धारा-विच्छोलिअ-फलट्ठि-णिग्गय-कसाय-गन्धाण ।
विरल-भमराण घोलइ लच्छी जम्बू-तरु-यलाण ॥ ६५२ ॥
उक्कन्दलाण घोलइ इह सेरिह-दलिय-केसर-वणाण ।
गन्धो उब्बुद्ध-कलम्ब-सीयलो सेल-कडयाण ॥ ६५३ ॥
इह सलिल-किलिण्णाअम्ब-विरस-मालूर-सार-सुरहीण ।
जलअ-समयम्मि रण्णाणिलाण णिव्वडइ सोहग्गं ॥ ६५४ ॥
णव-धारा-पडिबज्झन्त-रेणु-परिसामला थली-मग्गा ।
धूसर-हरिण-खुर-च्छेय-कब्बुरा इह विरायन्ति ॥ ६५५ ॥
अवमेहाओवि इह मइल-चन्दिमा होन्ति सोम्म-पवणाओ ।
सलिलन्ध-गयण-दर-णिव्वडन्त-ताराओं रयणीओ ॥ ६५६ ॥

॥ ६५२ ॥ इह नीरधाराप्रक्षालितफलास्थित्वेन निर्गतकषायगन्धानां विरलभ्रमराणां घूर्णते लक्ष्मीर्जम्बूतरुतलानाम् ॥ लक्ष्मीः शोभा । सा व्याकुलीभवति [1]फलविलयकालत्वात् ॥

॥ ६५३ ॥ उद्गतकन्दलानां [2]मुकुलितकन्दलवद्वनानां सैरिभदलितकेसरवनानां [3]महिषपतोदवशभग्नकदम्बवनानां गन्धः उद्बुद्धकदम्बत्वेन जलवृष्टिसमनन्तरं पुष्पितकदम्बत्वेन शीतलः सुखदायी शैलकटकानां घूर्णते बहलो भ्रमति ॥ मन्दं करोत्यर्थः ॥

॥ ६५४ ॥ इह सलिलक्लिन्नाताम्र [ वि ] रसबिल्वसारसुरभीणां जलदसमये अरण्यानिलानां [4]निर्वर्तते सौभाग्यं सुन्दरत्वम् ॥

॥ ६५५ ॥ नवधाराप्रतिबद्धरेणुत्वेन परिश्यामलाः स्थलीमार्गाः धूसरहरिणखुरच्छेदकर्बुरा इह विराजन्ते ॥

॥ ६५६ ॥ अपमेघा अपि इह मलिनचन्द्रिका भवन्ति सौम्यपवनाः [5]सलिलान्धगगनत्वेन [6]ईषन्निर्वर्तमानतारका रजन्यः ॥

[1]MH. °कालध्वात. [2]MH. मुकुलितकंदवधनानां. [3]MH. °नोद°.
[4]MH. निवर्तते. [5]MH. सलिलाध्वगगन°. [6]MH.°भिवर्तमान°.

इह सा उम्मुदिय-सिन्दुवार-मयरन्द-बन्ध-सुहयाण ।
सरय-दियसाण वियसइ लच्छी उग्गन्ध-कमलाण ॥ ६५७ ॥
इय सयल-दिसा-अड-विअय-मिलिय-महि मण्डलेहिँ सच्चविया ।
सेणा-भडेहि से सुहय-संणिवेसा वणुद्देसा ॥ ६५८ ॥

अवि य । ३६

एए विरत्त-सुरचाव-विरस-विरलाहिलक्खिय-च्छाया ।
महिस-खुर-च्छेय-विहाविय-प्पहा मणि-यडुद्देसा ॥ ६५९ ॥
इच्छा-परियत्त-लया-वियाण-उद्देस-पीडिय-दुमाण ।
छाया सच्चिय अण्णव्व रण्ण-फरुसा उववणाण ॥ ६६० ॥

॥ ६५७ ॥ इह सा उन्मुद्रितसिन्दुवारमकरन्दबन्धसुभगानां [शरद्दिवसानां] विकसति लक्ष्मीः शोभा [उद्गन्धकमलानाम्] ॥
३ [1]उग्गन्धकलमाणेति पाठे उन्नतगन्धधान्यविशेषाणामित्यर्थः ॥

॥ ६५८ ॥ इति उक्तप्रकारेण [2]सकलदिक्तटविजयामिलितमहीमण्डलैः स्वीकृतसकलमण्डलजनैः सत्यीकृता अवलोकिताः सेनाभटैः
३ से तस्य नृपस्य संबन्धिभिः सुभगसांनिवेशा वनोद्देशाः ॥

॥ ६५९ ॥ एते [3]विरक्तः केनाप्युपाधिना मन्दप्रभो यः सुरचापस्तद्वद्विरसा विरला अभिलक्षिता छाया कान्तिर्येषां ते महिषखुरच्छे-
३ देष्वेव महिषचरणनिघृष्टत्वेन विभावितप्रभा मणितटोद्देशाः ॥

॥ ६६० ॥ इच्छापरिवृत्तलतावितानोद्देशपीडितद्रुमाणां छाया सैव [4]अन्येव अरण्यवरपरुषा उपवनानाम् ॥ [उपवनानां] प्रदेशेषु ये
३ पतिता उद्वासिता द्रुमास्ते यदृच्छया [5]पुरुषप्रयत्ननैरपेक्ष्येण संजातानां

---

[1]MH. °कमणगेति. [2]MH. °विजित° changed to °विजय° [3]MH. विरक्ताः
[4]MH. सैवमण्यवारैवा° for सैव अन्येव अ°. [5]MH. °निरपेक्षेण°.

विब्भमवईण भिज्जन्तमलय-परिगूढ-केसरं जाण ।
ताणंचिय वियलइ इह लयाण फल-पेल्लियं कुसुमं ॥ ६६१ ॥
ओसरिय-सिहर-बन्धा तह-ट्ठिओवत्त-भित्ति-पब्भारा ।
भवणोच्छङ्गा तेच्चेय विजल-वावी-णिहा जाया ॥ ६६२ ॥
जाया ताओच्चिय तह- महग्घ- मणि-रासि-सवलिय-क्खम्भा ।
भमिर-भुयङ्ग-फणा-रयण-मेत्त-विहवाओ वीहीओ ॥ ६६३ ॥
इह इर तंआ पुर-संणिवेस-पिहु-पंसु-रासि-परिवेसं ।
वरिसासु पएस-पयास-खुत्त-मणि-विद्दुमं णयरं ॥ ६६४ ॥

लतानामवतानेन [1]पीडिताः संवलिताः सन्तो यद्यपि घनच्छाया-संवृत्तास्तथापि ते अनुपस्कृततलत्वेन अरण्यतरुवत्परुषच्छायाः संपन्नाः । प्रपादिस्नेहाभावादिति तात्पर्यार्थः ॥

॥ ६६१ ॥ विभ्रमवतीनां ललनानां [2]भिद्यमानमेव अस्फुटविकसितं कलिकावस्थमेव अलकपरिगूढकेसरम् अभूद् यासां कलिकावस्थमेव स्रगवबद्धं कृत्वा त्वरया केशकलापयोजितं तन्मध्य एव च विकासमासाद्य केसरशेषमभूत् [3]तासामेव विगलति इह लतानां फलबन्धप्रेरितं कुसुमम् ॥ उपभोक्तुरभावाल्लतासु [4]परिपक्वफलवशप्रेरितं सत् भूमौ पतति । निष्फलमित्यर्थः ॥

॥ ६६२ ॥ अपसृतशिखरबन्धास्तथास्थितापवृत्तभित्तिप्राग्भारा भवनोत्सङ्गास्त एव विजलवापीनिभा जाताः ॥

॥ ६६३ ॥ जातास्ता एव [5]तथामहार्घमणिराशिशबलितस्तम्भाः भ्रमणशीलभुजङ्गफणारत्नमात्रविभवा वीथ्यः ॥

॥ ६६४ ॥ इह किल तदा [6]सुवासपुरकाले पुरसंनिवेशपृथुपांसु-

[1]MH. पीता: [2]MH. विद्यमान॰. [3]MH. तासामेवं. [4]MH. ॰वस्त्रं॰ The emendation is mine. [5]MH. ॰शापल्ति॰. [6]MH. सुवस॰.

णीरेणु-भाव-णिव्वडिय-साल-सुर-सयण-तोरण-विडङ्का ।
दूरेवि पुर-णिवेसा इह आसण्णव्व दीसन्ति ॥ ६६५ ॥
पविलीण-कुमूल-ट्ठाण-फरुस-बुस-पंसु-थउडिउद्देसा ।
इह भू-दविणण्णेसण-विइण्ण-विवरा घरोवासा ॥ ६६६ ॥
इह काल-रूढ-सीरागमाइं जायाइं वहल-हरियाइं ।
भू-गुण-विसट्ट- मन्दार-बद्ध-गहणाइं छेत्ताइं ॥ ६६७ ॥

राशिपरिवेषत्वेन वर्षासु प्रदेशेषु [1]प्रवेशेषु [प्रकाशमान] कुट्टितमणिविद्रुमं नगरमासीत् ॥

॥ ६६५ ॥ नीरेणुभावेन [2]जनविहीनत्वाद्रेणुरहितत्वेन [3]निर्वृत्ताः प्रकटीभूताः [4]शालानां प्राकाराणां देवसदनानां च तथा तोरणानां संबन्धिनो विडङ्का [5]विटङ्का विचित्ररचनाविशेषा यत्र ते दूरेपि पुरनिवेशा इह आसन्ना इव दृश्यन्ते ॥

॥ ६६६ ॥ प्रविलीना जलादिना विगलिता ये कुसूलास्तेषां स्थाने [6]परुषबुसानां कुसूलकारणभूतानां [पांसूनां] च थउडाँ कूटाकारा उद्देशा येषु ते इह भूनिहितद्रविणार्थं वितीर्णानि [7]प्रसारीभूतानि विवराणि यत्र ते [8]गृहावकाशा गृहप्रदेशाः ॥

॥ ६६७ ॥ इह [9]कालरूढसीरागमनानि समीभूतहलप्रचाराणि जातानि बहलहरिततृणयुक्तानि भूगुणविकसितमन्दारबद्धगहनानि क्षेत्राणि ॥ मन्दारो अर्कः ॥

[1]So MH. [2]MH. जनविहीनत्वात्. The emendation is conjectural. [3]MH. निर्वृत्ता॰ [4]MH सालानां. [5]MH. विका for विडङ्का. [6]MH °बुसानां. [7]MH. प्रसारिभूतानि. [8]MH.गराव°. [9]MH. °सीरा°.

इह कारहीसु कल्लं उण्णान्तिव भूसु सावसायासु ।
आरामन्ति विणिम्महिय-कमल-गन्धाओव दिसाओ ॥६६८॥
साहासु वन्ध-परिसेस-रज्जु-वोच्छेय-विरल-जर-द्दभा ।
दोला-मग्गा उवणिग्गमेसु एए तरु-अलाण ॥ ६६९ ॥
अवसण्ण-पुराण-णरिन्द-कित्तण-हाण-सोण-चुण्णाओ ।
इह जर-भुयङ्ग-संभावियाओ पेरन्त-भूमीओ ॥ ६७० ॥
इह निज्जिय-कुन्दोसीर-सार-सहयार-पाडल-रसाइं ।
कमल-करवीर-वावीसु गिम्ह-तोयाइं अग्घन्ति ॥ ६७१ ॥

[॥ ६६८ ॥ इह कारभीषु करभनामसुगन्धिद्रव्यावशर्षसिवेन्धिनीषु कल्यं प्रातःकालं प्रभातकालं सूर्योदयम् उण्णन्तिव उन्नयन्तीव प्रतीक्षन्त इव भूषु भूमिषु सावसादासु सरसीस्थानीयानिरुदकगर्तयुक्तासु आरमन्ति तिष्ठन्ति च विनिर्गतकमलगन्धा इव विविधं निष्प्रसृतकमलगन्धा इव दिशः ॥
उद्वसनात्पूर्वं यत्र सरस्य आसंस्तत्र इदानीं केवलं निरुदकगर्ता भवन्ति । कमलानां स्थाने करभा भवन्ति । सूर्योदयं प्रतीक्षमाणानां स्त्रीणां स्थाने शून्या दिशश्च भवन्तीत्यर्थः ॥ ]

॥ ६६९ ॥ शाखासु बद्धपरिशेषरज्जुच्छेदाविरलजरद्दर्भाः दोलामार्गा उपनिर्गमेषु एते तरुलतानाम् ॥

॥ ६७० ॥ अवसन्नपुराणनरेन्द्रकीर्तनस्थानशोणचूर्णाः इह जरद्भुजङ्गसंभाविताः पर्यन्तभूमयः शोणं चूर्णम् इष्टकामयवन्धि ॥

[ ॥ ६७१ ॥ इह निर्जितकुन्दोशीरसारसहकारपाटलरसानि कमलकरवीरवापीषु ग्रीष्मतोयानि अर्घन्ते शोभन्ते ॥ ]

इह वियड-मूल-बन्धा घडिय-सिला-संचया परिसरेसु ।
असमत्त-णिवेसच्चिय जरं गया सुपुरिसारम्भा ॥ ६७२ ॥

दुग्गम-भाव-ट्ठिय-णीलि-घडिय-घण्टेसु तोरणग्गेसु ।
इह अज्जावि उद्देसा संभाविय-भूरि-विहवव्व ॥ ६७३ ॥

आ-सिहर-परिट्ठिय-भित्ति-संचया गलिय-दारु-पडिबन्धा ।
इह दूमन्तिव अब्भन्तरायवा भवण-वित्थारा ॥ ६७४ ॥

जण-विणिहट्टाअस-कलुस-हीण-पाहाण-देहली-बन्धा ।
अगरु-दल-लहुय-जर-दार-दारु-सयला इह णिवेसा ॥ ६७५ ॥

॥ ६७२ ॥ इह विकटमूलबन्धा घटितशिलासंचयाः परिसरेषु
चतुर्हट्टचतुष्पथादिषु असमाप्तसंनिवेशा एव जरां गताः सुपुरुषाणां
३ [1]देवकुलमठाद्यारम्भाः ॥

॥ ६७३ ॥ [2]दुर्गमभावस्थितस्य अत्युन्नतस्य नाले* कोटौ[3] घटिता
घण्टा येषां तेषु तोरणाग्रेषु सत्सु इह अद्याप्युद्देशाः संभावितभूरि-
३ विभवा इव ॥

॥ ६७४ ॥ आशिखरपरिस्थितभित्तिसंचया गलितोपरिगतदारु-
प्रतिबन्धा इह दुन्वन्तीव उपतापयन्तीव हृदयम् अभ्यन्तरातपा भव-
३ नविस्तारा: ॥

॥ ६७५ ॥ जनैर्विनिघृष्टा अपमृदिता आयसाः पत्रबन्धा येषु
ते अत एव लोहमलसंसर्गादिना कलुषा हीनपाषाणदेहलीबन्धा
३ द्वारप्रदेशनिवेशा येषु ते अगुरुदललघुकजरद्द्वारदारुशकला इह
निवेशाः ॥ अगरुद्वारत्वेन अतिसंपद्विद्योतिता ॥

[1]MH. देवगमठाद्या°. [2]MH. दुर्ग°. [3]MH. कोटो.

इह विहडिय-पिण्डी-वन्ध-संधि-परिलम्बि-वाल-णिम्मोआ ।
आयाम-परिट्ठिय-वङ्क-वियड-लिङ्गा थलाहोआ ॥ ६७६ ॥
इह चिञ्चिणीण घेत्तूण कर-यलोलुम्प-पिण्डियं पहिओ ।
कवलेइ जरढ-कलविङ्क-पक्ख-परिकव्वुरं कुसुमं ॥ ६७७ ॥
दीसन्ति पढम-पीढा णिविडारुण-लग्ग-पङ्क-लेवाओ ।
इह विहडिय-भित्ति-च्छेय-णिग्गया जज्जरिट्टाओ ॥ ६७८ ॥
इह लवणुग्गम-परिहीण-भित्ति-वलयत्तणेण दीसन्ति ।
अहिअ-वियडाओं पूरण-समुण्णया कूय-कोसीओ ॥ ६७९ ॥
पीणत्तण-दर-परिणाम-भङ्ग-परिकसण-मणि-कवालाओ ।
आहोयं अज्जवि इह कहेन्ति गहिराओं रत्थाओ ॥ ६८० ॥

॥ ६७६ ॥ इह विघटितभित्तिच्छेदपिण्डीवन्धसंधिपरिलम्बिव्यालनिर्मोकाः आयामपरिष्ठितविकटपङ्कलिङ्गाः स्थलाभोगाः ॥

[॥ ६७७ ॥ इह चिञ्चिनीनां चिञ्चानां गृहीत्वा करतलावलुम्पन-(?) पिण्डितं पथिकः कवलयति जरठकलविङ्कपक्षपरिकर्बुरं कुसुमम् ॥ पथिकः साधीयसो भक्ष्यस्याभावाच्चिञ्चानां पुष्पं गृहीत्वा तत् करतले लुम्पत्वा पिण्डितं कृत्वा च भक्षयतीत्यर्थः ॥ ]

॥ ६७८ ॥ दृश्यन्ते प्रथमपीठानिविडारुणलग्नपङ्कलेखाः लग्ननिविडारुणपङ्कलेखाः । कुत इत्यपेक्षायां प्रथमपीठादिति योजनीयम् प्रधानस्य सापेक्षत्वात् । इह विघटितभित्तिच्छेदनिर्गता जर्जरेष्टकाः ॥

॥ ६७९ ॥ इह लवणोद्गमपरिहीनभित्तिवलयत्वेन दृश्यन्ते अधिकविकटाः पूरणेन च समुन्नताः कूपानां कोश्यो नाल्यः ॥ पुराणभित्तिषु लवनिकोत्पद्यते तया च भित्तयः क्षीयन्त इति प्रसिद्धमार्यावर्ते सर्वत्र ॥

॥ ६८० ॥ पीनत्वेन ईषत्परिणामेन[1] च मनाग्विकारेण तथा

[1] MSS. °णामेन for °णामेन च.

इह कालेण समीकय-तलाय-सुरमन्दिराऒं दीसन्ति ।
दर-णिण्णुण्णअ-संठाण-मेत्त-विसमाऒं भूमीओ ॥६८१॥
घर-गोलय-दारोसरिय-मूल-पडिबद्ध-चुण्ण-रेहाओ ।
एयाऒं पाडलावण्डु-कुप्परा जुण्ण-भित्तीओ ॥ ६८२ ॥
इह गम्भीराअन्तिव अहियालोयाइँ जालय-विहङ्गा ।
छायासुवि दर-पाविय-खम्भ-च्छायाइँ भवणाइं ॥ ६८३ ॥
दियसेवि भूअ-संभावणाएँ उक्कण्टयन्ति अङ्गाइं ।
णीसद्दाऒंवि इह झत्ति घडिय-सद्दाऒं वडहीओ ॥ ६८४ ॥
इह दूमन्तिव फल-पत्त-लोह-पविरिक्क-ताल-खज्जूरा ।
अवलोह-पलोट्ट-जरारहट्ट-दण्डा घरोवासा ॥ ६८५ ॥

ईषद्भङ्गेन ईषत्परिकृष्टमणिकपालत्वेन च आभोगमिह अद्यापि कथ-
३ यन्ति सूचयन्ति नगर्या गम्भीरा रथ्याः ॥

॥ ६८१ ॥ इह कालेन समीकृततटाकसुरमन्दिरा दृश्यन्ते ईषन्निम्नोन्नतसंस्थानमात्रविषमा भूमयः ॥

॥ ६८२ ॥ गृहघोलकप्रचारापसृतमूलप्रतिबद्धचूर्णरेखाः एताः [1]पाटलापाण्डुकर्परा जीर्णभित्तयः ॥ घरघूलको मूषकादिः ॥

॥ ६८३ ॥ इह गम्भीरायन्त इव अधिकालोकान्यपि सन्ति ।
कुतोधिकालोकत्वम् जालकविभङ्गात् भग्नवातायनत्वेन महाछि-
३ द्रत्वात् । छायास्वपि ईषत्प्राप्तस्तम्भच्छायानि भवनानि ॥ [2]आलोक-
च्छुरितायां भित्तिच्छायायां स्तम्भादिच्छायान्तरम् अनुभवसिद्धम् ।
गाम्भीर्यप्रतीतिश्च [3]उक्तस्वरूपैव ॥

॥ ६८४ ॥ दिवसेपि भूतसंभावनया उत्कण्टकयन्त्यङ्गानि निःशब्दा अपि इह झगिति घटितशब्दा वलभ्यो भयवशाद्भान्ति ॥

॥ ६८५ ॥ इह दुन्वन्तीव फलपत्रलोभप्रविरिक्तबालखर्जूराः

[1]MH. पाटल्पाण्डु°. [2]MH. भाग्योकाच्छुरितायां [3]MH. °स्वरूपेव.

चिण्होवलक्खिया विहुआरम्भोहुर-णरिन्द-दीसन्ता ।
इह अज्जवि सन्ति महा-णिहाण-मग्गा परिसरेसु ॥ ६८६ ॥
अघडन्त-धूम-रय-णिग्गमाओ पल्हत्थ-भवण-विरलाओ ।
इह होन्ति गाढ-तिमिरा चिरेण रयणीसु रत्थाओ ॥ ६८७ ॥
इह तस्स चिरं सेवागएहिँ विहडिय-समिद्धि-बन्धेहिँ ।
णिय-णयर-संणिवेसा वेरि-णरिन्देहिँ सच्चविया ॥ ६८८ ॥

किं च जायं । ६

पेच्छह लद्ध-च्छायं इमीएँ पडिवण्ण-दप्पणं वयणं ।
कमलंव समुह-रविबिम्ब-चुम्बियं फुरइ णलिणीए ॥ ६८९ ॥

[1]अपगतलोहपर्यस्तजरदरघट्टदण्डा गृहावकाशाः ॥ लोभप्रविरिक्ताः
३ प्रकर्षेण विशेषेण रिक्ताः शून्या नीरक्षत्वेन फलपत्राभावेन कृतप्रयोजनशून्यत्वात् ॥

॥ ६८६ ॥ चिह्नमात्रेणोपलक्षिता [2]विधुरारम्भैर्मन्दोत्साहैर्लज्जया ओहुरैरवाङ्मुखैर्नरेन्द्रैस्तत्स्वामिभिर्दृश्यमाना इह अद्यापि सन्ति महा-
३ निधानमार्गाः परिसरेषु प्रदेशेषु ॥

॥ ६८७ ॥ [3]अघटमानधूमरजोनिर्गमाः पर्यस्तभवनत्वेन विरला इह भवन्ति गाढतिमिराश्चिरेण रजनीषु रथ्याः ॥ उज्जटत्वाद्धूमर-
३ जसोर्न[4] निर्गमः प्रदीपाद्यभावेन च रजनीषु गाढतिमिरत्वम् । चिरेणेति चिरमित्यर्थः ॥

॥ ६८८ ॥ इति तस्य गृहीतसेवैर्विघटितसमृद्धिबन्धैर्निजनगरसंनिवेशा वैरिनरेन्द्रैरवलोकिताः ॥ कुलकम् ॥

॥ ६८९ ॥ अथ विजयिनां सेनाभटानां वर्षासु विश्रान्त्ये

---

[1]MH. जरदरट्ट. [2]MH. °ल्लवाहुरे. [3]MH. भारंभूम.
[4]MH. °रजसो न. The emendation is mine.

उव्वहइ दइय-गहियाहरोट्ठ-झिज्जन्त-रोस-पडिरायं ।
पाणोसरन्त-मइरंव फलिह-चसयं इमा वयणं ॥ ६९० ॥
कण्ठोसरिएक्क-थणावसत्त-पिय-बाहु-घोलिर-करग्गा ।
सोहइ इमा पयत्तिय-तुम्बी-वीणा-विणोयव्व ॥ ६९१ ॥
दइय-गहियालयावलि-कलिय-नडालं मुहं इमा वहइ ।
बहुल-निसा दर-हीरन्त-पढम-कलमिन्दु-बिम्बंव ॥ ६९२ ॥
वयण-णयण-प्पहा-णिज्जियाण णूणं इमीएँ एयाण ।
सम-दुक्खाणव जाओ समागमो चन्द-हरिणाण ॥ ६९३ ॥

नायिकाक्रीडां पञ्चककुलकेनाह ॥ प्रेक्षध्वं लब्धोरसीहं लब्धच्छायं
३ वा अस्याः प्रतिपन्नदर्पणं वदनं कमलमिव संमुखरविबिम्बचुम्बितं
स्फुरति नलिन्याः ॥

॥ ६९० ॥ उद्वहति दयितगृहीताधरौष्ठत्वेन क्षीयमाणरोपप्रति-
रागं पानापसरन्मदिरमिव स्फटिकचषकमेषा वदनम् ॥

॥ ६९१ ॥ [1]कण्ठापसृतैकस्तना [ व ] सक्तप्रियबाहुघूर्णनशीलक-
राग्रा शोभते एषा प्रवर्तिततुम्बीवीणा[ वि ]नोदेव । [2]मधुररहस्यरव-
३ योगात् ॥ तुम्बीवीणा [3]अलाबुवीणा ॥

[॥ ६९२ ॥ दयितगृहीतालकावलिकलितललाटं मुखम् एषा
काचित् वहति बहुलपक्षनिशा कृष्णपक्षसंबन्धिनी रात्रिः किंचिद्यथा
३ तथा ह्रियमाणा ह्रसन्ती प्रथमकला यस्य तद् इन्दुबिम्बमिव ॥ ]

॥ ६९३ ॥ वदननयनप्रभानिर्जितयोः [ नूनमस्या एतयोः ] सम-
दुःखयोर्जातः समागमश्चन्द्रहरिणयोः ॥ निर्जिताभ्यां चन्द्रहरिणाभ्यां
३ समदुःखाभ्यां मन्त्रयित्वा बलवति [4]शत्रावनुप्रवेश आश्रित इत्यर्थः ॥

[1]MH. कण्ठोर°. [2]MH. °सर°. [3]MH. °वलाबु°. [4]MH. °प्रवेश.

इय ओआरिय-चावम्मि जम्मि पाऊस-विलसियव्वेसु ।
णिव्वण्णेइ परियणो सेणा-ललणाण लीलाओ ॥ ६९४ ॥

किं च । ४३

जस्स पहार-धुआणण-रिउ-गय-गण्डत्थलुच्छलन्ताण ।
तियस-परिमुक्क-कुसुमेसु घडइ पणओ महु-यराण ॥ ६९५ ॥
तस्स मगहाहिवइणो इमाण रमणीण विहसिउज्जोया ।
तुह वहल-जस-च्छवि-पेछियव्व ण णरिन्द दीसन्ति ॥६९६॥
एयाण फुरिय-सेवा-चामर-पम्ह-पडिमेसु दीसन्ति ।
अन्तो भय-पीयाओव्व वाह-धारा कवोलेसु ॥ ६९७ ॥

॥ ६९४ ॥ इत्यवतारितचापे यस्मिन्यशोवर्मणि प्रावृड्विलसितव्येषु निर्वर्णयति परिजनः सेनाललनानां लीलाः ॥ स विराजते
३ जगतीति शेषः ॥ कुलकम् ॥

॥ ६९५ ॥ अथ विजयिनः कन्यकुब्जप्राप्तस्य [यशोवर्मणो] यशोवर्णनं वन्दिकर्तृकम् अवान्तरयुगलकादियुतेन चतुर्विंशतिकु-
३ लकेनाह ॥ तत्र जस्सेत्यादि युगलकम् । यस्य प्रहारधुताननरिपुगजगण्डस्थलोच्छलतां त्रिदश [परि] मुक्तकुसुमेषु घटते संपद्यते प्रणयो मधुपानप्रार्थना मधुकराणाम्

॥ ६९६ ॥ तस्य मगधाधिपतेः संबन्धिनीनामेतासां [1]रमणीनां विहसितोद्योतास्तव बहलयशश्छविप्रेरिता इव नरेन्द्र न दृश्यन्ते ॥

॥ ६९७ ॥ एतासां शत्रुसुन्दरीणां स्फुरिता विसारिताः सेवार्थे ये चामरास्तेषां यानि पक्ष्माणि शुभ्रसूक्ष्मवालास्तत्प्रतिबिम्बयुक्तेषु
३ सत्सु दृश्यन्ते अन्तर्भयपीता इव बाष्पधाराः कपोलेषु ॥

[1]MII, रमणीयां.

धुय-मय-पङ्क-कणुक्कर-णिहेण जाणं कवोल-कुहराहि ।
कुम्भ-ट्ठिय-मुत्ता-किरण-पेल्लियं णीइ तिमिरंव ॥ ६९८ ॥
ते तुज्झ जय-गइन्दा णरिन्द विद्दविय-वेरि-वग्गस्स ।
णवर गिरि-कडय-पडिपेल्लणेण तेयं विणोयन्ति ॥ ६९९ ॥

अह वा ।

टङ्क-मुहाहय-कढिणट्ठि-मुक्क-धूम-च्छलेण उव्वमइ ।
तद्दियस-पहा-परिपीय-तिमिर-पडलंव कर-जालं ॥ ७०० ॥

॥ ६९८ ॥ अथ युगलकम् । [1]धुतमदपङ्ककणोत्करनिभेन येषां कपोलकुम्भकुहरात् कुम्भस्थितमुक्तानिकरैःप्रेरितं निर्याति तिमिरमिव

॥ ६९९ ॥ ते तव जयगजेन्द्रा हे नरेन्द्र विद्रावितवैरिवर्गस्य केवलं गिरिकटकपरिप्रेरणेन तेजो [2]वलं विनोदयन्ति [3]प्रतिपक्षान्तराभावात् ॥

॥ ७०० ॥ अथ पञ्चभिरवान्तरकुलकम् । टङ्कमुखाहतकठिनास्थिमुक्तधूमच्छलेन उद्वमति प्रतिदिवसप्रभापरिपीततिमिरपटलमिव करजालं कर्तृ ॥ टङ्कः आयसस्तक्षकप्रहरणविशेषः । करजालं रविकरनिकरः । अत्र यस्य दिवसनाथस्येत्यर्वाग्द्रष्टव्यम् । इय सोवीति वाक्यसमाप्तिगाथायां तच्छब्दात् । अत्राख्यायिका । अवर्चा नाग रवेर्वल्लभा भर्तुस्तेजः सोढुमशक्ता सती ततोपससार दूरम् । ततो भगवान् भानुस्तदनुरक्तः [4]स्वतेजोतिशयानिवारणाय टङ्कमादाय स्वशरीरं ततक्ष । सावस्थात्र गाथाचतुष्टयेन वर्णिता ॥

---

[1]MH. धुग°. [2]MH. दर्प for बल which is my emendation.
[3]MH. °पक्षांतरभावात. [4] MH. स्वातिशय°

वोलन्ति णिय-पमाणाणुरूय-पडिवद्ध-वासर-क्खण्डा ।
टङ्क-च्छे ओच्छलिया सरीर-सयलाण संघाया ॥ ७०१ ॥
दीसइ घडणुम्मिल्लन्त-विमल-दसण-प्पहा-परिक्खित्तं ।
तद्दियसिन्दु-पवेसावलग्ग-जोण्हंव मुह-विम्बं ॥ ७०२ ॥
वियलन्ति कय-रणक्कार-टङ्क-वोच्छिण्ण-काय-णिव्वडिया ।
दिण्ण-सुहं आसुर-संगर-ट्ठिया पहरण-च्छेया ॥ ७०३ ॥
इय सोवि तट्ठि-घडणा-विउणुज्जल-मण्डलो दियस-णाहो ।
तुज्झ पयाव-च्छायं परिप्फुरन्तो ण पूरेइ ॥ ७०४ ॥

॥ ७०१ ॥ अतिक्रामन्ति पतन्ति विकर्तिताः सन्तो निजप्रमाणानुरूपप्रतिवद्धवासरखण्डाः । प्रतिबन्धो वासरखण्डानाम् अनन्ततेजः[1]स्कन्धापादानम् । टङ्कच्छेदेभ्य उच्छलिताः शरीरशकलानां संघाताः॥

॥ ७०२ ॥ दृश्यते घटनेन [2]तक्षणेन उन्मीलन्त्यो विकसन्त्यो या विमला दशनप्रभास्ताभिः [3]परिक्षिप्तं संवलितं प्रतिदिवसेन्दुप्रवेशावलग्नज्योत्स्नामिव[4] मुखबिम्बम् ॥ प्रतिदिनं क्रमेण चन्द्रकलाः सूर्यः पिबतीति प्रसिद्धम् ॥

॥ ७०३ ॥ विगलन्ति कृतरणत्कारटङ्कव्युच्छिन्नकायनिष्पतिता [5]दत्तसुखाः आसुरसंगरस्थिताः प्रहरणच्छेदाः ॥ छिद्यन्त इति च्छेदाः खण्डाः काण्डादीनां नष्टशल्यानीत्यर्थः ॥

॥ ७०४ ॥ इति सोपि त्वष्टुः प्रजापतेर्घटनया द्विगुणोज्ज्वलमण्डलो दिवसनाथः तव प्रतापच्छायां परिस्फुरन् न पूरयति ॥ कामाक्रान्तया योतिनिषिद्धं स्वदेहे विकर्तनं चकार स कथं विचार्यमाणस्वतुल्यतया स्फुरतीत्यर्थः । अवान्तरकुलकम् । आदितः ॥ १० ॥

[1]MH. °पादनम्. [2]MH. क्षणेन. [3]MH. °क्षिप्तं. [4]MH. °ज्योत्स्नामिव°. [5]MH. दत्तसुखा.

तुह दूरावज्जिय-सेहरालि-वलएहिँ कीरइ पणामो ।
ओहुर-णडाल-वियलन्त-भिउडि-भङ्गेहिँव परेहिं ॥ ७०५ ॥
सच्चं तुमम्मि दिट्ठे ण सन्ति तुम्हारिसत्ति पडिहाइ ।
णवर तुह दंसणंचिय ठवेइ कालस्स माहप्पं ॥ ७०६ ॥
विसमत्तणंपि विहिणो ण तवेइ तुमम्मि णाह सम्भरिए ।
आसण्ण-पाउसो पल्लवेइ गिम्होवि वण-राइं ॥ ७०७ ॥
जाण णियच्चेय गुणा किं भण्णउ ताण णिग्गुणा जेवि ।
तेवि गुणे तुह अवलम्बि ऊण गुणिणोव्व णन्दन्ति ॥ ७०८ ॥

॥ ७०५ ॥ तव दूरावर्जितशेखरालिवलयैः क्रियते प्रणामः अवाङ्मुखललाटविगलद्भ्रुकुटिभङ्गैरिव परैः ॥ प्रणामं कुर्वतां शत्रूणां विगलन्मुकुटकुसुममधुकरावली गलद्भ्रुकुटित्वेन कल्पिता । आवर्जिताः [1]प्रणमिताः । वशीकृतस्य च भयाद्विगलिता भ्रुकुटिः ॥

॥ ७०६ ॥ सत्यं त्वयि दृष्टे सति न सन्ति त्वादृशा इति प्रतिभाति । केवलं तव दर्शनमेव स्थापयति कालस्य माहात्म्यम् ॥ ये माहात्म्ये प्रसिद्धाः कालप्रभृतयस्ते तव प्रसादादेव माहात्म्येन ज्ञायन्ते । कृतार्थोयं कालादिर्यत्र यशोवर्ममहामणिरभ्युदित इति संप्रत्ययात् ॥

॥ ७०७ ॥ विषमत्वमपि विधेर्न तापयति न दुःखयति त्वयि नाथ संस्मृते । आसन्नप्रावृट् पल्लवयति संजातपल्लवां करोति ग्रीष्मोपि स्वभावसंतापकोपि वनराजिं यतः ॥ इत्यर्थान्तरन्यासः । त्वत्सांनिध्ये विगुणोपि विधिर्दैवाख्यो [2]नाधर्मकृतां विपदं कर्तुं स [ मर्थ ] इत्यर्थः ॥

॥ ७०८ ॥ येषां निजा एव गुणाः सन्ति ते तावत् त्वद्गुणैस्तुष्यन्तीत्यत्र किं भण्यतां तेषाम् । निर्गुणा येपि तेपि[3] गुणांस्तवाव-

[1]MH. om. the visarga after ता. [2] So MH. [3]MH. तवि.

संणिज्झेणंव सिरीएँ तुज्झ दाहिण-भुयावलम्बाए ।
अणवरयमणिट्ठियमेस कणय-वरिसं करो मुयइ ॥ ७०९ ॥
साहीण-मुह-सहस्सो किं व ण ता वासुई पसंसेइ ।
जइ तरइ चिन्तिउमलं गुणे तु एक्केण हियएण ॥ ७१० ॥
विहिणा जाण णडालेसु विलिहियं किंपि विसम-परिणामं ।
ते तुज्झ पाय-वडण-च्छलेण वसुहाहिव फुसन्ति ॥ ७११ ॥
अहिसारणम्मि तं रिउ-सिरीएँ णिसियासि-घडिय-पडिबिम्बो ।
णीलंसुअ-संवी ओव्व सहसि सहसाहव-णिसीहे ॥ ७१२ ॥

३ लम्ब्य[1] उपजीव्य गुणिन इव नन्दन्ति ॥ चन्द्र इव सर्वाह्लादी त्वमित्यर्थः ॥

॥ ७०९ ॥ [2]सांनिध्येनेव श्रियस्तव दक्षिणभुजावलम्बायाः अनवरतम् अनिष्ठितं कृत्वा एष कनकवर्षं करो मुञ्चति ॥ स्वबाहूपार्जि-
३ ताम् अपर्याप्तां श्रियमविरतं गुणिभ्यो वितरसीत्यर्थः ॥

॥ ७१० ॥ स्वाधीनमुखसहस्रः किं वा न तावद्वासुकिःप्रशंसति यदि तरति पारं प्राप्तुं समर्थो भवति चिन्तयितुम् अलं [3]गुणांस्तव एके
३ हृदयेन ॥ मनःसहकृतानामेव बाह्येन्द्रियाणां निजकार्यव्यापारात्वागिन्द्रियसहस्रयुतोपि वासुकिर्निखिलांस्तव गुणान् स्तोतुं न शक्त इत्यर्थः ॥

॥ ७११ ॥ विधिना येषां ललाटेषु विलिखितं किमपि विषमकर्मपरिणामजातं ते तव पादपतनच्छलेन हे वसुधाधिप [4]पुंसयन्ति
३ उत्पुंसयन्ति अपसारयन्ति ॥

[ ॥ ७१२ ॥ अभिसारणे अभिसारणकाले त्वं रिपुश्रियाः निशिना-

[1]MH. स्थोप°. [2]MH. सन्निध्येनैव. [3]MH. गुणान्°.
[4]MH. पुंसि and उत्पुंसि.

सामण्णाइँवि णामक्खराइँ ठवियाइँ तइ विवेयम्मि ।
कित्तण-मेत्तेणवि जेण फुरसि तं णवर हिययम्मि ॥ ७१३ ॥
तुह धारा-लग्ग-समोसरन्त-करि-मोत्तियत्तणा खग्गो ।
आढत्तोवल-वरिसम्बु-वाह-लीलं विडम्बेइ ॥ ७१४ ॥
अणुराओत्ति परियणो कोय-हुयास-प्पह-त्ति पडिवक्खा ।
आणा-पयाण मुद्दासु तुज्झ विन्दन्ति सिन्दूरं ॥ ७१५ ॥

सिघटितप्रतिबिम्बः नीलांशुकसंवीत इव परिहितनीलवर्णाम्बर इव शोभसे सहसा झटिति आहवनिशीथे संगररूपिण्यां रजन्याम् ॥ ]

[॥ ७१३ ॥ सामान्यान्यपि नामाक्षराणि यशोवर्मा इत्येतानि स्थापितानि तव विवेके विवेकेनेव । विवेकं कृत्वेवेत्यर्थः । कीर्तनमात्रेणापि येन यस्मात्कारणात् स्फुरसि आविर्भवसि त्वं केवलं हृदये ॥ यद्यपि नामकरणसमये नासीदन्वर्थकनामविवेकस्तथापि यस्मात्त्वया तन्नाम अन्वर्थकं कृतम् अतः कारणात् नामकरणसमय एव कृतः स विवेक इति भातीति यावत् । शत्र्वादिभीतानां जनानाम् अस्ति त्राता यशोवर्मा मा भैषीरिति तव नामानि कीर्तिते सति स्वन्नामकीर्तनरूपं यशः कवचवदभयकारि भवति । अतः यस्य यशो भीतानां वर्मेत्यन्वर्थकं तव यशोवर्मेति नाम । इति भावः ॥ ]

[॥ ७१४ ॥ तव धारालग्नसमपसरत्करिमौक्तिकत्वात् खड्गः आरब्धोपलवर्षाम्बुवाहलीलां विडम्बयति ॥ ]

[॥ ७१५ ॥ अनुराग इति परिजनः कोपहुताशप्रभेति प्रतिपक्षाः आज्ञापदानां मुद्रासु तव विन्दन्ति लभन्ते सिन्दूरम् ॥

परिजनं प्रति शत्रुजनं प्रति च प्रेषितेषु तवाज्ञापत्रेषु यः सिन्दूरः

वामेयर-भुय-भवणा कह णु सिरी वसउ तुज्झ खग्गम्मि ।
मुणियं दीसइ इह संठियाएँ से तम्मि पडिबिम्बो ॥ ७१६ ॥
नवि तह लोयस्स गुणा णिय-उक्करिसेण पायडा होन्ति ।
तुह संमाणग्घविया वच्चन्ति जहा पहु पसिद्धिं ॥ ७१७ ॥
ण हु पढमंचिय पय-वीढ-घडिय-मउलीहिँ कारिओ तंसि ।
भिउडी-भङ्गायासं अवराह-भएणव रिऊहिं ॥ ७१८ ॥
तुह पहु सवत्त-सीमन्तिणीण अच्छिन्न-बाह-धाराहि ।
दीसन्ति समूलाओव्व लोला लम्बालय-लयाओ ॥ ७१९ ॥

स्वभावेनैव ताम्रवर्णः स तव परिजनः अनुरागदर्शित्वेन ताम्रवर्ण इति
३ मन्यते तव शत्रुजनस्तु कोपहुताशप्रभया ताम्र इति । इत्यर्थः ॥ ]

[ ॥ ७१६ ॥ वामेतरभुजभवनात् कथं नु श्रीर्वसतु तव खड्गे ।
ज्ञातं कथं वसतीति । दृश्यते इह भुजे संस्थिताया अस्यास्तस्मिन्
३ खड्गे प्रतिबिम्बः ॥ ]

[ ॥ ७१७ ॥ नैव तथा लोकस्य गुणा निजोत्कर्षेण प्रकटा भव-
न्ति तव संमानार्घीकृतास्त्वत्कृतसंमानेन संभाविताः सन्तो व्रजन्ति
३ गच्छन्ति यथा हे प्रभो प्रसिद्धिम् ॥ ]

[ ॥ ७१८ ॥ न खलु प्रथमम् एव पदपीठघटितमौलिभिः कारि-
तस्त्वमसि भ्रुकुटीभङ्गायासम् अपराधभयेनेव रिपुभिः ॥ ]

[ ॥ ७१९ ॥ तव हे प्रभो सपत्नसीमन्तिनीनाम् अच्छिन्नबाष्प-
धाराभिः सततमापादम् अवयहन्तीभिर्दृश्यन्ते समूला इव भूम्यां
३ लब्धमूला इव लोला लम्बालकलताः ॥

तव शत्रुस्त्रीणां ये लम्बकेशास्ते सततं पादपर्यन्तं धारया पत-
द्भिस्तासाम् अश्रुभिर्लब्धमूला लता इव दृश्यन्त इत्यर्थः ॥ ]

जाणं ण पुरिसयारो जुवइ-समा तेसु कह सिरी रमउ ।
ठिय-भावमित्थमहिला महिलाओं कहंपि कामेन्ति ॥ ७२० ॥
झीणा एक्के तु असिम्मि सरणमण्णे गया तुमंचेय ।
सेसावि रिऊ जलहिं कहिंपि किर केवि पडिवण्णा ॥७२१॥
वचन्ति अहो उड्ढं अइन्ति मूलङ्कुरव्व पुहईए ।
वीयाहिव एक्कत्तो कुलाहि पुरिसा समुप्पण्णा ॥ ७२२ ॥

[ ॥७२०॥ येषां न पुरुषकारो युवतिसमा तेषु कथं श्री रमताम् । नैव रमत इत्यर्थः । स्थितभावं स्थितत्वं स्थितिम् इत्थम् अखिला महिलाः कथमपि कृच्छ्रेण कामयन्ते ॥

येषां पुरुषाणां पुरुषत्वं नास्ति तेषां गृहेषु युवतिसमा श्रीर्न तिष्ठति । तादृशीं स्थितिं हि । अपुरुषकारोपेतेषु स्थितिमिति यावत् । सर्वाः स्त्रियाः कथमपि कामयन्ते । नैव का अपि कामयन्त इत्यर्थः । पुरुषकारहीनान् स्वपतीन् विहाय पुरुषकारोपेतांस्त्वादृशान् आश्रयन्तीति भावः ॥]

[ ॥ ७२१ ॥ क्षीणा हता एके कतिपयाः शत्रवः तु तव असौ खड्गे । शरणमन्ये गतास्त्वामेव । शेषा अपि रिपवो जलधिम् । कुत्रापि किल केपि प्रतिपन्ना गताः ॥]

[ ॥ ७२२ ॥ व्रजन्ति गच्छन्ति अधः ऊर्ध्वम् अयन्ते गच्छन्ति मूलाङ्कुरा इव मूलानि च अङ्कुराश्च क्रमेणेव पृथिव्याः बीजादिव एकतः कुलात् पुरुषाः समुत्पन्नाः ॥

एकस्माद्बीजादिव एकस्मादेव कुलादुत्पन्नाः पुरुषाः केचित् अधः-केचिच्च ऊर्ध्वं गच्छन्ति, यथा मूलानि अधः अङ्कुराश्च ऊर्ध्वं पृथिव्याः

तरलत्तण-वयणिज्जं लच्छीएँ तुमाएँ णवर ओप्पुसिअं ।
तीएँवि पहुत्तणं वो पहु-दोस-विवज्जियं दिण्णं ॥ ७२३ ॥
विवरीयंव तइ इमं विवेय-सारम्मि दीसइ नरिन्द ।
भीओ दोसाण तुमं ते उण णट्ठा तुमाहिन्तो ॥ ७२४ ॥
सयलेसुंचेय दिसा-यडेसु दीसन्ति देव पडिलग्गा ।
धोयव्व दिसागय-सीयरेहिँ विमला गुणा तुज्झ ॥ ७२५ ॥
भुयण-गरुएहिँ ते तुह हीरन्ति गुणेहिँ तं पुणो ताण ।
हीरसि गुण-लेसेणवि सुअणो सुअणाण अहिओ सि ॥७२६॥

६ तथेत्यर्थः । एकस्मादेव बीजादुत्पन्नानि मूलानि अङ्कुराश्च क्रमेण पृथिव्या अधः ऊर्ध्वं च यथा गच्छन्ति तथैव एकत एव कुलादुत्पन्नाः केचित्पुरुषा अपकर्षं केचिच्च उत्कर्षं गच्छन्तीत्यर्थः ॥]

[ ॥ ७२३ ॥ तरलत्ववचनीयं चाञ्चल्यरूपं दूषणं लक्ष्म्याः लक्ष्मीसंबन्धि त्वया केवलम् उत्पुंसितम् अपगमितम् । तयापि
३ प्रभुत्वं यत्तव प्रभुदोषविवर्जितं दत्तम् ॥ ]

[ ॥ ७२४ ॥ विपरीतमिव त्वयि इदं विवेकसारे दृश्यते हे नरेन्द्र । भीतो दोषाणां दोषेभ्यस्त्वम् । ते दोषाः पुनर्नष्टास्त्वत्तः ॥]

[ ॥७२५ ॥ सकलेष्वेव दिक्तटेषु दृश्यन्ते हे देव प्रतिलग्नाः धौता इव दिग्गजसीकरैर्विमला गुणास्तव ॥ ]

[ ॥ ७२६ ॥ भुवनगुरुकैस्ते सुजनास्तव ह्रियन्ते गुणैः । त्वं पुनस्तेषां सुजनानां ह्रियसे गुणलेशेनापि । अतः सुजनः सुजनानाम् अधिकोऽसि ॥ ]

दिअ-भूमिसु दाण-जलुल्लियाई कालम्मि जाई उत्ताइं ।
ताई तुह णाह रोहन्ति संपयं विहव-वीयाइं ॥ ७२७ ॥
पणईसु गुरु-मणोरह-संपत्ति-समुत्तुणेसु संकन्तो ।
मण्णे तुह तेण पहुत्तणेवि न मओ पडिप्फुरइ ॥ ७२८ ॥
लहिऊण तुमाहिन्तो देन्तेहिँ इओ तओ नर-वईहिं ।
साहाहिँव दाण-दुमो णरिन्द तुह वड्ढिओ दूरं ॥ ७२९ ॥
तुह रिउ-गय-कुम्भ-क्खुत्त-णिसिय-तोमर-णिहित्त-विवरेहिं ।
विरएन्ति सुहं मुत्ता-हलेहिँ रमणीओ हार-लया ॥ ७३० ॥

अवि य ।

परिघोलइ सिढिलिय-जाल-सुत्त-संताण-संठिओ हत्थो ।
पेढाल-थण-हराअड्ढि-कक्खडे वीडय-ट्ठाणे ॥ ७३१ ॥

[॥ ७२७ द्विजभूमिषु सत्पात्ररूपेषु क्षेत्रेषु दानजलार्द्राणि काले यानि उप्तानि क्षिप्तानि तानि तव हे नाथ रोहन्ति सांप्रतं
३ विभववीजानि ॥ ]

[॥ ७२८ ॥ प्रणयिषु अर्थिषु स्निग्धजनेषु वा गुरुमनोरथसंपत्तिसंदृप्तेषु बृहद्वाञ्छापूरणगर्वितेषु संक्रान्तः मन्ये तव तेन प्रभुत्वेपि
३ न मदः प्रतिस्फुरति ॥

त्वया पूरितमनोरथा अर्थिजना गर्विता भवन्ति । एतावांस्तवौदार्यमहिमा । तदपि न त्वं गर्वितो भवसीत्यर्थः ॥]

[॥ ७२९ ॥ लब्ध्वा धनं त्वत्तो ददद्भिरितस्ततो येभ्यः केभ्योपि नरपतिभिः शाखाभिरिव दानद्रुमो हे नरेन्द्र तव वर्धितो
३ दूरम् अतिशयेन ॥]

[॥ ७३० ॥ तव रिपुगजकुम्भनिमग्ननिशिततोमरनिक्षिप्तविवरैः विरचयन्ति सुखं मुक्ताफलै रमण्यो हारलताः ॥]

[ ॥ ७३१ ॥ अथ पञ्चिरवान्तरकुलकम् । परिघूर्णते स्खलति

वेल्लहलङ्गुलि-कर-कमल-मुक्कलिज्जन्त-जालिया-वलया ।
कुच्छि-च्छेया छज्जन्ति सिढिल-दर-दिट्ठ-तग्गङ्गा ॥ ७३२ ॥
गाढ-कवाडअ-दुक्खुच्चुडन्त-णह-राइ-लञ्छणो लहइ ।
दर-मेहुज्झिय-हरिणङ्क-बिम्ब-सोहं थणुच्छङ्गो ॥ ७३३ ॥
कण्ठ-णिरोहुव्वण-वित्थरन्त-णीसास-तुलिय-नास-उडं ।
अग्घइ विसंठुलुव्वेल्ल-वल्लरी-चिहुर-पब्भारो ॥ ७३४ ॥

कठिनत्वात्पीडयितुं न शक्नोति शिथिलितं विमोचितं यज्जालकसूत्रं कञ्चुकबन्धनार्थं तस्य यत्संधानं संधिस्थानं तेन संस्थितः 'प्रासृसरो हस्तः पीठयुक्तस्तन'भरेणाकृष्टे अपसारिते अत एव कर्कशे पीडनं स्थाने ॥ संस्थितो हस्तः स्खलतीति समन्वयः ॥

॥ ७३२ ॥ वेल्लहलाभिरङ्गुलिभिर्युक्तं यत् करकमलं तेन प्रकर्ल्यमानम्' अपसार्यमाणं जालिकावलयं कञ्चुकसंधिबन्धस्तस्य' विच्छित्तिर्यत्र ते कुक्षिच्छेदाः कुक्षिसंधयः छज्जन्ति विराजन्ते । कीदृशाः । सिढिलदरादिट्ठभङ्गङ्गा ईषद्दृष्टवलित्रयभङ्गयुक्तशिथिलाङ्गाः ॥

॥ ७३३ ॥ गाढो निबिडो यः कपाटक इव पाटकः कञ्चुकस्तेन पीडितत्वाद्दुःखेनोच्चुडन्ता' अपसरत्क्षतका' नखकृतराजयो लाञ्छनं चिह्नं यस्य स लभते ईषन्मेघोज्झितहरिणाङ्कबिम्बशोभां स्तनोत्सङ्गः ॥ हरिणाङ्को मृगाङ्कः । नखराजीनां हरिणचित्राकारधारित्वेन हरिणोपमत्वम् ॥

॥ ७३४ ॥ कण्ठस्य निरोधेन गाढे कञ्चुके आकृष्यमाणे सति

---

[1] MH. कंचुक° [2] So MH. [3] MH. appears corrupt here, reading °भेणाकृशेपणारत्तोडाण्रहैशे The emendation is purely conjectural.
[4] MH. प्रकस्यमान°. [5] MH. तत्र for तस्य [6] MH. °णन्युकेता.
[7] MH. अपसराम्भेडका. The emendation is mine.

माणि-वलयाउल वाहग्ग मोयणुप्पण्ण-रुर-यलायासं ।
रेहइ लज्जा-पडिरुद्ध-थण हरं भुय-लया-जुयलं ॥ ७३५ ॥
इय गरुय-वइयरुत्तरिय-कञ्चुओ कुणइ पहु पओसम्मि ।
सेज्जारुहणं तुह लडह-वेस-सुहिओ पिया-सत्थो ॥ ७३६ ॥
इय वन्दि-णान्दिय-जयं गाहि-पुरारूढ-सेण्ण विण्णासो ।
जाओ सो लडह-विलास-मेत्त-वीसन्त वावारो ॥ ७३७ ॥

पीडनेनोल्वणा उद्धटा विस्तरन्तो ये नि श्वासास्तैस्तुलितौ [1]नासापुटौ
३ यत्र सः [ अर्घति ] [2]विसप्पुलोद्धेल्लवल्लरी [3]चिहुरप्राग्भार· ॥

मदनातुरायास्तादृशेनैव प्रेयसा शिरोमार्गेण कञ्चुके विमुच्यमाने अवस्थेदृशी [4]नायिकाया भवति ॥

॥ ७३५ ॥ मणिवलयाकुलबाह्वग्रमोचनोत्पन्नकरतलायास - शोभते लज्जाप्रतिरुद्धस्तनभर भुजलतायुगलम् ॥

॥ ७३६ ॥ इति उक्तप्रकारेण गुरुकव्यतिकरोत्तारितकञ्चुकः करोति हे प्रभो प्रदोषे शय्यारोहण तव लटभवेषसरलः प्रियासार्थः ॥

३ लटभश्चासौ सरलवेषश्च[5] कुलवधूसार्थो ह्ययम् । वेश्याजन एव च कपटपटु[6] वक्रवेषश्च युक्तः ॥ ६ ॥ आदित ॥ २३ ॥

॥ ७३७ ॥ इति बन्दि [ नन्दितजय गाधिपुरारूढसैन्यविन्यास जात स लटभो यो विलास ] स्तन्मात्रे विश्रान्तः पर्यवसितो
३ व्यापारो यस्य स तथा ॥ गाहिपुर कन्यकुब्जनगरम् ॥ २४ ॥ महाकुलकम् ॥

[1] MH नाशा°. [2] MH विसरधुलो° MH °वल्लरीकश्चि° [4] MH नायिका भवति
[5] MH °वेष for °वेषश्च [6] MH °पटु वक्रवेषा युक्त

अवि य । ७

संभाविय-चित्त-वियार-कारणामरिस-तम्बिर-च्छायं ।
तह-झाण-णिमिल्लिचेय होइ फुरियाहरं वयणं ॥ ७३८ ॥
उम्मिल्लइ थोय-त्थोय-रोस-रज्जन्त-दारुणावङ्गा ।
मासलिय-सवण-भुयइन्द-रयण-कन्द-प्पहा दिट्ठी ॥ ७३९ ॥
सामायइ सेय-लयाहिउत्त-विणियत्त-भूइ-लायण्णो ।
अविहाविय-कण्ठ-च्छावि-वोच्छेओ वच्छ-परिणाहो ॥ ७४० ॥

॥ ७३८ ॥ अधुना नरपालस्य सल्ललनाभिः सह क्रीडां 'वर्णयति॥ तत्र य एवं कुपितेन हरेण दग्धो मदनः स यासु सुन्दरीषु सतीषु पुनः सशरीर इव अप्रतिहतबाणश्च संपन्नः ताभिः सह निदाघोचितोपकरणयुक्तो नरपतिः[2] क्रीडामुपक्रामतीति वर्णयितुं पट्कुलकमाह ॥

संभावितचित्तविकारकारणामर्षताम्रच्छायं[3] तथाध्याननिमीलि[4]तमेव भवति कोपस्फुरिताधरं वदनं हरस्य कामदाहोपक्रमे ॥

॥ ७३९ ॥उन्मीलति [स्तोक] स्तोकरोषरज्य[5]मानदारुणापाङ्गा मांसलितश्रवणभुजगेन्द्ररत्नकन्दप्रभा दृष्टिः ॥

कर्णाभरणत्वापन्नवासुकिमणिकान्त्या लोहितया घनीकृतेत्यर्थः ॥

॥ ७४० ॥ श्यामायते स्वेदलवाभिर्कुंडितत्वेन विनिवृत्तभूतिलावण्यः आविभावितकण्ठच्छविव्युच्छेदो[6] वक्षःपरिणाहः ॥

भूतिर्भस्म । [7]व्युच्छेदो विभागः । स कोपदयामिकयैकीभूतो[7] न विवेकेन लक्ष्यते[8] ॥

---

[1] MH. वर्णयितुं. [2] MH. °पतिर्क्रीडा°. [3] MH. °च्छायं. [4] MH. °निमीलनांत
[5] MH. °रञ्जमान°. [6] MH. °वुच्छेदो for °व्युच्छेदो. [7] MH. °कमिकयैकीभूता.
[8] After लक्ष्यते MH. adds कन्दरत्नेव प्रभा यस्याः सा कन्दरत्नकंदलोहिता.

विहडइ हव्ववह-सिहा कडप्प पेल्लिय-पुडं णडालम्मि ।
कह-कहवि णिविड-भिउडी-विहङ्ग संपिण्डियं णयणं ॥७४१॥
इय तिणयण रोसाणल-विलुत्त देहोवि कुसुम कोयण्डो ।
जासु णिसण्णो अज्जवि अउण्ठ-वाणोच्चिय जयम्मि ॥ ७४२ ॥
आलुलिय वेणि लेहं भमियं तारं च भुय लया-जुयलं ।
णेवच्छ जाण विलास कम्पियच्छाइं य मुहाइं ॥ ७४३ ॥
ताण रमणीण णय बाहु विस लयामह कण्ठ परिणाहो ।
उव्वहइ सो विलासी णिआह णेवच्छ विच्छित्तिं ॥ ७४४ ॥

॥ ७४१ ॥ विघटते विक्रियते हव्यवाहशिखासमूहप्रेरितपुट[1] ललाटे कथकथमपि निबिडभ्रुकुटिविभङ्गसंपिण्डितं नयनम् ॥
३ कटप्र समूह ॥

॥ ७४२ ॥ इय तिणयणेत्याद्यवान्तरयुगलकं कुलकवाक्यसमाप्तौ[2] कृतम् ॥ इति त्रिनयनरोषानलविलुप्तदेहोपि[3] कुसुमकोदण्डो
३ यासां निष[4]ण्ण सन् अद्याप्यकुण्ठबाण एव जये

[ ॥ ७४३ ॥ आलुलितवेणिलेखं भ्रमितं तारं च भुजलतायुगलं नेपथ्यं यासां विलासकम्पिताक्षाणि च मुखानि ]

॥ ७४४ ॥ तासां रमणीनां निर्जबाहुबिसलतासंक्तकण्ठपरिणाहः उद्वहति स विलासी निदाघनेपथ्यविच्छित्तिम् ॥

३ बिसलता [5]मृणालिका । तद्वच्छीतलत्वाद्बाहुरेव बिसलतेत्युक्तं । अथ कामकृतदाहनिवारणाय सुन्दरीभिर्मृणालिका स्तनहृदयादौ

[1] MH °पुर [2] MH °समाप्तिकृ° [3] MH om अपि [4] MH निषिण्णः
[5] MH मृणालिकावद्‍भ्छीतल°

तेण स-पल्लव-भङ्गं चूडा-मणि-भावमतरुणं ताण ।
णिज्जइ कुसुमं आसुरहि-केसरं णव-कलम्बाण ॥ ७४५ ॥
आ-मेह-समय-सुहया संभिण्णोववण-केअय-सुयन्धा ।
सीयरिणो से हियर्यं हरन्ति रयणी-मुह-समीरा ॥ ७४६ ॥
कुमुयाववोह-महुरा विरलागय-मेह-खण्डिय-मियङ्का ।
अग्घन्ति णिसा असमत्त-गालिय-सलिलागमा तस्स ॥७४७॥
णीसासा खण-विरहे फुरान्ति रमणीण सुराहिणो तस्स ।
काड्ढिय-हियय-ट्ठिय-कुसुम-बाण-मयरन्द-लेसव्व ॥ ७४८ ॥

योज्यन्ते तत्कार्ये च सम्यग्बाहुरेव समर्थौ वृथैव तदुपादानमिति
६ सूचितम् ॥ ६ । कुलकम् ॥

॥ ७४५ ॥ तेन सपल्लवभङ्गं[1] चूडामणिभावम् [2]आरुहं तासां नीयते कुसुमम् आसुरभिकेसरं नवकदम्बानाम् ॥

३ चूडामणिभावमारुहन्तेणेति पाठे उद्यानमारोहता कुसुमं चूडामणिभावं प्राप्यते विलासिनीनामात्मनश्चेति योज्यम् ॥

॥ ७४६ ॥ आमेघसमयं वर्षारम्भं यावत् सुभगाः संभिन्नोपवनकेतकीसुगन्धाः शीकरिणः से अस्य हृदयं हरन्ति रजनीमुखसमीराः ॥

॥ ७४७ ॥ वर्षान्तावस्थामाह । कुमुदानाम् अवबोधेन विकासेन
मधुरा वलि[तास्थि]तैः पराङ्मुखगतैर्मेघैः खण्डितः अवच्छादितो
३ मृगाङ्को यासु ताः [3]अर्घन्ति शोभन्ते निशा राज्यः असमाप्तो गलितश्चातीतः सलिलागमो यासु तास्तस्य राज्ञः ॥

॥ ७४८ ॥ निःश्वासाः क्षणमात्रमपि विरहे प्रणयकोपादिकृते

[1] MH. °भंगचूडा°. [2] MH. °भावमारुहं for °भावम् आरुहं [3] MH. अर्घंते.

सो दीसइ उहय-दिसा-पहाविया णन्द-बाह-सलिलेहि ।
ताण परिरम्भ-पसरन्त-भुय-लएहिंव अच्छीहिं ॥ ७४९ ॥

अवि य । २३

फलिहच्छोयर-दीसन्त-पट्ठि-वेणी-सिहाओव्वँ सहान्ति ।
सहसा वलि-भङ्ग तरङ्गिणीहि जा रोम-लेहाहिं ॥ ७५० ॥
ससिमिव णवोइयं विहसिएण अहर-प्पहाणुविद्धेण ।
सासामोय-मिलन्तालि-लञ्छणं जा पयासेन्ति ॥ ७५१ ॥

वियोगे स्फुरन्ति रमणीनां सुरभयस्तस्य आकृष्टहृदयास्थितकुसुमबा-
३ णमकरन्दलेशा इव ॥

॥ ७४९ ॥ विप्रलब्धानां स दृश्यते [1]दर्शनायोभयादिक्प्रधा-
वितानन्दबाष्पसलिलैस्तासां परिरम्भार्थप्रसरद्भुजलतैरिव अक्षिभिः ॥

॥ ७५० ॥ अधुना नृपनिकटगततरुणीविलासवर्णनं विंशतिकु-
लकमाह । स्फटिकवदच्छ उदरे दृश्यमानाः पृष्ठदेशस्थिता अपि
३ प्रतिबिम्बद्वारेण वेणीशिखा यासां ता इव शोभन्ते सहसा वलिभ-
ङ्गतरङ्गिणीभिर्या रोमलेखाभिः

[ ॥ ७५१ ॥ शशिनमिव नवोदित विहसितेन अधरप्रभानुविद्धेन
श्वासामोदमिलदलिलाञ्छनं या. प्रकाशयन्ति

अधरप्रभायुक्त यत् हसित तत् नवोदितचन्द्रवदाभाति स्म आर-
क्तशुभ्रकान्तिमत्त्वात् । आमोदयुक्तश्वासैर्मिलिता येऽलयस्तेषां समू-
हश्च तच्चन्द्रलाञ्छनवदाभाति स्म । इति भाव॰॥]

[1] MH, दर्शनायोम॰.

जा कण्ण-किसल-कर-यल-मिलन्त-चल-तारयाहिँ दिट्ठीहिँ ।
कन्दुय-कीलंव स-सेस-बाल-भावा पयासेन्ति ॥ ७५२ ॥
जा ललिय-लया-लीलं वेलम्बान्ति सिय-दन्त-कुसुमाओ ।
सहसा महुयर-जालायमाण-णीलम्बरावरणा ॥ ७५३ ॥
जाओ सइ-दिण्ण-संणेज्झ-मयण-पूयायरा सरीरेसु ।
सरस-णह-मञ्जरि-मयं रत्तासोयंपिव लिहन्ति ॥ ७५४ ॥
जाओ पसङ्ग-परिग्गहिय-हारि-हरियंसुया पयासेन्ति ।
रम्भा-गब्भत्तणमणह-परियरं ऊरु-दण्डाण ॥ ७५५ ॥

॥ ७५२ ॥ याः कर्णकिसलय एव कर्णावतंसनवपल्लव एव करतलं तेन [1]मिलन्त्यः संबध्यमानाश्चलास्तारका यत्र ताभिर्दृष्टिभिः
३ कन्दुकक्रीडामिव [स]शेपबालभावाः प्रकाशयन्ति

ईषदपूर्णषोडशवर्षत्वात्सशेपबालभावत्वम् ॥

॥ ७५३ ॥ या ललितलतालीलां विडम्बयन्ति सितदन्तकुसुमत्वात् सहसा मधुकरजालायमाननीलाम्बरावरणत्वाच्च

३ विडम्बयन्त्युपहसन्तीत्यादयो दण्डिना बहव उपमाया द्योतका दर्शिताः ॥

॥ ७५४ ॥ याश्च सदादत्तसांनिध्यमदनपूजादरत्वाच्छरीरेषु[2] सरसनखपदमञ्जरीमयं रक्ताशोकमिव लिखन्ति

कामो हि रक्ताशोककुसुमैः पूज्यते । तानि रक्तानि भवन्ति [3]नवनखक्षतवत् इत्येवमुत्प्रेक्षितम् ॥

॥ ७५५ ॥ याश्च [4]अभिसारिकात्वादिप्रसङ्गात्परिगृहीतमनोहा-

[1] MH. मीलंत.. [2] MH. °पूजाताया°. [3] MH °नवाङ्क°. [4] MH. °नारिकाादि°.

लीलोणय-मुह-यन्दाण खण्डियाहर-णिहेण थण-वट्टे ।
हिययंव जाण पायड-वम्मह-बाण व्वणं फुरइ ॥ ७५६ ॥
थण-मज्झ-च्छवि-तारं कुप्पासन्तरमणङ्ग-णासम्मि ।
उद्धंव लोयणं तिणयणस्स वन्दीकयं जाहिं ॥ ७५७ ॥
णह-रेहा जाण थणेसु सहइ रोमञ्च खण्डिय-णिवेसा ।
खण विरह-भीरुणो सीवाणिव्व फुडियस्स हिययस्स ॥ ७५८ ॥

रिहरिताशुकत्वात् प्रकाशयन्ति रम्भागर्भत्वम् अनघपरिकर परिपूर्ण-
३ सामग्रीकम् ऊरुदण्डानाम्

कोमलत्वपरिवर्तुलत्वादिना सादृश्येपि हरिताशुकप्रावरणं विना कदलीदलतुल्यता किंचिन्न्यूनासीत् तत्सद्भावे तु अवैकल्यमित्यर्थ ॥

॥ ७५६ ॥ लीलावनतमुखचन्द्राणा प्रतिबिम्बितखण्डिताधरनिभेन मणिनिर्मले स्तनपट्टे हृदयमिव यासा प्रकटमन्मथबाणव्रणं स्फुरति

॥ ७५७ ॥ स्तनमध्ये या छवि कान्तिः सैव तारका[1] यत्र तत्
कुर्पासस्य कञ्चुकस्य अन्तरं मध्य स्तनसधिविच्छिन्नस्थान [2]त्रिलोच-
३ नाकारत्वात् अनङ्गनाशे वैरनिमित्ते सति ऊर्ध्वं[3] तृतीयमिव ललाटवर्ति
लोचन त्रिनयनस्य वन्दीकृत बद्धा स्थापित याभि कामशरीराभि

॥ ७५८ ॥ नखरेखा यासा स्तनेषु शोभते [4]रोमाञ्चखण्डितनिवेशा [5]क्षणविरहभीरुण सूचीव स्फुटितस्य हृदयस्य

३ रोमाञ्चखण्डितनिवेशत्वेन[6] सरलत्व श्यामत्व च सूचीसादृश्याय निदर्शितम् । स्फुटित [7]वस्त्र शस्त्रहत वा शरीरादि किल सूच्या सीव्यत

---

[1] MH सैव तारको यत्र त [2] MH तेलो° for त्रिलो° [3] MH ऊर्ध्वतृतीयमेव
[4] MH °खंडिय° [5] MH °भीरो [6] MH °निवेशत्वेन [7] MH वस्त्रं

चक्क-जुएणव वम्मह-रहस्स पिय-हुत्त-गामिणो जाओ ।
थण-मण्डलेन परिरम्भ-लम्भ-वियडेण सोहन्ति ॥ ७५९ ॥
पेच्छन्ति जाओ चलणे चम्पय-कलि ओव आरमुज्झन्ते ।
कण्णुप्पल-पहर-भया गहिएव्व पईव-मालाहिं ॥ ७६० ॥

इति इहापि क्षणविरहमाशङ्कमानस्य[1] हृदयस्य संधानार्थं सूचीव स्थापितेत्युत्प्रेक्षार्थः

[ ॥ ७५९ ॥ चक्रयुगेनेव मन्मथरथस्य प्रियाभिमुखगामिनो याः स्तनमण्डलेन परिरम्भलम्भविकटेन शोभन्ते

प्रियस्य यदालिङ्गनं तस्य योगेन महत्तरौ यौ स्तनौ तौ प्रियाभिमुखं नेतुर्मदनरथस्य चक्रे इव भातः स्मेत्यर्थः ॥ ]

॥ ७६० ॥ प्रेक्षन्ते याश्चरणान्[2] [3]चम्पककलिका[4]प्रकरमुखमानान् कर्णोत्पलप्रहारभयाद् गृहीतानिव प्रदीपमालाभिः

क्रीडानिवेशानामङ्गणे प्रक्षिप्तो यश्चम्पककलिकाप्रकरस्तन्मध्येन क्रीडायां[5] संचरमाणाः सुसदृशत्वाद्विमूढतां चरणचम्पककलिकाविषयां पार्श्वस्थजनस्य जनयन्ति के चम्पककलिकाप्रकरावयवाः के वा[6] कान्ताचरणा इति । किं च चरणप्रदेशवर्तिन्यश्चम्पककलिकाः दीपमालासदृश्यो [7]वर्णसंनिवेशसाम्यात् । तत्रोत्प्रेक्ष्यते । दीपमाला इव नायिकाचरणान् आश्रित्य भीताः सत्यो भयाभावम् अभ्यर्थयन्त[8]इति । ता हि नायिकाः सुरतार्थं प्रियतमैराकृष्यमाणा[9] अपह्रियमाणनितम्ब-

[1] MH. °विरह[illegible]. [2] MH. [illegible] for [illegible]. [3] So MH. distinctly. [4] MH. [illegible]. [5] MH. वा. [6] MH [illegible]. [7] MH. [illegible] for [illegible]. [8] So MH.

दंसण-णिवीयमीसा-वस-कूणिय-णयणं-पम्ह-भावेण ।
जा पञ्जरियमिव पियं धरेन्ति अवसरण-सङ्काए ॥ ७६१ ॥
अहर-प्पहा-दरारुण-दसण-मऊहेहिँ थण-विसारीहिं ।
वम्मह-वण-बन्धेहिँव जाओ सरुहिरेहिँ सोहन्ति ॥ ७६२ ॥
दीह-पिहुलत्तणेणं हत्थ-दढावेढणेक्क-जोग्गाओ ।
जाण कय-ग्गह-तण्हं देन्ति वला वेणि-मालाओ ॥ ७६३ ॥
अवरद्ध-रमण-पडिमंपि जा ण्हवन्तिव्व गण्ड-वासम्मि ।
अण्ण-ललणा-पसङ्गावकलुसियं वाह-सलिलेण ॥ ७६४ ॥

बिम्बवस्त्रा लज्जया कर्णोत्पलप्रहारेण दीपपालीर्नाशयन्ति । तन्मा नो नीनशन्निति दीपमालाभिः सुन्दरीचरणा आश्रिता[1] इत्युत्प्रेक्षितम् ॥

॥ ७६१ ॥ दर्शननिपीतम् ईर्ष्यारसंसंकोचितनयनपक्ष्मत्वेन याः पञ्जरितं [2]पक्ष्मपुटपञ्जरबद्धमिव प्रियं धारयन्त्यपसरणशङ्कया[3]

[ ॥ ७६२ ॥ अधरप्रभया ईषदरुणदशनमयूखैः स्तनविसारिभिः मन्मथव्रणबन्धैरिव याः सरुधिरैः शोभन्ते

२ अधरप्रभया मनागारक्ता ये स्तनप्रसारिणः स्तनोपरिपतिताः शुभ्रा दन्तमयूखास्ते मन्मथकृतानाम् आरक्तव्रणानामुपरि बद्धाः शुभ्रा वस्त्रखण्डा इवासन्निति भावः ॥ ]

॥ ७६३ ॥ दीर्घत्वेन बहलत्वेन च हस्तदृढावेष्टनैकयोग्या यासां कचग्रहतृष्णां ददाति बलाद्वेणिमालाः प्रियेभ्यः

॥७६४॥ कृतापराधरमणस्य प्रतिबिम्बम् [अपि] उत्पन्ननैर्मल्यतया गोपयन्तीव गण्डपार्श्वे अन्यललनाप्रसङ्गावकुलषितं बाष्पसलिलेन

[1] MH. °वरणानुश्रितामित्युत्प्रेक्षितं. [2] MH °पुट पंजर° [3] MH. °सरणाश°.

सेइ संघट्ट-समुज्जल-कोडिं कणय-रसणं विमोएन्ति ।
पिय-मुह-णिहित्त-विअसन्त-लोयणा जाओ समयम्मि ॥७६५॥
जा रोसुक्कम्पिय-कण्ण-कुसुम-रय-पुञ्ज-पूरिय-थणीओ ।
अवचुण्णेन्तिव दर-रूढ-संठिए वम्मह-प्पहरे ॥७६६॥
कम्पाओ वहन्ति थण-त्थ-हत्थ-रणिरङ्गुलीय-हाराओ ।
अङ्गं थामेचिय मुहल-मेहला-णेउरं जाओ ॥७६७॥

३ अपिशब्दादात्मीयगण्डपार्श्वे च प्रक्षालयन्ति । यत्[1] तादृशीं कान्तिसंपदं पलाशभारायमाणां मुधोद्वहन्ति तत् [तां] कान्तिं कोपात् प्रक्षाल्य अपसारयन्तीत्यर्थः ॥

॥ ७६५ ॥ सदा प्रत्यहं संघट्टेन रचनेन समुज्ज्वलकोटिं कनकरसनां विमोचयन्ति प्रियमुखनिक्षिप्तविहसल्लोचना याश्च समये
३ नियतरहस्यावसर एव

अथवा समये सतीति ज्ञेयम् । प्रियमुखनिक्षिप्तविहसल्लोचनत्वमेव[2] च समयः । प्रतिदिनं दृष्टव्यासिक्तत्वात् । अतोवलोकनविशेषेण
६ प्रियतमं[3] प्रयुज्य विमोचयन्तीत्यर्थः ॥

॥ ७६६ ॥ या रोषोत्कम्पितकर्णकुसुमरजः पुञ्जपूरितस्तन्यः अवचूर्णयन्तीव रोपणमिव ददति ईषद्रूढसंस्थितान् मन्मथप्रहारान्

॥ ७६७ ॥ मदनजनितकम्पवशाद्वहन्ति स्तनस्थहस्तरणनशीलाङ्गुलीयकहाराः अङ्गं स्थान एव एकस्थानस्थिता एव मुखरमेखला-
३ नूपुरं[4] याः

[1] MH. यत्तादृशीकान्तिसंपदं पलाशभारायमाणामुधोद्वहंति तत्कांतिंकोपात्प्रेक्षाल्यापसारयंतीत्यर्थः. [2] MH. °वि°. [3] MH. प्रियतमान्प्र°. [4] MH. has °नूपुरं च याः.

चित्त-मणि-कण्ण-ऊराहिविद्ध-विविहोवराय-पम्हेहिं ।
वण्णय-तूलिल्लेहिँव लिहन्ति जा रमणमच्छीहिं ॥७६८॥
एक्क-दिसा-पडिलक्खिय-विमल-दसा चलण-णह-मऊहेहिं ।
जा लायण्ण-पडीओॅव सहन्ति परिमास-मउईओ ॥७६९॥
पिय-हुत्तं जाण विलास-लोल-लीला-फुरन्त-पम्हाइं ।
उड्डेन्तिव तरलिय-पक्ख-संपुडग्गाइं अच्छीइं ॥७७०॥
आसण्ण-पिययमाहर-घडन्त-फुड-दसण-किरण-भावेण ।
जा मुह-रसासवंपिव पियन्ति लीला-मुणालेहिं ॥७७१॥

॥ ७६८ ॥ विचित्रमणिनिर्मितकर्णपूराभरणप्रसृतविविधोपराग-युक्तपक्ष्मत्वाद् वर्णकोपरक्ततूलिकायुक्तैरिव लिखन्ति या रमणम् आक्षिभिः

अक्षीणि हस्तस्थानीयानि सुन्दरीणाम् । पक्ष्माणि कूर्चिकास्थानीयानि । कर्णाभरणस्थनानामणिप्रभारागद्रव्याणि[1] सिन्दूरादीनि ॥

॥ ७६९ ॥ एकस्यां दिशि प्रतिलक्षिता दृष्टा विमला दशा यासां ताः। कैर्विमलदशाः। चरणनखमयूखैः। चरणनखमयूखा दशा इवेत्यर्थः। या [2]लावण्यमयाः पटय[3] इव शोभन्ते परिमर्शमृद्व्यः स्पर्शकोमलाः

॥ ७७० ॥ प्रियतमाभिमुखं यासा[4] विलासलीलास्फुरत्पक्ष्माणि उड्डीयन्त इव प्रिय[5] पातुं तरलितपक्ष्मसपुटाग्राण्यक्षीणि

॥ ७७१ ॥ आसन्नप्रियतमाधरघटमानस्फुटदशनकिरणत्वेन या मुखरसासवमिव पिबन्ति [ लीलामृणालेनै ] लीलामृणालेनेव

[1] MH. °स्थानानामणि°. [2] So MH. [3] MH. पच. [4] MH. या for यासा. [5] MH. प्रियपातु for प्रियं पातुं.

वालासु तासु नव-दिट्ठि-राय-हीरन्त-हियय-तरलाइं ।
अणुवज्झनाइँव से गुणेहिँ सोहन्ति ललियाइं ॥ ७७२ ॥
परिरम्भण-चक्कलियं सामा-यण-मण्डलं उरे तस्स ।
पावइ लीला-अल्लय-णिहित्त-णलिणी-दल-च्छायं ॥ ७७३ ॥
सेस-गुण-णिरहिलासा रूवंचिय से पियन्ति तरुणीओ ।
को वा अण्णेसइ दमणयस्स दल-सुरहिणो कुसुमं ॥ ७७४ ॥
वाम-कर-पेल्लिओणामिय-मेहला-णिविडियंसुए तस्स ।
वीसमइ विलासवईण जहण-विम्वे खणं दिट्ठी ॥ ७७५ ॥

३ इवशब्दो भिन्नक्रमः । स्फुरद्दशनप्रभादण्डः [1]शौक्ल्याद्विसदण्डत्वेनोत्प्रेक्षितः ॥

॥ ७७२ ॥ वालासु तासु विषयभूतासु नवदृष्टिरागह्रियमाणहृदयतरलानि अनुवध्यमानानीव से अस्य प्रकृतनृपस्य [ गुणैः ]
३ शोभन्ते ललितानि विलासरूपाणि चरितानि ॥ २० ॥ कुलकम् ॥

॥ ७७३ ॥ परिरम्भणेन चक्रीकृतं श्यामं स्तनमण्डलम् उरसि तस्य प्राप्नोति लीलाकल्पकनिक्षिप्तनलिनीदलच्छायाम्[2] ॥

३ कल्पकं हृद्यम् । नलिनीपत्रं श्यामलं चक्राकारं च भवति । तादृशमेव वक्षःस्थलपीडितं स्तनमण्डलम् ॥

॥ ७७४ ॥ शेषेषु गुणेषु निरभिलाषा रूपमेव सातिशयत्वात्तस्य पिवन्ति तां ललनाः । युक्तं चैतत् । यतः को वा मूढो योऽन्वेषते
३ दमनकापरनाम्नो[3] मरुवकस्य सुरभिदलस्य कुसुमम् ॥ दलानि पत्राणि॥

॥ ७७५ ॥ वामकरप्रेरितावनमितमेखलानिर्विडितांशुके तस्य विश्राम्यति विलासवतीनां जघनविम्बे क्षणं दृष्टिः ॥

[1]MH °त्त्वदद°. [2]MH. °च्छयम्. [3]MH. मदन°.

हसियं च भामियच्छं मुहं च नव-वउल-पण्डुर-कवोलं ।
जहणमणिब्भच्छिय-मेहलं च जीयं विलासाण ॥ ७७६ ॥

अवि य ।

अणुकुण्डलमा विवइण्ण सरस-कवरी-विलङ्घियंसम्मि ।
सीसम्मि कोसुमो फुरइ चारु-चूडा-मणि-णिवेसो ॥ ७७७ ॥

उप्पुसियाहर-पेरन्त-पिञ्जर-ट्ठविय-कुङ्कुमं हरइ ।
णह-विलिहिय-कसणुम्मिल्लमाण-भुमयं मुहम्बुरुहं ॥ ७७८ ॥

परिगण्ड-त्थलमासवण-लम्बि मय-णाहि-पङ्क-लेहम्मि ।
अग्घइ अवङ्ग-मग्गम्मि सरसमासोयमुत्तंसं ॥ ७७९ ॥

॥ ७७६ ॥ हसितं [च] भ्रमिताक्षं सकटाक्षविक्षेपं मुखं च नववकुलपाण्डुरकपोलं जघनम् अनिर्भर्त्सितमेखलं च जीवितं विलासानाम् ॥

॥७७७॥ अथ स्नाततरुणीमण्डनवर्णनं पञ्चककुलकेन । अनुकुण्डलं कुण्डलसमीं । सर्वतो विप्रकीर्णसरसकवरीविलङ्घितांसे[1] शिरसि कौसुमः स्फुरति चारुचूडामणिसंनिवेशः ॥

॥ ७७८ ॥ अन्यत्र उत्पुसितम् अधरपर्यन्ते च पिञ्जरत्वमात्रेण स्थापितं[2] कुङ्कुमं यत्र तत् हरति चेतः नखविलिखिताः कृष्णत्वेन उन्मीलन्त्यो भ्रूलता यत्र तत् मुखमेव अम्बुरुहम् ॥

॥ ७७९ ॥ परिगण्डस्थलं[3] गण्डस्थलसमीपे आश्रवणविलम्बि-मृगनाभिपङ्कलेखे अर्घति अपाङ्गमार्गे सरसम् आशोकम् अशोकसंबन्धि उत्तंसं कर्णोत्पलप्रतिरूपकम् ॥

1 MH. °लंघिताग. [2] MH. °स्थापितकु°. [3] MH. परिगण्डस्थलं.

अन्तो-मणि-दाम-च्छवि-विच्छुरियच्छंसुयं सुहावेइ ।
थण-वट्टमुवरि-विक्खित्त-सबल-कुसुम-च्छडाहरणं ॥ ७८० ॥
इय दर-चक्खिय-मइराणुविद्ध-तम्बोल-परिमलो हरइ ।
अणुमज्जणमाहरणावलम्बणो से पिया-सत्थो ॥ ७८१ ॥

किं च जायं ६ ।

सोम्माहेसु निसम्मइ दिट्ठी राउज्जलेसु रमणीण ।
सारस-वावी-परिपण्डुरेसु से दसण-वासेसु ॥ ७८२ ॥
उब्भिज्जइ जड-भावावरोह-दढ-मयण-संणिवेसम्मि ।
अहरम्मि सरस-बउलाहिवाडला राय-विच्छित्ती ॥ ७८३ ॥

॥ ७८० ॥ अन्तःस्थितमणिमयदामच्छविविच्छुरिताच्छांशुकं सुखयाति स्तनपृष्ठम् उपरिविक्षिप्तशबलकुसुमच्छटाभरणम् ॥

॥७८१॥ इति ईषदास्वादितमदिरानुविद्धताम्बूलपरिमलो हरति अनुमज्जनं मज्जनोत्तरकालम् [ आभरणावलम्बनः ] से अस्य प्रिया-सार्थः ॥ कुलकम् ॥

[॥ ७८२ ॥ सौम्या आभा येषां तेषु सौम्याभेषु निशाम्यति रमते दृष्टिः रागोज्ज्वलेषु रमणीनां सारसवापीपरिपाण्डुरेषु अस्य दशन-वासःसु ॥

रागेण अलक्तादिकरङ्गेण उज्ज्वलास्तथा च अन्तःस्थितैर्दन्तैर्दन्त तेजोभिः सारसपक्षियुक्तवापीवच्छुभ्रवर्णयुक्ता ये रमणीनाम् ओष्ठास्तेषु तस्य दृष्टी रमत इत्यर्थः ॥]

॥ ७८३ ॥ अथ गाथापञ्चकोपनिबद्धकुलकेन शिशिरप्रभातो-त्थिततरुणीचेष्टामाह ।

पढमं छण-मग्गिय-वइयरेसु संचरइ मण्डणुच्छाहो ।
गहिय-हिमावण्डुर-मरुअएसु पारत्ति-दामेसु ॥ ७८४ ॥
परिकविस-बिन्दु-मालावसेस-मय-णाहि-दन्तुरे फुरइ ।
वयणम्मि मयङ्कारम्भ-पेलवा कुङ्कुम-च्छाया ॥ ७८५ ॥
संगलइ मरुयअ-च्छेय-सवल-विणिउत्त-दमणय-दलासु ।
लायण्णं मलिय-ट्ठिय-पिसङ्ग-कुन्दासु कवरीसु ॥ ७८६ ॥

उद्भिद्यते जडभावः [1]शैत्ययोगस्तस्यावरोहः प्ररूढत्वं [2]तस्यात्यन्तत्वेन दृढो मदनकस्य अलक्तकादिरागविशेषस्य संनिवेशो यस्मिन् तत्राधरे सरसबकुलकुसुमवदभिपाटला रागविच्छित्तिः ॥

॥ ७८४ ॥ प्रथमं क्षणम् उत्सवः प्रथममेवोत्सवार्थं ये मार्गिताः कुसुमविशेषास्तेषां व्यतिकरेषु विलम्बेषु सत्सु संचरत्यन्यत्र[2]तत्प्रतिनिधिनयेन मण्डनोत्साहः । क्वान्यत्र । [3]गृहीतहिमापाण्डुरमरुवकेषु[4] पत्रिकादामसु ॥

॥७८५॥ परिकपिशो बिन्दुमालावशेषो यो [5]मदनकः कुङ्कुमादिरागस्तेन दन्तुरे[6] विषमे स्फुरति वदने मृगाङ्कस्य य [7]आरम्भः प्रतिपच्चेका कला तद्वत्पेलवा कुङ्कुमच्छाया ॥ उपभुक्तशेषेत्यर्थः ॥

॥ ७८६ ॥ संगलति मरुवकच्छेदशबलविन्युक्तदमनकदलासु[9] लावण्यं मर्दितास्थितपिशङ्गकुन्दासु[10] कबरीषु ॥

---

1 MH. °योगो रोहः प्ररूढत्वं तस्यानंतत्वेन, which appears to be corrupt. The emendation is conjectural. [2] MH. सचरत्य°. [3] So MH. Surely Dc's marginal note ग्रथित is the correct rendering? MH. °हिमपाडुर°. [5] MH. °मदनककुकुमादि°. [6] MH दतुरविषमे. [7] MH. adds वास्यानंतस्य after आरम्भः. Hopelessly corrupt! [8] MH. तद्वतोल्वा. [9] MH. °विनयुक्त°, though विन्युक्त ग्रथितम् lower down. [10] MH. मलिन°.

इय रयणी-भङ्गुग्गय-पियङ्गु-पडिवण्ण-सेहरो हरइ ।
सिसिरम्मि मलिय-मणहर-पसाहणो से पिया-सत्थो ॥७८७॥

अवि य । ४

फल-णिग्गम-पडिपेल्लिय-परिसिढिलालग्ग-मउल-चुण्णाइं ।
चूयाण झणक्कारेइ मारुओ मञ्जरि-मुहाइं ॥ ७८८ ॥

विन्युसं ग्रथितम् । दमनकं सुगन्धपत्रिकाविशेषः । कवर्यो वेण्यः ॥

॥७८७॥ इति रजनीभङ्गोद्गतप्रतिपन्नप्रियंगुशेखरोऽपि हरति चित्तं स्वभावसुन्दरत्वात् शिशिरे[1] मर्दितमनोहरप्रसाधनः अस्य प्रियासार्थः ॥

प्रियं गायति प्रियंगुः शेखर इव[2] । तिष्ठद्रुप्रभृतिस्त्वास्साधुः ॥५॥
कुलकम् ॥

॥ ७८८ ॥ अथ चतसृभिर्वसन्तसंपदमाह । फलनिर्गमपरि[3]-प्रेरितपरिशिथिलेपलग्नमृदुकचूर्णानि चूतानां झणत्कारयति मारुतो मञ्जरीमुखानि ॥

मउलचुण्णाइं इति[4] पाठे मुकुलचूर्णानीत्यर्थः । मुकुलं कुसुमम् । चूर्णं कुसुमरजः । 'झणदित्यव्यक्तशब्दानुकरणम् । तच्च रसार्द्रफल पल्लवासु[5] कोमलानिलवेल्लितासु[6] [मञ्जरीषु] न युज्यते । झणत्कारादेः कठिनद्रव्यकृतस्य नूपुररणितादिषु दर्शनम् । तस्मात् 'सणणारेइ' इति पाठो लक्ष्यते[7] सकारस्य च रेखाभंगमात्रेण[8] लेखकदोषे झकारीभूतत्वा[9]-

[1] MH. सिसिरम्मि° for शिशिरे मर्दित°  [2] MH. व्व for इव.
[3] MH. °कुसुमे वा°  [4] MH. इत्यपि  [5] MH. रसार्द्र°.
[6] MH. °वेल्लि°  [7] MH. लक्ष्यते for लक्ष्यते.  [8] MH. °भंगे.
[9] MH. °त्वं.  [10] MH. झणत्कारे°.

चिसालक्खिय मउलुग्गमाण सायं णिवेसिय-जलाण ।
गन्धमणामोयं सत्तलाण कालो विरल्लेइ ॥ ७८९ ॥
आवाइ माहवीणं विच्छाय-परिट्ठिएक्क कुसुमासु ।
णिम्मल्ल सोरहं मञ्जरीसु फल-गण्ठि-जडिलासु ॥ ७९० ॥
इय से दिणेसु महु-सिरि-परिणाम-सुहेसु उववण-णिवेसा ।
णन्दन्ति पणइणी परियणस्स णयरोवरोहेसु ॥ ७९१ ॥

९ दिति सुगृहीतनामभिरस्मत्पितृभट्टश्रीमदुपेन्द्रपादैरवार्णि । तैरेव च बाल्य एव इयमपरा व्याख्या कृता[1]।

नून पुत्रक मारुतोपि मधुरो रोलम्बमाला मधौ
[2]शश्वच्चूतलतावितानपवनसस्ता[3] झणत्कारयेत् ।
प्रेङ्खलास्यलताफलर्द्धिकुसुमप्राप्त्यर्थगर्वोद्धता
धावद्रावयुतासु तासु च[4] लताभेदोपि भक्तेर्भवेत् ॥

॥ ७८९ ॥ [5]चित्तालक्षितमुकुलोद्गमाना साय निवेशितसेकजलाना गन्धम् अनामोद [6]सप्तलसञ्ज्ञकाना पुष्पविशेषाणा काल प्रसार-
३ यति ॥

मुकुलानि कलिका । ता सूक्ष्मत्वाच्चित्तावधाने सति ईषल्लक्ष्यन्ते[7] ॥
॥ ७९० ॥ आवायति ईषच्छुष्यति माधवीना विच्छायपरिस्थितैककुसुमासु निर्मलसौरभ्य[8] मञ्जरीषु फलग्रन्थिजटिलासु ॥.

॥७९१॥ इति उक्तप्रकारेण से अस्य नृपस्य दिनेषु मधुश्रीपरि-

[1] MH श्रीपडुपेंद्र° [2] MH शश्वद्भूत° [3] MH °पवनसता
[4] MH व [5] MH त्वत्ता° [6] MH सप्तल° [7] MH इषर्यल्लक्ष्यंत
[8] MH निर्मलसौरभं

किं च ।

पेरन्त-हरिय-कोमल-खज्जूर-दलुज्जलं कवोलाण ।
णयणन्त-गालिय-बाहञ्जणाण णिव्वडइ लायण्णं ॥ ७९२ ॥
दर-मउलण-मज्झोणय-तणु-रेहायन्त-धवल-भावाइं ।
एन्ति णव-ससि-अला-हं अन्तो-ताराइँ अच्छीइं ॥ ७९३ ॥
थोयमिव खाम-गण्डत्तणेण परिलक्खिओण्णय-णिवेसो ।
परिवायइ कक्केयण-पराय-कणउज्जलो अहरो ॥ ७९४ ॥

णामसुखेषु उपवननिवेशाः नगरसमीपवनानां संनिवेशास्तेषु वा प्रवेशाः नन्दान्ति प्रणयिनीरूपस्य परिजनस्य प्रणयिनीसमेतस्य[1] वा[2] अपरिजनस्य संबन्धि हृदयं नगरोपान्तस्थानेषु ॥ ४ । चक्रकम् ॥

॥ ७९२ ॥ अथ पञ्चकुलकेन बालालावण्यं विलपति[3] । पर्यन्तहरितकोमलखर्जूरदलवदुज्ज्वलं बालाकपोलानां नयनान्तगलितबाष्पाञ्जनानां निर्वर्तते[4] लावण्यम् ॥ ]

॥ ७९३ ॥ दर ईषन्मुकुलितमौग्ध्येन [5]मौग्ध्याल्लज्जायोगादीषदुन्मीलितत्वाद्धेतोस्तनुरेखायमाणधवलभावानि यन्ति प्राप्नुवन्ति नवशशिकलाभाम्[6] अन्तस्ताराणि निमीलनवशादुपरितनतटमध्यप्रविष्टताराणि अक्षीणि ॥ नवशशिलेखायां हि शशो न भासते । शशप्रख्यास्तारा अपि ईषन्निमीलितनयनेषु न भासन्ते ॥

॥ ७९४ ॥ स्तोकमिव क्षामगण्डत्वेन परिलक्षितोन्नतनिवेशः परिवायति शुष्यति [7]कर्केतनापरसंज्ञबिम्बफलकषायवदुज्ज्वलोधरः ॥ कर्केयण[8] इति मणिविशेषोप्युपलक्ष्यते[9] । अनिर्जितरतिपरिश्रमत्वेन

[1] MH. °मानिनस्य. [2] MH. वा° for वा अ°. [3] ० MH. [4] MH. निवर्त°.
[5] MH. मौग्ध्याल्लज्ज°. [6] MH. °कलाभा अन्त°. [7] MH. कर्केतनसर°.
[8] MH. कर्केतन. [9] MH. मणिविशेषोप्युपलक्ष्यते.

दोब्बल्ल-पण्डुराणं उम्हारुणिय-णव-केसर-गुणाण ।
विरलत्तणंव थोवं उवेइ मुद्धाण थणयाण ॥ ७९५ ॥
इय तस्स पढम मयणाणुबन्ध-पडिबद्ध-मुद्ध-भावासु ।
दिट्ठी णिहुय-विलासालसासु वीसमइ बालासु ॥ ७९६ ॥
अह तस्स थिर-भुय-क्खम्भ-णिमिय-णीसेस-भुयण-भारस्स ।
आसि कइ-राय-इन्धो वप्पइ-राओत्ति पणइ-लवो ॥ ७९७ ॥

बालानां म्लानाधरत्वं दौर्बल्ये च उन्नतावयवत्वम् अनुभवसिद्धम् । स्तोकमपि परिवायतीति[1] संबन्धः । अपिशब्देन इदमाह । यद्यपि कुल-
६ महेला अप्रगल्भास्तथाप्यासामप्रागल्भ्यमेव सुरतेषु विराजतेतराम्[2] ॥

॥ ७९५ ॥ दौर्बल्यपाण्डुराणाम् ऊष्मारुणितनवकेसरगुणानां विरलत्वमिव[3] दौर्बल्यवशात्स्तोकमुदेति [मुग्धानां] स्तनानाम् ॥

॥ ७९६ ॥ इति तस्य प्रथममदनानुबन्धप्रतिबद्धमुग्धभावासु दृष्टि-निभृतविलासालसासु विश्राम्यति बालासु ॥ निभृतम् उपगूढम् ।
३ कुलकम् ॥ ५ ॥

॥ ७९७ ॥ अथेति अधिपत्यधिकारप्रख्यः प्रस्तुतकाव्यकर्तृगत-चरितप्रस्तावनार्थो मङ्गलार्थश्च मध्ये । अथ तस्य स्थिरभुजस्तम्भानि-
३ मितनिःशेषभुवनभारस्य आसीत् कविराजाचिह्नः [कविराजसंज्ञो] वाक्पतिराज इति प्रणयिलवः भृत्यलेशः ॥ प्रणयिषु वा [4]लयोन्तर्भावो यस्य स प्रणयिलयः । निमितं निक्षिप्तम् । डुमिञ् प्रक्षेपण इति पाठात् ॥

[1] MH. °परिवायतीति. [2] MH. °तनरा for °तराम्. MH. add after this as follows -कानानुपात्स्यमानानन्तानर्थरम्यमानमवक्रारौद्याकारकौपांम्यानिरूपमरमणीयरमणीविषयान-वरतरगकेनापारहार्यं दौर्बरे which, as a whole, appears corrupt, and difficult to restore. [3] MH. विरलमिव. [4] MH. आसीत्कविराजसंज्ञाचिह्नो वाक्पति°. [5] MH. स्योन्तर्भावो. Do J K P all read पणइल्लवो, and not पणयिल्लवो.

·अप्पा एत्तिअ-मेत्तेण णवर विरसोवि जस्स पडिहाइ ।
सिरि-कमलाउह-चलणेहिँ कहवि जं गहिय-बहुमाणो ॥७९८॥
भवभूइ-जलहि-णिग्गय-कव्वामय-रस-कणा इव फुरन्ति ।
जस्स विसेसा अज्जवि वियडेसु कहा-णिवेसेसु ॥ ७९९ ॥
भासम्मि जलणमित्ते कन्तीदेवे अ जस्स रहुआरे ।
सोवन्धवे अ वन्धम्मि हारियन्दे अ आणन्दो ॥ ८०० ॥

[॥ ७९८ ॥ आत्मा एतन्मात्रेण केवलं विरसोपि यस्य प्रतिभाति श्रीकमलायुधचरणैः कथमपि यत् गृहीतबहुमानः ॥

यस्य वाक्पतेरात्मा । यो वाक्पतिरिति यावत् । विहीनकाव्यादि-रसोपि सन् केवलमेतेन वक्ष्यमाणेन हेतुना प्रतिभाति प्रकर्षेण विजयते यत् कमलायुधेन नाम कविना गृहीतो बहुमानः सेवा यस्मात् तादृशः सोस्ति । इति भावः ॥]

॥ ७९९ ॥ भवभूतिजलधिनिर्गतकाव्यामृतरसकणा इव स्फुरन्ति यस्य विशेषा अद्यापि विकटेषु कथानिवेशेषु[1] ॥ निबन्धेष्विति क्वचित्पाठः ।

[॥ ८०० ॥ भासे ज्वलनमित्रे कुन्तीदेवे च यस्य रघुकारे सौबन्धवे च बन्धे हारिचन्द्रे च आनन्दः ॥

भासः ज्वलनमित्रः कुन्तीदेवः (?) इति त्रयः [illegible] तस्या दासः । सौबन्धवो बन्धः सुबन्धुकृतनिर्माण [illegible]मपि विनिगुधिनाश्चि-चन्द्रः हरिचन्द्रेण कृतः प्रबन्धः [illegible]रः प्रलयकालमार्गा विपश्चितः ॥

[1] [illegible]. [2] आ. [illegible].

दीसन्ति जय-विणासुल्लसन्त-घण-धूमकेउ-दण्डव्व ।
जल-मज्जन्त-दिसा-गय-खणुद्ध-धरिया कर-क्खम्भा ॥८०६॥
उल्लसिय-वीइ-वलयन्तराल-परियत्तमाण-रवि-बिम्बा ।
होन्ति सवाडव-जलणव्व गयण-मग्गेवि मयर-हरा ॥ ८०७ ॥
वियलन्त-विज्जु-वलया पलयम्बु-वह-णिवहा णिविज्जन्ति ।
तद्दियस-पीय-सलिला साणुसएणंव सलिलेण ॥ ८०८ ॥
जल-भवण-समालम्बिय-सयणस्स मुरारिणो समुद्देण ।
दिज्जइ महा-पईवोव्व वीइ-संवेल्लिओ सूरो ॥ ८०९ ॥
जाआ वण्णासाया अण्णोच्चिय केवि संवलन्ताण ।
छीर-सुराउव्व-वियार-विसमिया सयल-जलहीण ॥ ८१० ॥

॥ ८०६ ॥ दृश्यन्ते जगद्विनाशसूचनाय [1]स्फुरद्घनधूमकेतुदण्डा इव जलमज्जद्दिग्गजक्षणोर्ध्वधृताः करस्तम्भाः ॥

॥ ८०७ ॥ उल्लसितवीचिवलयान्तरालपरिवर्तमानरविबिम्बा[2] भवन्ति सवाडवज्वलना इव गगनमार्गेपि मकरधराः समुद्राः ॥

[ ॥ ८०८ ॥ विगलद्विद्युद्वलया. प्रलयाम्बुवहनिवहा निपीयन्ते प्रतिदिवसपीतसलिला. सानुशयेनेव सद्वेषेणेव सलिलेन ॥ प्रतिदिनं मेघैर्यत् पीतं जलं तत् सानुशयमिव आत्मपानजन्यक्रोधयुक्तमिव भूत्वा तान्मेघान् नितरामपिबदित्यर्थः । मेघा अपि सर्वे प्रलयाम्बुना निगीर्णा इति भावः ॥ ]

॥ ८०९ ॥ जलभवनसमालम्बितशयनीयस्य मुरारेः समुद्रेण दीप्यते[3] महाप्रदीप इव [2]वीचिसंवेल्लितः सूरः ॥

॥ ८१० ॥ जाता वर्णास्वादा अन्य एव केपि सवलता मिश्री-भवता क्षीरसुराऽपूर्वविकारविषमिताः सकलजलधीनाम् ॥

[1] MH. स्फुरोत घन°. [2] MH. वीची°. [3] MH दीपते.

मज्जइ सिहरारूढारुहन्त-पुञ्जइय-मुहल-सुर-लोओ ।
कुहर-भरण-कमोसीयमाण-जल-कलयलो मेरू ॥ ८११ ॥
चलणन्त-णिवडियं संभमेण पलयम्बु-णिब्भरे भुयणे ।
आरुहइ रयय-णावंव तिणयणो मउलि-ससि-लेहं ॥ ८१२ ॥
णाउल-भावो जोआणुबन्ध-संजमिय-सास-पसरस्स ।
पव्वालियाणणस्सवि सयंभुणो सायर-जलेण ॥ ८१३ ॥

क्षीरसुराग्रहणं घृतजलादिसागरपञ्चकमपि सप्तसमुद्रान्तर्गतम् उपलक्षयति । क्षीरसुरयोस्तु उपादानं कुतूहलितया । क्षीरसुरासंनिपातस्य लोके अदृष्टत्वेन तद्विकाररसस्य अपूर्वत्वम्[1] ॥

॥ ८११ ॥ मज्जति [2]शिखरारूढारुहत्पुञ्जीकृतमुखरसुरलोकः[3] कुहरभरणक्रमेणावसीदन्[4] जलकलकलो यत्र स मेरुः ॥

३ कुडति मेरुकटकादिके सति तदाश्रयः सुरलोकः शिखरेषु पुञ्जीभवति । को नस्त्रातेति च कलकलं करोति । कुहरेषु च शून्येषु प्रथ-
मजलधिजलकल्लोलप्रवेशसमये महाकलकलो भवति । यथायथानुपूर्यते
६ तथातथा मन्दीभवतीत्यनुभवसिद्धम् ॥

॥८१२॥ चरणान्तनिपतितां[5] संभ्रमेण भयेन प्रलयाम्बुनिर्भरे भुवने आरोहति पद्भ्यामाक्रामति रत्ननावमिव त्रिनयनो मौलिशशिलेखाम्॥

३ किल चलतो[6] यत् मस्तकादद्रागिति[7] पादाग्रे पतति तत् अलक्षितं चरणेनाक्रम्यते । चन्द्रलेखा च वक्राकृतिर्नौरिव भवति । यथा शुक्लद्वितीयस्याम् । जलप्लाविते च जगति नावारोहणावसर इत्येवमुत्प्रेक्षितम् ॥

॥ ८१३ ॥ न आकुलभावो योगानुबन्धसंयमितश्वासप्रसरस्यात्

[1] MH. अपूर्वत्वात्. [2] MH. °रूढीरुहद° [3] MH. °पुंजकृत°. [4] MH. °सीदञ्जल°. [5] MH. °निपतितं. [6] MH. चलतो. [7] MH. °द्रागिति.

इय पलय-जलप्फालिय-चलन्त-सुर-सेल-विहल-विबुहम्मि ।
अणहमवलम्बणं ति-हुयणस्स जो जायइ मुरारी ॥ ८१४ ॥
जस्समह-धूम-लेहा रविणा स-मऊह-दाविय-दलेण ।
अग्ग-घडिएण दीसइ कविसेक्क-फलव्व ताल-लया ॥ ८१५ ॥
तस्स इर इमो सुव्वइ विग्गह-तुङ्गाहिहाण-पडिवण्णो ।
भुयणम्मि महासुर-वंस-वेरिणो अंस-णीसन्दो ॥ ८१६ ॥

जलोपप्लवस्य च [1]श्वासनिरोधसुखानुबोधकत्वात् प्लाविताननस्यापि
१ स्वयमुवः सागरजलेन ॥

॥ ८१४ ॥ इय जलेहिं इति द्वाभ्याम् अवान्तरकुलकं समापयति । इति जलधिजलास्फालितचलत्सुरशैलविह्वलविबुधे[2] अनघमवलम्बनं
३ त्रिभुवनस्य यो जायते मुरारिः

[॥ ८१५ ॥ यस्य महाधूमलेखा रविणा समयूखदर्शिततलेन अग्रघटितेन दृश्यते कपिशैकफलेव ताललता

२ मध्याह्नसूर्यस्पृष्टशिरा भूमिमूला यस्य प्रलयकालीना महाधूमलेखा कपिशैकफला महातालल्तेव भाति स्मेति भावः ॥]

॥ ८१६ ॥ तस्य किलाय श्रूयते [3]विग्रहतुङ्गाभिधानेन लोके प्रतिपन्नः प्रतीतो भुवने महासुर[वंश]वैरिणः [4]अंशनिष्यन्दः ॥ अन्तःकु-
१ लकम् ॥ १२ ॥

---

[1] MH. °सुखनुबोध°. The emendation is conjectural. [2] Do J. K. P all read °विबुहम्मि as explained by the commentator. [3] MH. °भिधाने लोक°. [4] MH. अंशनिष्यंद .

अह वा । १०

ओसरइ समुप्पयणा रहस-घडन्तङ्ग-पेल्लण-विलोलं ।
तक्खण-विहडिय-बम्भण्ड-सयल-जालंव घण-वडलं ॥ ८१७ ॥
विहडन्त-घण-विमुक्का परियत्त-विमाण-वञ्चिया कहवि ।
णिवडन्ति गलिय-णिय-पिञ्छ-विब्भमा तडि-गुण-च्छेया ॥८१८
भमियं रय-विहुओयहि-समुच्छलन्तेहिं पक्ख-सेलेहिं ।
साहेज्ज-संगएहिं महा-विहङ्गेहिंव णहम्मि ॥ ८१९ ॥

॥ ८१७ ॥ अथ वा हरिरेवायं गरुडगमनत्वात् न तु तान्निष्यन्द इति द्वितीयान्तःकुलकेनाह ।

अपसरति सम्यगुत्पतनात् रभसघटमानांसप्रेरणविलोलं [1]तत्क्षणविघटितब्रह्माण्डशकलजालमिव[2] घनपटलम्[3] ।

गरुडो ह्यण्डजः । अण्डजाश्च[4] अण्डोदरे पक्षसंविष्टे अण्डं स्फोटयित्वा निःसरन्तीति भङ्गिभणितिरियम् ॥

॥ ८१८ ॥ [5]विघटमानैर्घनैर्विमुक्ताः परिवृत्तविमानवञ्चिताः कथमपि निपतन्ति गलितनिजपक्षविभ्रमास्तडित एव दर्पेण प्रसृताश्छिन्नगुणाः[6] अत एव वेगपतनवशनिपतितगरुडपक्षलेशविभ्रमं जनयन्ति[7]॥

॥ ८१९ ॥ भ्रान्तं रयो वेगस्तेन विधूतो य उदधिस्ततः समुच्छलद्भिः पक्षशैलैः [8]साहाय्यसंगतैरिव महाविहंगैर्नभसि ॥

---

[1] MH. तत्क्षणविलोलत्क्षण° for तत्क्षण°. [2] MH. °सकल° [3] MH. घट° [4] MH. appears corrupt, reading अंडजाश्चाडोदरेक्षसंविर्टेऽडस्फोटयित्वा. The emendation is purely conjectural. [5] MH. विघटमानैर्व°; i.e. om. घनैः [6] MH. °गुणान्. The text of the commentary from तडित एव दर्पेण up to °गुणाः seems corrupt. Probably the last words of the chhâyâ and the beginning of an explanatory note, of which दर्पेण &c is the existing continuation, are lost. [7] MH. जनयति. [8] MH. सहाय°.

दीसइ वेउग्घाडिय-सायर-मूल-रयण-प्पहायम्बो ।
पढमोवइयारुण-पेल्लिओव्व मग्गो सुवण्णस्स ॥ ८२० ॥
सोहन्ति अमरिसुग्गम-विउण-विसाणल-सिहं वियम्भन्ता ।
दर-खण्डिय-मुह-घोलन्त गरुल-वक्खव्व भुयइन्दा ॥ ८२१ ॥
मूल-फणा-मण्डल-तह-णिसण्ण-णिक्कम्प-धरिय-महि-वेढं ।
सहइ ठियं इयर-फणाहिउत्त-गरुलं अणन्तस्स ॥ ८२२ ॥
विहडन्ति णह-णिवाया विहङ्ग-णाहस्स कुलिस-कढिणावि ।
मन्दर-णिहंस-किण-णिट्ठुरम्मि वच्छम्मि वासुइणो ॥ ८२३ ॥

॥ ८२० ॥ दृश्यते [1]वेगोद्घाटितसागरमूलरत्नप्रभाताम्रः प्रथमोत्पतितारुणपूरित इव मार्गः [सुपर्णस्य] सुपर्णस्यादित्यस्य ॥

समुद्रतले पाताले नागानां मणिसमूहा उद्घाटिता एवमुपवर्णिताः ॥

॥ ८२१ ॥ शोभन्ते अमर्षोद्गमद्विगुणविषानलमिषं कृत्वा विजृम्भमाणा ईषत्खण्डिता मुखैर्घूर्णमाना गरुडपक्षा येषां ते इव भुजगेन्द्राः ॥

अमर्षोद्गतविषानलज्वालाः [2]कोपखण्डितमुखस्थापितगरुडपक्षखण्डत्वेनोत्प्रेक्षिताः ॥

॥ ८२२ ॥ मूलफणामण्डलतथानिषण्णनिष्कम्पधृतमहीपीठं[3] शोभते स्थितम् अवस्थानम् इतरफणाभियुक्तगरुडम् अनन्तस्य शेषस्य ॥

॥ ८२३ ॥ विघटन्ते नखनिपाता विहंगनाथस्य संबन्धिनः कुलिशकठिना अपि मन्दरनिघर्षकिणनिष्ठुरे वक्षसि वासुकेः ॥

---

1 MH. °सागररत्नभूप्रभा°. 2 MH. °स्थापिता गरु° 3 MH. °निषण्णाः for °निषण्ण°.

णिय-सुक्कारोसारिय-णपडन्त विहङ्ग-णाह-संसग्गा ।
फणिणो विहल-मुह-च्छोह-विउण-रोसं विसूरेन्ति ॥ ८२४ ॥
संभम-चलन्त-दिग्गय-घोलाविय-सास-मुहल-कर-दण्डं ॥
सेसट्ठ-भुयय-कुल-णाययंव ओसरइ पायालं ॥ ८२५ ॥
इय एस विहुअ-विसहर-समूह-संभाविउब्भड-जसेण ।
वुब्भइ विणया-तणएण स-विणयं कण्ह-भावम्मि ॥ ८२६ ॥

॥ ८२४ ॥ निजसूत्कारापसारितापतद्विहंगनाथसंसर्गाः फणिनो विफलमुखक्षोभं[1] द्विगुणरोषं कृत्वा विशूरयन्ति अ शूरयन्ति[2] विशूरमात्मानं कुर्वन्ति ॥

तत्करोतीति णिच् । अशूरमात्मानं शोचन्तीत्यर्थः ॥

॥ ८२५ ॥ संभ्रमचलद्दिग्गजघूर्णितश्वासमुखरकरदण्डं[3] शेषाष्टमभुजगकुलनामितमिव अपसरति पातालम् ॥

अष्टौ किल दिग्गजाः । चत्वारो दिक्षु विदिक्षु च चत्वारः । तत्रैवमुत्प्रेक्ष्यते । नागा इव[4] [5]दिग्गजाकृष्टकरनिकराः । सप्तान्ये[6] शेषस्त्वष्टमस्तदाधारत्वेन [7]वर्तमानः । अयं त्वर्थो रम्यतरः शेषस्थभुजगकुलनामितमिवेति । दिग्गजचतुष्टयं शेषत्वेन तत्करास्तु नागकुलत्वेन कल्पिताः कविना ॥

॥ ८२६ ॥ इत्येष विधुतविषधरसमूहसंभावितोद्भटयशसा उह्यते विनतातनयेन सविनयं कृत्वा कृष्णभावे कृष्णरूपावस्थायाम् ॥ १० ॥ आदितः २२ ॥ अन्तःकुलकं द्वितीयम् ॥

---

[1] MH °मुखे क्षोभे. [2] MH. विशूरमशूरयंति for अशूरयन्ति. [3] MH om र. [4] MH. एव. [5] MH. °निकराकराः for °निकराः. [6] MH. सप्तन्ये. [7] MH. वर्तमाना अयं. The whole passage from नागा up to वर्तमानः seems to be corrupt in MH.

अवि य ।

संभम-भमन्त-विज्जाहरासि-केसर-करम्बियं फुरइ ।
उप्पाउद्ध-ट्ठिय-चिहुर-दण्ड-चण्डंव गयण-यलं ॥ ८२७ ॥
उव्वहइ बिम्ब-घडियं तारा-णियरं ससी विडप्पस्स ।
निद्दय-कवलण-खुडिय-ट्ठियंव दाढा-कणुक्केरं ॥ ८२८ ॥
रोस-धुय-चलण-तेलोक्क-लच्छि-विच्छूढ-णेउर-च्छायं ।
विवराह-केउ-भिण्णं रवि-बिम्बं वियलइ नहम्मि ॥ ८२९ ॥

॥ ८२७ ॥ अपि च कृष्णत्वमेव जगदीशत्वेन द्रढयति तार्तीयेनान्तःकुलकेन ॥

संभ्रमभ्रमद्विद्याधरासिकेसरकरम्बितं स्फुरति उत्पातोर्ध्वस्थितचिहुरदण्डचण्डमिव नभस्तलम् ॥

संभ्रमो जगज्जयोद्यताद्[1] यशोवर्मणो भयम् । असिकेसराः खड्गरश्मयः । चिहुरदण्डा गगने केशदण्डाकारा उत्पाताः प्रसिद्धाः ॥

॥ ८२८ ॥ उद्वहति बिम्बघटितं तारानिकरं शशी राहोः निर्दयकवलनखण्डितस्थितमिव दंष्ट्राकणोत्करम् ॥

घटितं संबद्धम्[2] । विडप्पो राहुः । यदा ताराश्चन्द्रबिम्बारूढा दृश्यन्ते तदा जगतो भयं महद्भवतीत्युत्पातोयम् ॥

॥ ८२९ ॥ रोषधूतचरणायास्त्रैलोक्यलक्ष्म्याः सकाशाद्विच्छूढः क्षिप्तो यो नूपुरस्तच्छायं विवराद्धेतोः केतुभिन्नं[3] सत् रविबिम्बं विवलति विगलति वा [नभसि] ॥

केतुभिन्नत्वात्समविवरम् । ततश्च लक्ष्मीचरणनूपुरसादृश्यम् । यस्यां दिशि कुपितो यशोवर्मा भवति तत्र विनाशस्य सूचका उत्पाता इहाविव जगत्प्रलयोद्यते भवन्तीति तात्पर्यार्थः ॥

[1] MH. °योद्योता°. [2] MH. adds उत्कीलनम् after संबद्धम्. [3] MH. केतुछिन्नं.

अत्थक्क-फुडण-वियलन्त-कलल-कलिलंव बाल-बम्भण्डं ।
रवि-बिम्बं दीसइ किरण-मुक्क-कीलाल-जम्बालं ॥ ८३० ॥
ताद्दियस-मुह-ट्ठिय-लोह-कवल-कसण-प्पहा-विहिण्णंव ।
हेसन्ति रहस-निव्वूढ-धूम-कलुसं जय-तुरङ्गा ॥ ८३१ ॥
इय तइया खण-निव्वडिय-भ्रू-लया-भङ्ग-भङ्गुरावङ्गे ।
जाएं इमम्मि भुयणेसु दारुणा आसि उप्पाया ॥ ८३२ ॥

॥ ८३० ॥ अनवरतस्फुटनविगलत्कललकलिलम्[1] [इव] बालब्रह्माण्डं रविबिम्बं दृश्यते किरणमुक्तकीलालाकुलम्[2] ।

कललम् अकाठिनीभूतं प्राणिशरीरोपादानकारणं शोणितादि । कलिलं व्याप्तम् । कीलालं रुधिरम् जम्बालं व्याकुलम् ॥

॥ ८३१ ॥ प्रतिदिवसमुखस्थितलोहकवलकृष्णप्रभाविभिन्नमिव हेषन्ते रभसनिर्व्यूढधूमकलुषं जयतुरंगाः ॥ सधूमं हयहेषणमुत्पातः ॥

॥ ८३२ ॥ इति तदा भुवनजयार्थयात्रासमये[3] क्षणमात्रमपि निर्वृत्ते[4] निजैकपदभङ्गे[5] नृपत्यादिकृतस्वमर्यादातिक्रमाशाभङ्गादिकेऽपराधे निमित्ते सति भङ्गुरे सभ्रुकुटिके अपाङ्गे यस्य तस्मिंश्चलिते अस्मिन्यशोवर्मणि भुवनेषु दारुणा आसन् परराष्ट्रेषु उत्पाताः ॥ ६ ॥ आदितः २८ ॥ तृतीयमन्तःकुलकम् ॥

---

[1] MH. °कलिनम्. [2] MH. °कुलम् for °आकुलम्. [3] MH om. °ये. [4] MH. निवृते. [5] MH. निजपदकमङ्गे.

किं च ।

सरहस-संचार-तरङ्गिओरु-तरलाविओ सुहावेइ ।
आरसणा-गुण-पडिबद्ध-कुण्डलो कुसुम-पालम्बो ॥ ८३३ ॥
घोलइ पडिलग्ग-पियङ्गु-मञ्जरी-जाल-गरुइअद्धन्तो ।
असमञ्जस-लासायास-पसिढिलो कुन्तल-कलावो ॥ ८३४ ॥
सहइ थण-वट्ठ-संठिय-पिट्ठायय-पंसु-पिञ्जर-च्छायं ।
अहिराम-माहवी-मउल-दन्तुरं दमणयाहरणं ॥ ८३५ ॥
पड-वास-पंसु-धूसर-दर-गरुआअन्त-पम्ह-परिसिढिला ।
घोलइ महु-मय-परिणाम-विरल-परिवाडला दिट्ठी ॥ ८३६ ॥

॥ ८३३ ॥ अथ चतुर्थं शृङ्गाराङ्गम्[1] ॥ सरभससंचारतरङ्गितोरुतरलितः सुखयाति [2]आरशनागुणप्रतिबद्धकुण्डल' कुसुमप्रालम्बः ॥

॥ ८३४ ॥ घूर्णते [3]प्रतिबद्धप्रियङ्गुमञ्जरीजालगुरूकृतार्धान्तः असमञ्जसलासायासप्रशिथिलः[4] कुन्तलकलापः ॥

२ अतिरभसप्रसारितत्वेन त्यक्तागमत्वं लासस्यासामञ्जस्यम् ॥

॥ ८३५ ॥ शोभते स्तनपृष्ठसंस्थितपिष्टातकपांशुपिञ्जरच्छायम्, अभिराममाधवीमुकुलदन्तुरं चम्[5]पकाभरणम् ॥

३ क्वचित्तु दमनकाभरण [म् इति] पाठोऽस्ति । पिष्टातकश्चतुःसमः । मुकुलं कलिका ॥

॥ ८३६ ॥ पटवासपांसुधूसरेषद्गुरूयमाणपक्ष्मपरिशिथिला घूर्णते मधुमदपरिणामविरलपरिपाटला दृष्टिः ॥

---

[1] MH. °ङ्गारैगम्. [2] MH. °रम्ना°. [3] MH. °गु°. [4] MH. °शिथिलकु° for °शिथिल. कु°. [5] MH. °गुरुमान°.

इय मयणूसव-वियसन्त-वहल-कीला-रसो सुहावेइ ।
एयस्स पणइ-भवणेसु णव-विलासो पिया-सत्थो ॥ ८३७ ॥

अवि य ।

लहु-विसय-भाव-पडिसिद्ध-पसर-संभावणा-पडिक्खलिया ।
जस्स समत्तावि गुणा चिरमसमत्तव्व दीसन्ति ॥ ८३८ ॥

अह वा

वसुहा-सयण-पहुप्पन्त-रेणु परिभोय-विहुरिय-कवोलं ।
वयणं हेमन्त-मियङ्क-धूसरं सारवेन्तीहिं ॥८३९॥
असमारण-मूलुब्भिज्जमाण-पम्हग्ग-मडहिय णडाले ।
अलए णीसास-णिवेस-जज्जरे संजमेन्तीहिं ॥८४०॥

॥ ८३७ ॥ इति मदनोत्सवविकसद्बहलक्रीडारसः सुखयति एतस्य नृपस्य प्रणयिभवनेषु नवविलासः प्रियासार्थः ॥ आदितः ३३ ॥
२ तुरीयमान्तरकुलकम् ॥

॥ ८३८ ॥ लघुविषयभावप्रतिषिद्धप्रसरसंभावनाप्रतिस्खलिता यस्य समाप्ता अपि गुणाश्चिरमसमाप्ता इव दृश्यन्ते ॥ यस्य अगणित-
३ गुणगणस्य पुरतः संपूर्णगुणा अपि अल्पगुणा इव प्रतिभान्ति भानोरिव चन्द्रादय इत्यर्थः ॥

॥ ८३९ ॥ अथ वैरिवनितानां वन्दित्वमापादितानामवस्थावर्णनं समाप्तिकुलकम् ॥

३ वसुधाशयनप्रभवद्रेणु परिभोगविधुरितकपोलं वदनं हेमन्तमृगाङ्कधूसरम् उत्पुंसन्तीभिः

॥ ८४० ॥ असमारणेन[1] अयोजनेन मूलोद्भिद्यमानपक्ष्माग्रैरल्पीकृतललाटान् अलकान् निःश्वासनिवेशैर्जर्जरान्कम्पमानान् संयमयन्तीभिः

---

[1] MII. अलकान्तारा° for असमारणेन अयो°. [2] MII ... मू°.

जह-तह-पुसिअंसु-कणावलम्ब-मन्थरिय-पम्ह-परिवेसं ।
देन्तीहिं अहिणवाणन्द-बाह-सोम्मुम्मुहिं दिट्ठिं ॥८४१॥
अक्खित्त-चुडुप्पुदेस-समहियायम्बमुव्वहन्तीहिं ।
अब्भसुरमहरं वेलक्ख-सुण्ण-दिण्णङ्गुली-किसलं ॥८४२॥
इय एस हियय-निम्माय-वम्महं खण-खलन्त-वियणाहिं ।
रहसुम्मुहीहिं दीसइ पडिवक्ख-णरिन्द-चन्दीहिं ॥ ८४३ ॥

३ यशोवर्मसौन्दर्यातिशयदर्शनाद् आसां मदनोन्मादः अलकादियोजनात्सलक्ष्यते ॥

॥ ८४१ ॥ यथातथोत्पुंसिताश्रुकणावलम्बमन्थरितपक्ष्मपरिवेषां ददतीभिः अभिनवानन्दबाष्पसौम्योन्मुखीं दृष्टिम्

३ स्वभर्तृविरहादिक्लेशजाश्रुपातस्योत्पुंसनम् राजराजाभिलापानन्दाभिनवाश्रुणश्च प्रवृत्तिः ॥

॥ ८४२ ॥ आक्षिप्ताधरखण्डनप्रदेशसमधिकाताम्रम् उद्वहन्तीभिः अभांसुरम्[1] अभास्वरम् अधरं वैलक्ष्यशून्यदत्ताङ्गुलिकिसलयम् ।

३ आक्षिप्त दत्ताङ्गुल्यैव । चुडुप्पम्[2] अधरखण्डनम् । तच्च अद्यापि न समीभृतम् अचिरापहृतदयितत्वात् । शून्य निष्प्रयोजनम् । यशोवर्मसमागमस्य दुष्प्रापत्वात् ॥

॥ ८४३ ॥ इति एष हृदयनिर्मितमन्मथक्षणस्खलद्वेदनाभिर्यशोवर्मदर्शनक्षणमात्रे निजभर्तृविरहकृतां वेदनाम् अननुभवन्तीभिः[3] रभसो-
३ न्मुखीभिर्दृश्यते प्रतिपक्षनरेन्द्रबन्दीभिः हठापहृतपरनारीभिः ॥ ५ ॥
आदितः ३७ ॥ महाकुलकम् ॥

---

[1] So MH ! See *Notes*. [2] MH. चुडुप्प°. [3] MH. °भवन्तीभि रभ°.

इय उण्णएण इमिणा जह णिद्दविओ पुरा मगह-णाहो ।
तह सीसन्तं एए तुमाओ णीसेसमिच्छन्ति ॥८४४॥
अह विहसिऊण सणियं सो जम्पइ णिव्वडन्त-सब्भावं ।
कइयव-विमुहाइंचिय होन्ति विसुद्धाण हिययाइं ॥८४५ ॥
धीरेहिँ हियय-णिहिया कहवि गमेज्जन्ति सोय-संवेया ।
अङ्गाइँ पहरिसो उण गरुयाणवि किंपि तरलेइ ॥ ८४६ ॥
कण्ठेच्चिय परिघोलइ पुणरुत्तं पहरिसाउल-क्खलिया ।
अपहुप्पन्तिव्व महं वाया पहुणो पसंसासु ॥ ८४७ ॥

॥ ८४४ ॥ इति उक्तप्रकाररूपेण[1] उन्नतियुक्तेन एतेन यशोवर्मणा यथा निद्रापितो निपातितः पुरा मगधनाथो गौडाधिपतिस्तथा शिष्यमाणम्[2] उच्यमानम् एते विदग्धास्त्वत्सकाशान्निःशेषमिच्छन्ति ॥

इति पूर्वप्रक्रान्तविदग्धाभ्यर्थनाविषयः प्रकटीकृतः ॥

॥ ८४५ ॥ अह विहसिऊणेति तिसृभिर्विशेषकम् ॥ अथ विहस्य शनैः स वाक्पतिर्जल्पति निर्वर्तमानसद्भावम्[3] । युक्तं चैतत् । यतः कैतवविमुखान्येव भवन्ति विशुद्धानां हृदयानि ॥

॥ ८४६ ॥ धीरैर्हृदयनिहिताः कथमपि धार्यन्ते शोकसंवेगाः अङ्गानि प्रहर्षः पुनर्गुरुकाणामपि किमपि तरलयति ॥

॥ ८४७ ॥ कण्ठ एव परिघूर्णते पुनरुक्तं[4] प्रहर्षाकुलस्खलिता अप्रभवन्तीव मम वाक् प्रभोः प्रशंसासु ॥ ३ ॥

---

[1] MH इत्युक्तिप्रकाररूपोन्नतियुक्तेन for इति &c. [2] MH. शिष्यमाणमुच्य° for शिष्यमाणम् उच्य°. [3] MH. निवर्तमान°. [4] MH. पुनरुक्तम्°.

अवि य ।

अन्तो-व्वास वियडायमाण-फण-मण्डलो समुव्वहइ ।
पच्छा-च्छेप्प-च्छल णिन्त-दीह-देहत्तणा सेसो ॥ ८४८ ॥
छीराअन्त-णह-च्छवि-चलण-विणिम्मिय-पओहर-चउक्को ।
गूढ मुहो कुम्मोच्चिय लहइ आवीण-संठाणं ॥ ८४९ ॥
पढमुत्थङ्घण घोलाविउद्ध-घोणा-उडेण पडिवण्ण ।
उत्तुण्ड-तण्णयत्तणमइरा वेउण्ठ-कोलंण ॥ ८५० ॥

[॥ ८४८ ॥ अन्तावकाशम् अन्तरवकाश वा विकटायमानफण-मण्डल समुद्वहति पश्चाच्छेपच्छलनिर्याद्दीर्घदेहत्वाच्छेपः ॥]

॥ ८४९ ॥ दानवभयात्पृथ्वी गोरूपत्वमापन्ना सती भय त्याज-यित्वा पुन स्वरूपे येन पृथुना स्थापिता सोपि यशोवर्मण उपमानं
२ न भवति का गणनान्यत्रेति पट्कुलकेनाह ॥

क्षीरायमाणनखच्छविचरण [वि] निर्मितपयोधरचतुष्को गूढमुखः कूर्म एव लभते आपीनसस्थानम् ॥

६ पृथिव्या गोरूपपरिवृत्तौ कूर्म ऊधस्थानत्व[1] प्रतिपन्नस्तच्चरणाश्च स्तनत्व नखकान्तय क्षीरधारात्वमित्यर्थः ॥

॥ ८५० ॥ वराहो मुखप्रदेशत्व प्रतिपन्न इति द्वितयेनाह[2] ।

[1] MH ऊर्द्धस्थानत्वम् [2] MH द्वितायेनाह The two stanzas ( द्वितय ) referred to by the commenta'or are Nos 850 and 853, the intervening two being ignored by him He is obviously wrong in his explanation of 850 and 853, which he takes together. The former clearly means that the Mahavar tha became the *calf* ( तण्णयो=तर्णक ) of the Earth-cow, and the latter that the grass which grew on the surface of the earth seemed like the ends of a mouthful of grass which the Earth-cow had taken in her mouth playfully ( लीलाए ), not out of necessity, in her momentary change of form ( खणपरिअत्तणइत्तणं ).

देह-परिवाडि-पीडा-हुंकार-तरङ्गिओ विणिक्खमइ ।
धूमायन्तो पायाल-बहल-तम-संचओच्चेय ॥ ८५१ ॥
पायालोयर-मग्गम्मि भिण्ण-विणिवेस-सिढिल-गलिएण ।
वुब्भइ सुमेरुणा तरुण-रोयणा-सार-सारेच्छं ॥ ८५२ ॥
खण-परिअत्त-सहावत्तणेण दर-णिग्गयङ्कुर-सिहोव्व ।
वयणुद्देसो लीला-कवलिय-तण-दन्तुरो होइ ॥ ८५३ ॥

प्रथमोत्तम्भनाघूर्णितोर्ध्वघोणान्तरेण[1] प्रतिपन्नैः उद्दण्डः उद्धतः उन्नत-
३ त्वमदयोगाद्वैकुण्ठक्रोडेन[2] ॥

[॥ ८५१ ॥ देहपरिपाटीपीडाहुंकारतरङ्गितो विनिष्कामति धूमायमानः पातालबहलतमःसंचय एव ॥

३ पाताले वर्तमानो यो बहलतमःसंचयः स पृथिव्या गोरूपत्वे दान-
वपीडादर्शकहम्भारवनिष्कान्तधूमत्वं प्राप्त इति भावः॥ ]

[॥ ८५२ ॥ पातालोदरमार्गे भिन्नविनिवेशशिथिलगलितेन उह्यते सुमेरुणा तरुणरोचनासारसादृश्यम् ॥

३ भिन्नाधारः सन् शिथिलीभूतः सुमेरुः आधारादधोभूते पाता-
लोदरशून्यप्रदेशे गलितः अत एव सूक्ष्माकारः सन् अभिनवगोरो-
चनात्वं प्राप्त इति भावः ॥]

॥ ८५३ ॥ क्षणपरिवृत्तस्वभावत्वेन ईषन्निर्गताङ्कुरशिख इव वद-
[2] नोद्देशो लीलाकवलिततृणदन्तुरो भवति ॥

३ यद्यपि वराहजातेरतिनिम्नं[3] मुखं भवति तथापि पृथिव्युन्नयनदर्प-

[1] MH. °र्ध्व°. [2] This chhâyâ refers to J's reading (which see in *Various Readings*), and would seem to form one sentence with that on 853. [3] MH. °रिति निम्न.

तक्खण-पीवर-पसरन्त-दुद्ध-धारा-णिहेण मूलम्मि ।
सकुलोव्व विहाविज्जइ भारुव्वहणाअरा सेसो ॥ ८५४ ॥
इय जेण संभमारम्भ-गहिय-गो-भाव-विब्भमुब्भन्ता ।
पुहई पुहई-वइणा विलञ्छिया णियय-णामेण ॥ ८५५ ॥
तेणावि इमस्स तुलणा ण सहइ सुहयन्ति कस्स वा विरसा ।
सच्चरिय-वञ्चियाणं सेसाण सिरी-समुल्लासा ॥ ८५६ ॥

मदोद्धतीकृतं तथैवोन्नतगोमुखस्थानत्वं प्रतिपन्नम् । [1]भूभारगौरवपरिमण्डलीकृतशरीरकस्याधारत्वात्[2] ॥

॥ ८५४ ॥ तत्क्षणपीवरप्रसरद्दुग्धधारानिभेन मूले [3]सकुल इव विभाव्यते भारोद्वहनादराद्धेतोः शेषः ॥

३ पीवरक्षीरधाराः शुक्लादिसादृश्यात् नागभोगायन्त[4] इत्युक्त्या शेषः सकुलः ॥

॥ ८५५ ॥ द्वाभ्यां कुलकं समापयति ।

इति येन संभ्रमस्य भयस्यारम्भे उपक्रमे गृहीतो गोभावो गोरूपत्वं यया सा चासौ विभ्रमोद्भ्रान्ता[5] पृथिवी पृथिवीपतिना विला-
३ ञ्छिता चिह्निता निजकनाम्ना

॥ ८५६ ॥ तेनाप्यस्य तुलना सादृश्य न शोभते । सुखयन्ति कस्य वा विरसाः सच्चरितवञ्चितानां शेषाणां राज्ञां श्रीसमुल्लासाः ॥ कुलकम् ॥ ६ ॥

---

[1] MH. °भारगौरवपरि°. [2] MH. ° रकस्याधा°. [3] MH. सेकुल.
[4] MH. नागभगायन्त. [5] MH. विभ्रमभ्रांता. [6] MH. om वि°.

किं च । १५०

जाण अलंकार-समो-विहवो मइलेइ तेवि वड्ढन्तो ।
विच्छाएइ मियङ्कं तुसार-वरिसो अणुगुणोवि ॥ ८५७ ॥
मोह-सलाहाहिँ तहा पहुणो पिसुणेहिँ वेलविज्जन्ति ।
जह णिव्वडिएसुवि निय-गुणेसु ते किंपि चिन्तेन्ति ॥ ८५८॥

॥ ८५७ ॥ अधुना रागादिदोषप्लोपदूषिते संसारे यशोवर्मण एव श्लाघ्यगुणत्वमिति पञ्चविंशत्यधिकशतकुलकेनोच्यते । तत्र वृद्धगर्वमुग्धाभिलपणीयभवविडम्बनां तावदाह ॥

येषां मूढानां कटककेयूराद्यलंकारनिकरसमो विभवः प्रतिभाति । अलंकारप्रियशृङ्गारिणो यथा अनवरतम् अलंकारमेव जीवितं[1] मन्यमानाः संचिन्वन्ति तद्वत् अकर्तव्यकोटिकरणेन[2] विभवमेव कनकादिकं ये पूरयन्तीत्यर्थः । मलिनयति तानपि वर्धमानः । [3]ममायम् अनुगुण इति यद् अभिमानविषयीकृतम् अनुगुण्यं तत् अनैकान्तिकमित्याह । विच्छाययति विगतच्छायं करोति मृगाङ्कं तुषारवर्षः अनुगुणोपि आनुगुण्याभिमानविषयोपि[4]॥

तथा हि । तुषारवर्षोपि शीतस्पर्शः चन्द्रोपि शीतरश्मिः इति विद्यमानेप्यानुगुण्ये अभिमानमात्रकृते दूषकत्वं दृष्टम् ॥

॥ ८५८ ॥ मोघाभिः असत्याभिर्निष्फलाभिश्च श्लाघाभिस्तथा तेन प्रकारेण प्रभवो धनपतयः पिशुनैर्विडम्ब्यन्ते यथा निर्वृत्तेष्वपि[5] परिपूर्णेषु संपन्नेष्वपि निजगुणेषु ते धनेश्वराः किमपि अवर्णनीयं धनलुब्धाश्चिन्तयन्ति साधुपरिग्रहादिकम् ॥

---

[1] MH. जीविनं [2] MH. °कोटिकरेण न. [3] MH. ममायमनु.
[4] MH. adds मूढानाम् after °विषयोपि. [5] MH. निवृत्तेष्वपि.

सुलहं हि गुणाहाणं सगुणाहाराण णणु णरिन्दाण ।
अण्णेसिअव्व-मग्गा कत्तोवि गुणा दरिद्दाण ॥ ८५९ ॥

॥ ८५९ ॥ सुलभं हि गुणाधानं सगुणाधाराणां ननु नरेन्द्राणाम्। अन्वेषितव्यमार्गाः कुतोपि गुणा दरिद्राणाम् ॥ अपिशब्दः पुनरर्थे । निपातानामनेकार्थत्वात् । दरिद्राणां पुनः कुतो गुणाः । अन्वेषणीयमार्गत्वात् । मार्गः उपायो गुणिपरिचयः । स दरिद्राणामन्वेषणीयो वर्तते न तु सिद्धोस्ति स्वरसतः । गुणिस्वीकारं च सेवया दरिद्राः कुर्युः । सेवापरिक्षीणसामर्थ्याश्च त्यक्तजीविकोपायाः कथमेकाग्रचित्तस्वीकार्यान्स्वीकुर्युः । ईश्वराणां पुनर्गुणिगणनिलयत्वात्सुलभं गुणार्जनम् ॥ कचिद् दरिद्देणेति पाठः । तत्रार्थः । दरिद्रेण पुनर्गुणमार्गौ गुणप्राप्तावुपायाः कुतोन्वेष्टव्याः स्वीकर्तव्याः पण्डितपुस्तकप्रभृतयः । प्रसिद्धोपायस्य धनस्य अभावतः जनस्य च प्रायेणार्थलोभेन प्रवृत्तिदर्शनात् ॥ यथोक्तं कामन्दकिना । अर्थार्थी जीवलोकोयं ज्वलन्तमुपसर्पति । क्षीणक्षीरामनाजीव्यां वत्सस्त्यजति मातरमिति ॥ अयमत्र तात्पर्यार्थः । विषविषमः संसारः यतो निर्गुणास्तावदविवेकात्मान्ध्यैकनिमग्ना[1] घोरनरकादिकं तत्र भुञ्जते गुणोपायश्च दरिद्राणां दुष्प्रापः । ऐश्वर्यं च धनबाहुल्यम् । तत् धर्मेण भूयसा न भवति । ततश्च सगुणार्जनाजीविकार्थम् उपायैरुपायवन्तोपि ते रागादिघनपटलावृतलोचनत्वाच्च विद्वद्भास्करसंनिधानेपि गुणालोकं लभन्त इति ॥

[1] MII. °ध्यै for °धे: । [2] MII. °नैक°. [3] MII. °वृत°.

तं खु सिरीऍ रहस्सं जं सुचरिअ-मग्गणेक्क-हिययोवि ।
अप्पाणमोसरन्तं गुणेहिँ लोओ ण लक्खेइ ॥ ८६० ॥
ण सहन्ति सील-सारं दोसे विचिणन्ति णच्चिय विवेआ ।
दोसम्मि गुणायारे णवरं पहुणो णिसम्मन्ति ॥ ८६१ ॥
लोएहिँ अगहियंचिय सीलमविहव-ट्ठियं पसण्णंपि ।
सोसमुवेइ तहिंचिय कुसुमंव फलग्ग-पडिलग्गं ॥ ८६२ ॥

॥ ८६० ॥ एतदेव तनोति । तत् खलु श्रियो रहस्यं गुप्तं सामर्थ्यमस्ति । तदिति सर्वनाम्ना अनिर्वर्णनीयत्वमुक्तम् । ते लोचने[1] इतिवत् । हेतुमाह । यत् यस्मात् सुचरितमार्गणैकहृदयोप्यात्मानम्[2] अपसरन्तं गुणेभ्यो लोको न लक्षयति ॥

॥ ८६१ ॥ न सहन्ते शीलसारं सदाचरितत्वं प्रत्युत [ दोषान् विचिन्वन्ति नैव विवेकात् ] गुणिनामपि[3] दोषे[4] गुणोपकारे गुणोयमित्युपकरोतीत्युपकार इति मिथ्याभिमाने सति केवलं [ प्रभवो ] निशाम्यन्ति निमज्जन्ति ॥

॥ ८६२ ॥ लोकैरगृहीतमेव शीलम् अविभवास्थितं प्रसन्नमपि । शोषमुपैति तस्मिन्नेव कुसुममिव फलाग्रप्रतिलग्नम् ॥ धिग्[5] लोकसमूहात्मकं संसारं यत्र प्रसन्नं सफलं च कुसुममिव सच्चरितं नाद्रियते विभवमलच्छन्नैः कुचरितमपि च सुचरितत्वेन स्तूयते लोभग्रन्थिनिगडितैरित्यर्थः ॥

---

[1] MH. लोचन इति°. [2] MH. °मार्गणैक°. [3] MH. owing to omissions by the scribe is doubtless corrupt here; and it is impossible to restore the commentator's text. [4] MH. पोषि for °प. [5] MH. विग्लोक° for धिग् लोक°.

णिच्चं धण-दार-रहस्स-रक्खणे सङ्किणोवि अच्छरियं ।
आसण्ण-णीय-वग्गा जं तहवि णराहिवा होन्ति ॥ ८६३ ॥
पेच्छह विवरीयमिमं बहुया मइरा मएइ ण हु थोवा ।
लच्छी उण थोवा जह मएइ ण तहा इर बहुया ॥ ८६४ ॥
जे णिव्वडिय-गुणावि हु सिरिं गया तेवि णिग्गुणा होन्ति ।
ते उण गुणाण दूरे अगुणच्चिय जे गया लच्छि ॥ ८६५ ॥
एक्के लहुय-सहावा गुणेहिँ लहिउं महन्ति धण-रिद्धिं ।
अन्ने विसुद्ध-चरिआ विहवाहि गुणे विमग्गन्ति ॥ ८६६ ॥

॥ ८६३ ॥ नित्यं धनदाररहस्यरक्षणाशङ्किनोपि शङ्कनशीला अपि आश्चर्यम् आसन्ननीचवर्गा यद्यस्मात्तथापि नराधिपा भवन्ति ॥ गजस्नानमिवेदं यन्नित्य धनदाररहस्यादिरक्षणाधिकारो धनादिनाश-[1]चतुरनीचपरिग्रहश्चेत्यर्थः ॥

॥ ८६४ ॥ प्रेक्षध्वं विपरीतमिदं बह्वी मदिरा मदयति न तु स्तोका । लक्ष्मीः पुनः स्तोका यथा मदयति न तथा किल प्रभूता ॥

॥ ८६५ ॥ ये निर्वृत्तगुणा अपि [खलु] श्रियं गताः प्राप्तास्तेपि गतगुणा भवन्ति । ते पुनर्गुणानां दूरे अगुणा एव सन्तो ये गताः प्राप्ता लक्ष्मीम् ॥

[॥ ८६६ ॥ एके लघुकस्वभावा नीचास्मानो गुणैः लब्धु महन्ति इच्छन्ति धनऋद्धिम् । अन्ये विशुद्धचरिता विभवात् गुणान् विमृग्यन्ति ॥]

[1] MII°. °It° lcr°.

परिवार-दुज्जणाई पहु-पिसुणाइंपि होन्ति गेहाइं ।
उहय-खलाईं तहच्चिय कमेण विसमाईं मण्णेत्था ॥ ८६७ ॥
एत्तिय-मेत्तेण गुणे णणु पडिवज्जन्ति णिव्विवेआवि ।
जेत्तिय-मेत्तेण पहू गरुयाण परम्मुहा होन्ति ॥ ८६८ ॥
तह अयसिणो गुणेहिं जाया सुयणा जणम्मि सयलम्मि ।
दोसायरणंपि ण गारवाय जह संपयं ताण ॥ ८६९ ॥

॥ ८६७ ॥ परिवारदुर्जनानि साधुप्रभृणि तथा प्रभुपिशुनानि साधुपरिवाराणि [अपि] भवन्ति गृहाणि । उभयखलानि तथैव । एतानि क्रमेण[1] [उत्तरोत्तरं] विषमाणि [2]मन्येथाः ॥

[॥ ८६८ ॥ [3]एतावन्मात्रेण गुणान् ननु प्रतिपद्यन्ते अङ्गीकुर्वन्ति निर्विवेका मूढा अपि यावन्मात्रेण प्रभवो गुरूणां गुरुभ्यः पराङ्मुखा भवन्ति ॥]

॥ ८६९ ॥ तथा तेन प्रकारेण नृपदुर्जनपरिवारत्वादिना अयशस्विनो[4] [5]गुणैर्जाताः सुजना जगति सकले दोषाचरणमपि न गौरवाय यथा सांप्रतं तेषाम् ॥ एतदुक्तं भवति । गुणिनो गुणपण्यवृत्त्या[6] [7]द्रैव्यत्वमापन्नाः सन्तो यथाव्यवस्थितशास्त्रार्थज्ञानगुणमुपेक्ष्य[8] धनिनां [9]सतो दोषान् आच्छादयन्ति असतोपि च गुणान् आरोपयन्ति । ततश्च धनिभ्यो लाभख्यातिपूजादिगौरवं लभन्त इति धिक् संसारम् ॥

[1] MH. क्रमगाव for क्रमेण [उत्तरोत्तर]°. [2] MH om. the visarga after °था. [3] MH. gives the following commentary which somewhat agrees with the text of J. (See *Various Readings*)—एतावन्मात्रेण प्रभो [? प्रभवो] गुरूणां पराङ्मुखा भवन्ति । निर्विवेका अपि प्रभव इति संबन्धः । सत्यपि गुणपरिज्ञानयोग्यत्वे ईश्वराणां विभवमाहात्म्यानव [sic] परगुणज्ञानं गुणिद्वेषैकफलमित्यर्थः ॥ [4] MH. अयस्विनो. [5] MH. जाः सुजना, thus omitting ता:. [6] MH. °वृत्या. [7] MH. द्रैव्यमा°. [8] MH. °पेक्ष [9] MH. सतो.

गहिया गुणत्तणेणं फलन्ति दोसा फुडं णरिन्देसु ।
दोसच्चिय गुण संभावणाएँ जइ ते ण जायन्ति ॥ ८७० ॥
मूढे जणम्मि अ मुणिअ गुण सार-विवेय वअसन्निगा ।
किं अण्णं सप्पुरिसा गामाउ वणं पवज्जन्ति ॥ ८७१ ॥

॥ ८७० ॥ गृहीता गुणत्वेन फलन्ति दोषा स्फुट नरेन्द्रेषु दोषा अपि च गुणसभावनया यदि तेषा जायन्ते ॥ एतदुक्त भवति। नृपाधीनाखिलचेष्टस्यास्ससारस्य नृपमूलत्वम् । नृपाश्चातिमूढाः पिशुनादिप्रिया गुणद्वेषिणश्च । ते हि दोषेषु गुणबुध्यैव पक्षपात कुर्वन्ति। पिशुनादिकं भक्तबुद्धया गृह्णन्तस्तस्याभिलषितत्वम्[1] अदण्ड्यस्यापि च[2] मार्यत्व [3]व्यामोहादुपकारकत्वगुणबुद्ध्याभिमन्यमाना.[4] फलाभासमपि फलपनया फल प्राप्नुवन्ति तथा दोषाणामर्जनमपि उत्पादनाख्यं गुणबुद्धयैव ते कुर्वन्ति । पिशुनादिक हि उपकारकत्वगुणबुद्धया उपाददते । अतश्च दोषेष्वपि गुणबुध्या प्रवर्तमाना गुणानां मत्रकत्व मन्यन्ते । तात्त्विकगुणाश्च द्विषन्तीति धिक पशुभ्योपि पशून् भूपास्तदधीन च ससारम् । गाथाया चात्र यदिशब्दो यस्मादर्थे । यस्मादेव तस्माद्दुष्टत्व प्रकृतससारस्य[5] सिद्धमित्यर्थः ॥ जइ ते ण [6]भुणन्तीति क्वचित्पाठ । तत्रायमर्थः । यदि दोषानेव गुणसंभावनया न जानन्ति ते नरेन्द्रा तदा तेषु नरेन्द्रेषु दोषा गुणत्वेन गृहीताः सन्त । कथम । स्फुट कृत्वा । फलन्ति ॥

॥ ८७१ ॥ मूढे जने [7]अज्ञातगुणसारविवेकव्यात्सिकरोद्विग्नाः सन्त

---

[1] MH गृह्णन्तस्तस्याभिलषितमदण्ड्य? The emendation is conjectural. [2] MH. व [3] MH °व्यामो°. [4] MH. °मन्या°. [5] MH. प्रकृत स°.
[6] So MH. Does not the commentator mean मुणन्ति? [7] MH. भज्ञानत्वगात्र°.

दुक्खेहिँ दोहिँ सुअणा अहिऊरिज्जन्ति दिअसयंचेअ ।
सुपुरिस-काले य ण जं जं जाया णी अ-काले य ॥ ८७२ ॥
सुमईण सुचरियाण य देन्ता आलोयणं पसङ्गं च ।
पहुणो जं नियय-फलं तं ताण फलंति मण्णन्ति ॥ ८७३ ॥
अण्णोवि णाम विहवी सुहाइँ लीला-सहाइँ णिव्विसइ ।
असमञ्जस-करणेच्चेय णवर णिव्वडइ पहु-भावो ८७४ ॥

किमन्यत् सत्पुरुषा 'वनाद्वनान्तरं[1] प्रव्रजन्ति ॥ व्यतिकरो भावः । [2]पहम्मन्तीति पाठे हम्मतिः कम्बोजेषु प्रसिद्ध इति । स एवार्थः । इदमनेनोक्तं भवति । न चैवम् अविवेकिषु नृपेषु तदनुयायिषु च गुणिजनेषु करस्वापत्तिमलिनीकृतेषु[3] मोक्षकथा क्षीणेति शङ्क्यम्[4] अस्ति गुणिनां मुमुक्षूणामुपायः पापिनः परित्यज्य परिव्रज्या तैर्ग्राह्येति ॥

॥ ८७२ ॥ दुःखाभ्यां द्वाभ्यां सुजना अभिपूर्यन्ते । अहिमूलिज्जन्तीति[5] पाठे अभिपीडयन्त इत्यर्थः । दिवसकम्[6] । वीप्सागर्भमेतत् । प्रतिदिवसम् [एव] सत्पुरुषकालेमजननं[7] यत्ते[8] जाता यन्नीचकाले च ॥

॥ ८७२ ॥ सुमतीनां सुचरितानां च ददतः प्रयच्छन्तः सन्तः अवलोकनं दर्शनं प्रसङ्ग च सत्कथावसरं प्रभवो यन्निजकफलं तत तेषां सुमतिसच्चरितानां[9] फलमिति मन्यन्ते ॥

॥ ८७४ ॥ [10]विद्यासंतोषविभवभाजनात्प्रभुविभविनः अतिपापीयस्त्वमाह । अन्योपि नाम विभवी विद्यासंतोषविभवयुक्तः सुखानि

[1] So MH. [2] MH. परिहम्मंतीति. [3] So MH. [4] MH. शङ्कायाम्.
[5] So MH. [6] MH. दिवस्कमर्वाप्सा°. [7] MH. omits °म°.
[8] MH. यत for यत्ते. [9] MH. om. °स°. [10] MH. °नौति° for नः अति°.

अन्दोलन्ताण खण गरुयाण अणायरे पहु-कयम्मि ।
हिययं खल-बहुमाणावलोयणे णवर णिव्वाइ ॥ ८७५ ॥
पत्थिव-घरेसु गुणिणोवि णाम जइ केवि सावयासव्व ।
जण-सामण्णं तं ताण किंपि अण्णंचिय निमित्तं ॥ ८७६ ॥
वचन्ति वेस-भावं जेहिंचिय सज्जणा णरिन्दाण ।
तेहिंचिय बहुमाणं गुणेहिँ किं नाम मग्गन्ति ॥ ८७७ ॥

लीलासहितानि निर्विशति । असमञ्जसकरणमेव पापानुष्ठानमेव केवलम् उव्वॅरइ आरोहति प्रभुभावः प्रभुत्वविभवयुक्तः ॥ स्वाम्यविभूतिमानधनादियुक्त इत्यर्थः । अण्णोवीत्यपिशब्दः अवधारणे निपातानामनेकार्थत्वात् । अन्य एवेत्यर्थः ॥

॥ ८७५ ॥ आन्दोलतां चित्तखेदमनुभवतां क्षणमात्रं गुरूणां गुणगणगौरवभाजाम् अनादरे प्रभुकृते सति हृदय खलसंमानस्य स्वामिकृतस्य अवलोकने दर्शने केवलं निव्वाइ[1] निर्वृतिं लभते ॥ युक्तः सदृशेनुरागो विजातीये च विद्वेषः । श्वन इव श्वहंसयोः । इति बुद्ध्वा चेतोनिर्वृतिर्गुणिना[2] भवतीत्यर्थः ॥

॥ ८७६ ॥ पार्थिवगृहेषु गुणिनोपि नाम यदि केपि सावकाशा इव दृश्यन्ते जनसामान्य [तत्] तेषां किमप्यन्यदेव निमित्तम् पैशुनादि न तु गुणाः ॥ संनिहितपोषिणा हि तत्र ते विपर्ययहेतवो वा ॥

॥ ८७७ ॥ व्रजन्ति द्वेष्यभावं यैरेव सज्जना नरेन्द्राणां तैरेव[3] बहुमानं गुणैः कथं नाम मृगयन्ते ॥

---

[1] MH. 'भि. [2] MH. 'चर्न्नृतिगुणि°. [3] MH. तैरिव.

को व्व ण परम्मुहो णिग्गुणाण गुणिणो ण कं व दूमेन्ति ।
जो वा ण गुणी जो वा ण णिग्गुणो सो सुहं जियइ ॥८७८॥
जं सुयणेसु णियत्तइ पहूण पडिवत्ति-णीसहं हिययं ।
तं खु इमं रयणाहरण-मोयणं गारव-भएण ॥ ८८९ ॥
अविवेय-सङ्किणोच्चिय णिग्गुणा पर-गुणे पसंसन्ति ।
लद्ध-गुणा उण पहुणो बाढं वामा पर-गुणेसु ॥ ८८० ॥

॥ ८७८ ॥ को वा न पराङ्मुखो निर्गुणेषु । गुणिनः कं [वा] न दुन्वन्ति । द्वेषपूर्वमुपतापं कस्य न जनयन्ति । तस्माद्यो वा न गुणी यो वा न निर्गुणः स सुखं जीवति ॥ सर्वत्र समदृष्टिः सुखं जीवतीत्यर्थः ॥

॥ ८७९ ॥ यत् सुजनेषु 'सुजनेभ्यो निवर्तते प्रभूणां प्रतिपत्तिनिःसहं भवाभासजनितगर्वगलितविवेकं हृदयं तत् खल्वेतत् रत्नाभरणविमोचन गुरुत्वभयेन[2] ॥ यथा किल रत्नस्वरूपानभिज्ञो ग्राम्यो रत्नाभरणं पाषाणमात्रनिर्विशेषं भारायमाणं[3] मन्यमानो गौरवभयेन त्यजति तथा अविवेकत्वाद्गुणिनमित्यर्थः ॥

॥ ८८० ॥ इदमधिकमाश्चर्यं दृश्यते य एते विभवभाजस्ते निर्गुणाः सन्तः कदाचिल्लोकविगर्हाभयात् पण्डितान् प्रशंसन्ति गुणिनस्त्वीश्वरा[5] गुणिनां न सहन्त इत्याह । अविवेकशङ्किन एव अविवेकत्वप्रवादं लौकिकम् आत्मनः शङ्कमाना निर्गुणाः परगुणान् प्रशंसन्ति । लब्धगुणाः पुनः प्रभवो बाढं वामा अननुकूलाः परगुणेषु ॥

---

[1] MH. सज्जनेभ्यो. [2] MH. गुरुत्वा°. [3] MH. °मान. [4] MH. तथाऽविवेकत्वा. [5] MH. °श्वरानपि for °श्वरा. The emendation is mine.

सव्वोच्चिय स-गुणुक्करिस-लालसो वहइ मच्छरुच्छाहं ।
ते पिसुणा जे ण सहन्ति णिग्गुणा पर-गुणुग्गारे ॥ ८८१ ॥
सुयणत्तणेण घेप्पइ थोएणंचिय परो सुचरिएण ।
दुक्ख-परिओसियव्वो अप्पाणोच्चेय लोयस्स ॥ ८८२ ॥
मोत्तुं गुणावलेवो तीरइ कह णु विणय-ट्ठिएहिंपि ।
मुक्कम्मि जम्मि सोच्चिय विउणयरं फुरइ हिययम्मि ॥ ८८३ ॥

॥ ८८१ ॥ सर्व एव स्वगुणोत्कर्षलालसः सन् वहति[1] मत्सरोत्साहम् । ते पिशुना ये न सहन्ते निर्गुणाः सन्तः परगुणोद्गारान् ॥

॥ ८८२ ॥ सुजनत्वेन गृह्यते स्तोकेनैव परः सुचरितेन । दुःख परितोषयितव्य आत्मैव लोकस्य ॥ आत्मार्थ एवात्मा गुणनिर्भरो यथेष्टं कर्तव्यः । नेश्वरार्थः । निन्दितत्वादित्यर्थः ॥ तथा व्यासः ।

आत्मा संस्कृत्य [संस्कृत्य] परोपकरणीकृतः ।
अर्थलोभेन पुरुषैर्वेश्यास्त्रीभिरिव स्वयमिति ।

तत्तस्मान्निर्भरगुणगणार्जनेन आत्मैव परितोषयितव्यः न त्वीश्वरानादरेण गुणोपेक्षा कर्तव्येत्यर्थः ॥

॥ ८८३ ॥ मोक्तुं गुणावलेपस्तीर्यते पार्यते कथं नु विनयस्थितैरपि । [मुक्ते] यस्मिन् स एव द्विगुणकं कृत्वा स्फुरति हृदये ॥ अवलेपः अवज्ञा सर्वत्रैव संसारे वर्धतेतरां का संभावनैकदेशे । यथोक्तम् । योगिनो मुमुक्षोरपवर्गपुरद्वारवर्तिनः परिपक्वकषायस्य प्राप्तासम्प्रज्ञातयोगविशेषस्य तत्त्वज्ञानाभ्यासादरोपि निवर्तते तस्यापि गौणत्वेन हेयत्वादिति ॥

[1] MII. सत्वर्दति for सन् वर्दति.

दूमिउजन्ता हियएण किंपि चिन्तेन्ति जइ ण याणामि ।
किरियासु गुण पयट्टन्ति सज्जणा णावरद्धेवि ॥ ८८४ ॥
महिमं दोसाण गुणा दोसावि हु देन्ति गुण-णिहायस्स ।
दोसाण जे गुणा ते गुणाण जइ ता नमो ताण ॥ ८८५ ॥

॥ ८८४ ॥ दूयमाना हृदयेन किमपि चिन्तयन्ति यदि तन्न जानीमः । इयत्तु[1] जानीमः । चिन्तितद्वेष्ययोग्यक्रियासु पुनर्न प्रवर्तन्ते सज्जना अपराधेपि[2] । सत्यपराधेपि ॥ सज्जना विरूपकं न चिन्तयन्ति । *यदि तु प्रमादात्संसारधर्मतया चिन्तयेयुरपि तथापि* परुषभाषणादिक्रियासु संयम्य कोपं न प्रवर्तन्त[3] इत्यर्थः ॥

॥ ८८५ ॥ महिमानं महत्त्वं दोषाणां गुणाः दोषा अपि च ददति गुणनिघातस्य गुणगणस्य । दोषाणां ये गुणास्ते [गुणानां यदि तत् तर्हि नमः नमस्कारस्ते]षां गुणानाम् । गुणेभ्य इत्यर्थो व्यत्ययेन ॥ एतदुक्तं भवति । दोषा अपि रागादयो गुणानां वैदिकस्वरादीनाम् उपकारकाः । वीतरागत्वे हि अध्येतॄणाम् विनाश्यमानस्य वेदस्य अन्योन्यनिवारणेन रक्षा न स्यात् । यदाह भट्टः ।

इति यस्य हि संरब्धाः सन्ति च्छिद्रगवेषिणः ।
स कथं नाम निर्दोषं न पठेद्वेदमादृतः । इति ।

तथा गुणा अपि दोषाणां महत्त्वं संपादयन्ति । गुणानवलोक्यापि प्रज्वलितनमद्वेषादिका[4] भवन्ति दुर्जना इति । एवमपि न कथंचिद्गुणैर्दोषाणां साम्यं प्रशस्ततया प्रसिद्धमिति ॥

[1] MII. इयन्तु. [2] MII. चिन्तने. [3] MII प्रवर्तन्त॰. [4] MII प्रज्वलित नमद्°
The emendation is conjectural.

सुयणायन्ति खलावि हु सुयणावि खलत्तणंव दावेन्ति ।
एसोच्चिय सीमन्तो गुणाण दूरं फुरन्ताण ॥ ८८६ ॥
संसेविऊण दोसे अप्पा तीरइ गुण-ट्ठिओ काउं ।
निव्वडिय-गुणाण पुणो दोसेसु मई ण संठाइ ॥ ८८७ ॥
सुट्ठुवि परिहीण-गुणो सुअणो अण्णेहिँ होइ सामण्णो ।
सहयारेगलिय-रसेवि भूय-कज्जं ठियंचे अ ॥ ८८८ ॥
कलहो आइम आइं णवरं महिलाण दप्पण-अलाइं ।
पुरिसाण दप्पणं चरिय-धारिणो सज्जणच्चेय ॥ ८८९ ॥

॥ ८८६ ॥ सुजना[1] अपि खलायन्त इव । खला अपि सुजनवदाचरन्ति । [एष एव सीमन्तो गुणानां दूरं.स्फुरताम् ] ॥ त एव
३ श्लाघ्याः परिपूर्णा गुणा इत्यर्थः ॥

॥ ८८७ ॥ ससेव्यापि दोषान् आत्मा तीर्यते शक्यते गुणस्थितो गुणयुक्तः कर्तुम् । निर्वृत्तगुणानां पुनर्दोषेषु मतिर्न संतिष्ठते ॥ गुणा
१ मलवन्त[2] इत्यर्थः ॥

॥ ८८८ ॥ सुष्ठ्वपि परिहीनगुणः सुजनः अन्यैरसुजनैर्गुणिभिरपि भवतुँ सामान्यस्तुल्यः । सहकारे गलितरसेपि भूतकार्यं स्थितमेव ॥
३ सहकार आम्रजातेरवान्तरविशेषः ॥ भवत्विति संभावनायां लोट् । क्वचित्तु भवतीति पाठः ॥

॥ ८८९ ॥ कलधौतादिमयानि केवलं महेलाना दर्पणतलानि । पुरुषाणां दर्पणं चरितधारिणः सज्जना एव ॥ तैरेव पुरुषगुणप्रका-
३ शनात् ॥

[1] This ohhāyā refers to J's text See *Various Readings*. [2] MH. बलंत.

वयण-विमुक्कंपि खलो अण्णत्तो दारुणत्तणं वहइ ।
धारासु मुहुत्तिण्णंपि धरइ फरुसत्तणं दब्भो ॥ ८९० ॥
परिगय-पर गुण-सारउणेण वि-उणं विमूरमाणाण ।
होइ विवेओच्चिय दुज्जणाण पिसुणत्तण-णिमित्तं ॥ ८९१ ॥
अह मोहो पर-गुण-लहुअयाएँ जं किर गुणा पयट्टन्ति ।
अप्पाण-गारवंचिय गुणाण गरुयत्तण-णिमित्तं ॥ ८९२ ॥
वुब्भन्ते जम्मि गुणुण्णयावि लहुयत्तणंव पावेन्ति ।
कह णाम णिग्गुणच्चिय तं वहन्ति माहप्पं ॥ ८९३ ॥

॥ ८९० ॥ वचनविमुक्तमपि खलः अन्यत्र दारुणत्वं वहति धारयति । धारासु मुखोत्तीर्णमपि धारयति [ परुषत्वं ] दर्भः ॥
३ कचिद्रसइ इति दब्भे इति च पाठः । स्वभावो दुस्त्यज इत्यर्थः ॥

॥ ८९१ ॥ परिगतपरगुणसारत्वेन हेतुना द्विगुणं विसूरयतां द्विगुणं दुःखम् अनुभवतां भवति विवेक एव दुर्जनानां पिशुनत्वनिमित्तम् ॥

॥ ८९२ ॥ एष मोघो निष्फलप्रयासो व्यामोहो वा गुणार्जने दुर्जनानाम् । कुतः । परगुणलघुताया हेतोः दुर्जनार्जितानां परमल-
१ घुत्वात् । को मोहः । यत्किल गुणाः प्रवर्त्तन्त इति धीः । [ आत्म-
गौरवमेव गुणानां गुरुत्वनिमित्तम् ॥] आत्म [गौरव] गुरवो गुणाः न तु गौरवनिमित्तं भारप्रायाः ॥

॥ ८९३ ॥ उह्यमाने यस्मिन् ²यशःसमुन्नता अपि लघुत्वमिव प्राप्नुवन्ति कथं नाम निर्गुणा एव तत्³ हन्त वहन्ति [ माहात्म्यं ]
१ माहात्म्याभिमानं गर्वम्⁴ ॥

[1] MH कचिद्रसइ इति दब्भे इति. [2] MH. गुरुत्वा॰, where the word गुरु appears to have crept into the commentary from some marginal note referring to the reading given by us. [3] MH. सं. [4] MH. गर्वः.

ण तहा महागुणेसुं माहप्प-धरा हवन्ति णर-वइणो ।
साहंकारा जह पत्थिवेसु तेच्चेय दीसन्ति ॥ ९०१ ॥
जह-जह णग्घन्ति गुणा जह-जह दोसा य संपइ फलन्ति ।
अगुणायरेण तह-तह गुण-सुण्णं होहिइ जयंपि ॥ ९०२ ॥
किं व णरिन्देहिँ विवेय-मुक्क-सयलाहिलास-णीसङ्का ।
विहिणोवि धीर-पडिबद्ध-परियरा होन्ति सप्पुरिसा ॥९०३॥
थोयारम्भेवि विहिम्मि आयसग्गेव्व खण्डणमुवेन्ति ।
स-परिप्फन्देणंचिय णीआ भमि-दारु-सयलंव ॥ ९०४ ॥

नैवं किंचित् । यत्ते लघयन्त्यन्योन्यम् निन्दन्तीत्यर्थः । यथा गिरीणां ये मूलेषु शिखरेषु च व्यवस्थास्तेषां परस्परमसंबन्धः अन्योन्य च लघुत्वं पश्यन्ति ते ॥

॥ ९०१ ॥ न तथा महागुणेषु माहात्म्यधरा दर्पधारिणो भवन्ति नरपतयः साहंकारा यथा पार्थिवेषु त एव दृश्यन्ते विद्वांसः ॥ पार्थिवांस्तृणवन्मन्यन्तेतरामित्यर्थः ॥

॥ ९०२ ॥ यथायथा नार्धन्ति गुणाः यथायथा दोषाश्च संप्रति स्फुरन्ति अगुणादरेण गुणादराभावेन तथातथा गुणशून्यं भवति जगदपि ॥

॥ ९०३ ॥ किं वा नरेन्द्रैः । कर्मपरतन्त्रत्वात्तेषामप्रीतिं जानन्तः विवेकमुक्तसकलाभिलाषनिःसङ्गा विधेरपि धैर्यप्रतिबद्धपरिकरा गुरुगुणा भवन्ति ॥

॥ ९०४ ॥ स्तोकारम्भेपि स्वल्पप्रतिकूलेपि[2] विधौ आयसाग्र

[1] MH. distinctly so ! [2] MH. om. अपि.

विण्णाणालो ओच्चिय कुमईण विसारयं पयासेइ ।
कसणाण मणीणंपिव तेय-प्फुरणं सियंचेय ॥ ९०५ ॥
हियय-वियडत्तणेणं गरुयाण ण णिव्वडन्ति बुद्धीओ ।
घोलन्ति महा-भवणेसु मन्द-किरणाच्चिय पईवा ॥ ९०६ ॥

इव आयसं शस्त्रमयम् अग्रे प्रान्ते यस्य तदायसाग्रं तक्षकसंबन्धि समु[1]द्रकादिघटनभाण्डं तस्मिन्प्रान्तलग्नाल्पशस्त्रेपि यथा भ्रमयोजितं दारुशकलं खण्डनमुपैति तद्वत्खण्डनमुपयन्ति नीचाः स्वपरिस्पन्देनैव स्वचेष्टयैव ॥ यथोक्तम् ।

स्तोकेन हानिमायाति[2] स्तोकेनैवातिरिच्यते ।
अहो सुसदृशी चेष्टा तुलान्तस्य खलस्य चेति ॥

॥ ९०५ ॥ विज्ञानालोक एव कुमतीनां [ विसारतां ] विगतसारतां प्रकाशयति । कृष्णानां मणीनामिव तेजःस्फुरणं सितमेव[3] ॥ एतदुक्तं भवति । यद्यपि दुर्जनानां दैवयोगाद्गुणयोगः स्यात् तथापि नैसर्गिकदोषनिकरोत्कलितस्तेषु ज्ञानगुणालोको दोषच्छविं वहेत् नीलमणिगणापतित इव रविकरनिकरो नीलमणिकान्तिम् ॥

॥ ९०६ ॥ हृदयस्य विकटत्वेन ज्ञानस्य गाम्भीर्येण अगाधत्वेन गुरूणां [4]सुगुणभाजां न निर्वर्तन्ते [5]बुद्धयः । हृदयगतं वस्तु न प्रकटीभवतीत्यर्थः । किं तर्हि कुर्वन्ति । घूर्णन्ते[6] महाभवनेष्विव गर्भगेहेष्विव मन्दकिरणा इव प्रदीपाः ॥ महान्तोपि मन्दकिरणीभूताः प्रदीपा इत्यर्थः ॥

[1] MH. समुद्र°. [2] MH. °वाति. [3] MH. सितमेव.
[4] MH. सुगुण°. [5] MH. निर्वर्त्ते. [6] MH. घूर्णे.

अच्चन्त-विएएणवि गरुयाण ण णिव्वडन्ति संकप्पा ।
विज्जुज्जोओ बहलत्तणेण मोहेइ अच्छीइं ॥ ९०७ ॥
जे गेण्हन्ति सयंचिय लच्छिं ण हु ते ण गारव-ट्ठाणं ।
ते उण केवि सयंचिअ दालिद्दं घेप्पए जेहिं ॥ ९०८ ॥
एक्के पावन्ति ण तं अण्णे पुरओव्व तीएँ दीसन्ति ।
इयराण महग्घाणं च अन्तरे णिवसइ पसंसा ॥ ९०९ ॥
मरणमहिणन्दमाणाण अप्पणच्चेअ मुक्क-विहवाण ।
कुणइ कुविओ कयन्तो जइ विवरीयं सुपुरिसाण ॥ ९१० ॥

[॥ ९०७ ॥ अत्यन्तवितेजसापि महत्तमतेजसापि गुरूणां न निर्वर्तन्ते संकल्पाः । विद्युद्द्योतः बहलत्वेन मोहयति अक्षीणि ॥]

॥ ९०८ ॥ ये गृह्णन्ति स्वयमेव लक्ष्मीं गुणसौन्दर्यादिना उत्पाद्य नैव तेन कारणेन गौरवस्थान पूजास्थितिः । अथवा नैव ते गौरव-स्थानं न । किं तर्हि । तेपि भवन्ति लोके स्तुत्याः[1] । ते पुनः केपि लोकातीतसच्चरिताः स्वयमेव दारिद्र्यं गृह्यते यैः ॥ आत्मीयया संपदा परविपदं निघ्नन्ति ये स्वयमर्थविहानेन दुर्गतिं स्वीकृत्य ते अति-श्लाघ्या इत्यर्थः ॥ दारिद्र्य दौर्गत्यम् ॥

॥ ९०९ ॥ एके हीनसत्त्वाः प्राप्नुवन्ति न तां प्रशंसाम् । अन्ये उत्कटसत्त्वतमाः परँत इव तस्याः प्रशसाया [ दृश्यन्ते ] । अगणित-गुणत्वेन स्तोतुमशक्या इत्यर्थः । तस्मादितराणां[2] सत्त्वहीनाना महा-र्घाणां च अन्तरे मध्ये निवसति प्रशंसा ॥

॥ ९१० ॥ मरणम् अभिनन्दताम् आत्मनैव मुक्तविभवाना कु-

[1] MH, स्तुत्याः. [2] So MH.

उवयरणीभूअ-जया ण हु णवर ण पाविआ पहु-ट्ठाणं ।
उवयरणंपि ण जाआ गुण-गुरुणो काल-दोसेण ॥ ९११ ॥
छाया सा इर मण्णे अणन्तरागामिणो कय-जुयस्स ।
कलि-काल-भरम्मिवि किंपि जेण विमलं पडिप्फुरइ ॥ ९१२ ॥
विसइच्चेय सरहसं जेसुं किं तेहिं खण्डियासेहिं ।
णिक्खमइ जेसु परि ओस-णिब्भरो ताइं गेहाइं ॥ ९१३ ॥
उज्झइ उयार-भावं दक्खिण्णं करुणयं च आमुयइ ।
काणवि समोसरन्तो छिप्पइ पुहवीवि पावेहिं ॥ ९१४ ॥

तान्तः किं कुर्यात् । यदि तु [ कुपितः सन् ] करोति यादं विपरीतमेव [करोति] सत्पुरुषाणाम् ॥ पापपरिचयपरिहाराय जीवनमनिच्छतां गुणिदौर्गत्यनिवारणाय स्वयं त्यक्तविभवानां विभवदोषधिया वा कृतान्तो विपरीतं करोति धर्मधनपूर्णं जीवनमेव संपादयति । सत्त्वातिशयाकृष्टः सन्नित्यर्थः ॥

॥ ९११ ॥ उपकरणीभूतं जगद्येषां ते न खलु केवलं [ न ] प्रापिताः प्रभुस्थानं यावत्[1] उपकरणमपि न जाता गुणगुरवः कालदोषेण ॥ कालः कलिः ॥

॥ ९१२ ॥ छाया सा किल मन्ये अनन्तरागामिनः कृतयुगस्य कलिकालभरेपि किमपि येन विमलं[2] परिस्फुरति ॥

॥ ९१३ ॥ विशन्त्येव सरभसं येषु किं तैः न किंचित् खण्डिताशैर्हतपरलोकैः । निष्क्रामति येभ्यः परितोषेण प्रदीप्तैः कुलिनवदनस्तान्येव गृहाणि ॥

॥ ९१४ ॥ उज्झत्युपकारभावं दाक्षिण्य चानुकम्पे यागादिमा-

---

[1] MH. [illegible]°. [2] MH [illegible]° (or [illegible]). [3] MH. [illegible]°.
[illegible] (Gangadasa's n.)

अन्तोच्चिय णिहुयं विहसिऊण अच्छन्ति विम्हिया ताहे ।
इयर-सुलहंपि जाहे गरुयाण ण किंपि संपडइ ॥९१५ ॥
दावेन्ति सज्जणाणं इच्छा-गरुयं परिग्गहं गरुया ।
मयण-विणिवेस-दिट्ठं महा-मणीणंव पडिबिम्बं ॥ ९१६ ॥
साहीण-सज्जणावि हु णीय-पसङ्गे रमन्ति काउरिसा ।
सा इर लीला जं काय-धारणं सुलह-रयणाण ॥ ९१७ ॥

धुर्यं कारुण्यं चामुञ्चति । केषांचित्पापिनां सम्यगपसरन्तां स्पृश्यते पृथिव्यपि पापेन ॥ दाक्षिण्यादिसहितानि[1] पृथिव्यादीनि भूतानि दाक्षिण्यादिविहीनान्यफलप्रदानि भवन्तीत्यर्थः ॥

॥ ९१५ ॥ अन्तरेव निभृतं निगूढं विहस्य तिष्ठन्त्युदासीना भवन्ति विस्मितास्तदा इतरसुलभमपि यदा गुरूणां न किमपि संपद्यते ॥

॥ ९१६ ॥ दर्शयन्ति[2] सज्जनानामिच्छागुरुकं परिग्रहं गुरवो मदनविनिवेशदृष्टो[3] महामणीनामिव प्रतिबिंबः ॥ [3]प्रतिबध्यन्तेऽस्मिन्निति प्रतिबन्धः । मदनक सिक्थकः । स यथा संक्षेपकत्वेन व्यवस्थितः सन् महान्तमाटोप[4] मणीनां दर्शयति तद्वद्गुणशीलगुरवो विभवानुसारेण अल्पमप्यावर्जनं[5] कुर्वन्तो विनयाद्यतिशयेन महदिव प्रकाशयन्तीत्यर्थः ॥

॥ ९१७ ॥ स्वाधीनसज्जना अपि खलु नीचप्रसङ्गे रमन्ते कापुरुषाः । सा किल लीला यत् काचधारणं [6]सुलभरत्नानाम् ॥ [7]द्यूतक्रीडायामिव काचाभरणम्[8] । लीला अभासः । लीलान्यामोह इत्यर्थः ॥

[1] MH. °देरहितानि for °दिसहितानि. [2] MH. दर्शयति. [3] MH. °बध्यते तस्मि° [4] MH. °पा°.. [5] MH. °स्यावर्जनं. [6] MH. सुरम°. [7] MH. द्वृत°. [8] MH. यत्काचाभरणलीलाभ्रमंल्लीलाध्यामोह इत्यर्थ for काचा°.

थाम-त्थाम-णिवेसिय-सिरीण गरुयाण कह णु दालिद्दं ।
एक्का उण किविण-सिरी गया य मूलं च पम्हुसियं ॥ ९१८ ॥
किविणाण अण्ण-विसए दाण-गुणे अहिसलाहमाणाण ।
णिय-चाए उच्छाहो ण णाम कह वा ण लज्जा वि ॥ ९१९ ॥
परिहोय-सहा ण वहुव्व ताण णव-संगमालसा लच्छी ।
इयरा लहिऊण सिरिं ण काम-लीला-परा तेण ॥ ९२० ॥
अच्छन्तिच्चिय किविणा अछिवन्ता पास-गोअरं लच्छिं ।
परिहारवइंव पियं मइल-च्छायं णियच्छन्ता ॥ ९२१ ॥

॥ ९१८ ॥ स्थानेस्थाने पात्रेपात्रे निवेशितश्रीणां विलब्धलक्ष्मीकाणां गुरूणां कथं नु दारिद्र्यम् । न कथंचित् । उप्तप्रशस्तबहुफलबीजत्वात् । एका पुनरप्रसवा वन्ध्याप्राया कृपणश्रीः स्वरूपेण गता च मूलमेव प्रपुंसितम् ॥ चशब्दोवधारणे ॥

॥ ९१९ ॥ कृपणानाम् अन्यविषयान् दानगुणान् 'अभिश्लाघमानानां 'निजत्यागे उत्साहो न नाम । कथं तावन्न लज्जापि ॥ पित्रादिकं मम 'त्यागगुरुत्ववर्जैवेति तत्स्पर्धया स्वयं त्यागं मा कार्षीत् 'परदानस्तुतिं' कुर्वतः कथं न लज्जापीत्यर्थः ॥

॥ ९२० ॥ परिभोगदृक्षा नवेवधूरिव तेषां नवसंगमालसा लक्ष्मीः । 'इतरा 'लब्ध्वा श्रियं न कामलीलापरान्नेन कारणेन॥ हता गता पलायिता । नवग्रहणेन कृपणेषु काकनालीयोपनतत्वमाह ॥

॥ ९२१ ॥ तिष्ठन्त्येव कृपणा अस्पृशन्तः पार्श्वगोचरां लक्ष्मीं

परमत्थ-पाविय-गुणा गरुयंपि हु पलहुयंव मण्णन्ति।
तेण सिरीएँ विरोहो गुणेहि णिक्कारणं ण उण ॥ ९२२ ॥
भुमया भङ्गाणत्तावि सुउरिसं जं ण तुरियमल्लियइ।
तं मण्णे धावन्ती रहसेण सिरी परिक्खलइ ॥ ९२३ ॥
णणु णासमणवलम्बा एइच्चिय सावि सुउरिसाभावे।
देव्व-वसा तेण सिरीएँ होइ णासंसिओ विरहो ॥ ९२४ ॥

परिहारवतीमिव प्रिया मलिनच्छाया निरीक्षमाणाः ॥ परिहारवती
१ रजस्वला ॥

॥ ९२२ ॥ परमार्थप्राप्तगुणास्तांगेव[1] तृणवल्लघ्वीं मन्यन्ते । तेन
श्रियो विरोधो गुणेषु निष्कारणो न पुन ॥ गुणिनः श्रियमुपे-
२ क्षन्ते न तु सा तानित्यर्थः ॥

॥ ९२३ ॥[2] भ्रूभङ्गमात्रेणाज्ञापितापि सुपुरुष यन्न त्वरितमालीयते
तन्मन्ये धावन्ती रभसेन श्रीः परिस्खलति[3] ॥

॥ ९२४ ॥ ननु निश्चित कृत्वा नाशम् अनालम्बा अनाश्रया[4]
एत्येव प्राप्नोत्येव सापि सुपुरुषाभावे सति । दैववशात्तेन श्रिये भवति
३ न त्वाशसितो विरहो वियोग ॥ यदि हि श्रीः सुपुरुषवियोग-
माशसेत् अभाव एव तस्याः स्यात् आलम्बनाभावात् । न ह्यसत्पुर-
पास्तस्या [आलम्बन तेषामा] लम्बनाभासत्वात् ॥

---

[1] MH °गुणास्तन स्व. [2] MH °ज्ञाप्ता°. [3] MH. °स्खलिता. [4] MH. आश्रया for अनाश्रया which emendation is purely conjectural

धम्म-पमूआ कह होउ भयवई वेस-सज्जणा लच्छी ।
ताओ अलच्छिओच्चिय लच्छि-णिहा जा अणज्जेसु ॥ ९२५॥
जा विउला जाओ चिरं जा परिहोउज्जला ओ लच्छीओ ।
आयारधराणच्चिय ताओ ण उणो अ इयराण ॥ ९२६ ॥
अवणेइ देइ अ गुणे दोसे णूमेइ देइ य पयासं ।
दीसइ एस विरुद्धोव्व कोवि लच्छीए विण्णासो ॥ ९२७ ॥
समरे धारा-गोयरमुवेन्ति जे वइरि-मण्डलग्गाण ।
ते तम्मि बला खलु णिवसिरीएँ लच्छीऍ छिप्पन्ति ॥९२८ ॥

॥ ९२५ ॥ धर्मप्रसूता सती कथं भवतु भगवती द्वेष्य [¹सज्जना] सज्जनद्वेषिणी लक्ष्मीः । ता अलक्ष्म्य एव लक्ष्मीनिभा या अनार्येषु ॥

॥ ९२६ ॥ या विपुला याश्च चिरं याः परिभोगोज्ज्वला लक्ष्म्यः आचारपराणामेव ता न पुनरितराणाम्² ॥

॥ ९२७ ॥ अपनयति गुणान् ददाति च दोषान् । दुर्जनविषये तु गुणान् ददाति दोषान् आच्छादयति । दोषान् ददाति च प्रकाशं
२ प्रकटम् । इति योऽयं दृश्यते एष विरुद्ध इव कोपि लक्ष्म्या विन्यासः विविध आचारः ॥

॥ ९२८ ॥ समरे धारागोचरमुपयन्ति ये वैरिमण्डलाग्राणां ते तस्मिन् बलात्खलु निवसनशीलया लक्ष्म्या स्पृश्यन्ते ॥ अभ्युपगम-
३ वादोयं नेन [ न ] पूर्वविरोधः ॥

---

¹ MII. द्वेष्यसज्जनद्वेषिणी, thus leaving out the letters 'सज्जना'.
² So MII. ( for [illegible] )

अप्फोडणाहिघाय-च्छलेण चिरमेक्क-भुय-कआसङ्घा ।
विणिवारेन्तिव वीयं भुयंपि दप्पेण सप्पुरिसा ॥ ९२९ ॥
अण्णोण्णं लच्छि-गुणाण णूण पिसुणा गुणाच्चिय ण लच्छी ।
लच्छी अहिलेइ गुणे लच्छिं ण उणो गुणा जेण ॥ ९३० ॥
लच्छी लयाएँ मूलं गुणात्ति एयं परिट्ठियंच्चेय ।
जेण अहो गमणंचेय ताण परिवड्ढणे तीए ॥ ९३१ ॥
अयसं दाऊण विसंठुलाण सज्झस-विसूरियव्वाण ।
पढमंचिय जीएँ पयाइं महुमहेच्चेअ खलियाइं ॥ ९३२ ॥

॥ ९२९ ॥ [1]करास्फोटनाभिघातच्छलेन चिरम् [2]एकभुजकृताशसाः सन्तो विनिवारयन्तीव द्वितीयं दर्पेण भुजमपि का गणनान्यत्र सत्पुरुषाः ॥

॥ ९३० ॥ अन्योन्यं लक्ष्मीगुणानां केवलं पिशुना गुणा एव न [ लक्ष्मीः ]। लक्ष्मीरभिलीयते गुणान् लक्ष्मीं न पुनर्गुणाः येन यस्मात्॥ प्रायेण गुणिना लक्ष्मीर्दृश्यते न तु श्रीमता गुणाः इति लक्ष्मीं गुणा क्षिपन्ति न तु लक्ष्मीर्गुणानित्यर्थः ॥

॥ ९३१ ॥ लक्ष्मी एव लता तस्या मूलं गुणा इत्येतत् परिष्ठितमेव येन यस्माद् अधोगमनम् [ एव ] तेषां भवति परिवर्धने सति तस्या लक्ष्म्याः ॥ लतावृद्धौ हि मूलान्यधस्ताद्गच्छन्ति ॥

॥ ९३२ ॥ अयशो दत्त्वा [3]विसंष्ठुलानां साध्वसविसूरयितव्यानां प्रथममेव यया पदानि मधुमथ एव स्खलितानि स्थापितानि हरावेवास्पदं कृतमित्यर्थः ॥

[1] MH, करास्फोटनाभि°. [2] MH, °कृतमभावनाशंसा for °कृताशंसा.
[3] MH, °संष्ठु°.

सा चडुला कह णु गुणुज्जलेसु लच्छी अकूणियं कुणउ ।
चिर-यालोसिय-पायाल-तिमिर-संवाहियं दिट्ठिं ॥ ९३३ ॥
जीए समारम्भोच्चिय लच्छी पढम-ट्ठियावि विवलाइ ।
अण्णा तीएच्चिय पत्थणाएँ कह णाम संघडइ ॥ ९३४ ॥
दुक्खाभावो ण सुहं ताइँवि ण सुहाइँ जाइँ सोक्खाइँ ।
मोत्तूण सुहाइँ सुहाइँ जाइँ ताइंचिय सुहाइं ॥ ९३५ ॥

॥ ९३३ ॥ सा चटुला कथं नु गुणोज्ज्वलेषु लक्ष्मीरकूणिताम् [1]उन्मीलितां करोति । न कथंचित् । चिरकालोषितपातालतिमिरसंवाहितां दृष्टिम् ॥ गुणिनां श्रियावलोकनं [न भवति ।] तत्पातालतिमिरोपहतनयनतायाः[2] [। एवं सत्यपि] तया पूर्वमेव दुष्टदैत्यादित्यागेन गुणवत्येव भगवति नारायणे वसतिः कृता तेन गुणवत्पक्षपातोऽस्याः स्फुटः ॥

॥ ९३४ ॥ [3]यस्याः समारम्भ एव लक्ष्मीः [4]प्रथमस्थितापि शरीरशोभा विपलायते [5]अन्या तयैव प्रार्थनया कथं नाम संघटताम् ॥ श्रीः शोभा लक्ष्मीश्च । प्रार्थनया च लक्ष्मीमिच्छतां शोभालक्षणायाः श्रियो नाशं दृष्ट्वा उत्तरापि *लक्ष्मीलक्षणापि श्रीः* पलायत इत्यर्थः ॥

॥ ९३५ ॥ मोक्षावाप्तिसुखप्रशंसाम् इतरनिन्दया आह । दुःखाभावस्तावन्न सुखमिति स्थितं ब्रह्मसिध्यादौ । तान्यपि न सुखानि यानि दुःखानि दुःखमिश्रितानि वैषयिकाणि । यथोक्तम् । परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च सर्वम् [एव] दुःखं विवेकिनामिति [6]पतञ्जलिना ।

---

[1] MH. अनुन्मीलितां. [2] MH. °नयनात्मना for °नयनतायाः [। एवं सत्यपि] तया. [3] MH. यया for यस्याः. [4] MH. प्रथमोस्थिता अपि for प्रथमस्थितापि. [5] MH. अनया. [6] MH. पातं°.

सुह-सङ्ग-गारवेच्चिय हवन्ति दुक्खाइँ दारुणयराइ ।
आलोअकरिसेच्चियँ च्छाया बहलत्तणमुवेइ ॥ ९३६ ॥
सुह-सङ्गो सुह-विणिवत्तिएक्क-चित्ताण अविरयं फुरइ ।
अङ्गुलि-पिहियाण रवो अव्वोच्छिण्णोव्व कण्णाण ॥ ९३७ ॥

तस्मान्मुक्त्वा सुखानि वैषयिकाणि सुखानि नित्यानन्दरूपाणि मोक्षलभ्यानि । एकत्वेप्यौपाधिको भेदव्यवहारः । उपाधयस्तु मुच्यमाना जीवात्मानः । अथ वा सुखानि मुक्त्वा [2]सुखगौरवमाछिद्य यान्ययत्नोपनतानि तान्येव सुखानि बोद्धव्यानि । यथोक्तम् ।

अकृत्वा [3]परसंतापमगत्वा खलनम्रताम् ।
अविधाय पर दैन्यं यदल्पमपि [4]तद्बहिति ॥

॥ ९३६ ॥ सुखसङ्गगौरवेणैव दुःखानि भवन्ति दारुणतराणि । तथा हि आलोकोत्कर्ष [5]एव च्छाया सफलत्वमुपेति ॥ यावद्यावत्सु[6]खासक्त्यतिशयो भवति तावत्तावदल्पेनैव दुःखेन बाधा संविद्यते । गहनो[7] वैषयिकसुखभोग[8] इत्यर्थः ॥

॥ ९३७ ॥ सुखसङ्ग. सुखविनिवर्तितैकचित्तानाम् अविरतं स्फुरति । अधिकतरामिति च पाठ. । अङ्गुलिपिहितानां [9]रवोऽव्युच्छिन्न इव कर्णानाम् ॥ निवर्तिते [10]वैषयिके सुखे महायाससाध्ये[11] नित्यं सुखमुदासीनैर्मुक्तात्मभिरनुभूयते अङ्गुलिपिहितकर्णैरिव । नित्यशब्द इत्यर्थः ॥

---

[1] MH. °स्योपा° for°प्यौपा°. [2] MH. is corrupt here. It reads सुखगवाछिद्ययान्यवत्नोपनतानि. The emendation is conjectural, [3] MH. °मितान गत्वा खलनम्रताम् for °मतापमगत्वा खलनम्रताम्. [4] MH. तद्वदिति. [5] MH. °त्कर्षेव च्छा°. [6] MH °सुखासक्त्यति°. [7] MH. गहने. [8] MH. °सुखाभाग. [9] MH. रवोविच्छिन्न. [10] MH. वैषेयिक [11] MH. °सुमाध्येन for °साध्ये.

दूमिज्जन्ताइँवि सुहमुवेन्ति गरुयाण णियय-दुक्खेहिँ ।
रस-बन्धेहिँ कईणव विइण्ण-करुणाइँ हिययाइं ॥ ९३८ ॥
अण्णण्णाइं उवेन्ता संसार-वहम्मि णिरवसाणम्मि ।
मण्णन्ति धीर-हियआ वसइ-ट्ठाणाइँव कुलाइं ॥ ९३९ ॥
ससिएहिँचिय लोओ दुक्खं लहुएइ दुक्ख-जणिएहिँ ।
आयास-कएहिँ करी आयासं सीअरेहिँव ॥ ९४० ॥
पहरिस-मिसेण वाहो जं बन्धु-समागमे समुत्तरइ ।
वोच्छेय-कायराइं तं णूण गलन्ति हिययाइं ॥ ९४१ ॥

॥ ९३८ ॥ दूयमानान्यपि सुखमुपयन्ति विवेकितया गुरूणां निजकदुःखैराध्यात्मिकादिभिः [1]रसबन्धनेव कवेर्वितीर्णकरुणानि हृदयानि॥

॥ ९३९ ॥ [2]अन्यान्यानि अन्यानि अन्यानि उपयन्तः प्राप्नुवन्तः संसारपथे निरवसाने मन्यन्ते धीरहृदया वसतिस्थानानीव कुलानि ॥
३ [3]तत्तत्कर्मवशगतेषु ब्राह्मणादिकुलेषु जायमानाः प्रोषितवसतिस्थानानीव कुलानीति मन्यन्ते । न [4]स्वहं कुलजो ममैतत्कुलमित्यहंकारममकारग्रहेण युज्यन्त इत्यर्थः ॥ संसारे न निमज्जन्तीति[5] यावत् ॥

॥ ९४० ॥ श्वसितैरेव लोकः प्राकृतो दुःखं लघयति दुःखजनितैः । आयासकृतैः[6] करी आयासं शीकरैरिव ॥ हस्तिमूर्खाः पामरा
३ इत्यर्थः ॥

॥ ९४१ ॥ प्रहर्षमिषेण बाष्पो यद् बन्धुसमागमे समुत्तरति व्युच्छेदो वियोगस्तत्कातराणि सन्ति तन्नूनं [7]गलन्ति हृदयानि ॥

---

[1] MH. °वदनेव वितीर्ण°. [2] MH. अन्योन्यान्याप्नुव° for अन्यान्यानि अन्यानि अन्यानि उप°. [3] MH तत्कृतकर्मवशगतेषु°. [4] MH· नत्वहं for न स्वहं. [5] MH. om. इति. [6] MH. °करिः (=°करैः) for °कृतैः. [7] MH. गलितहृदयानि.

मूढ सिढिलत्तणं ते सणेह-वासेण कह णु बद्धस्स ।
वाढं गाढयराअइ जो इर मोत्तुं तणन्तस्स ॥ ९४२ ॥

होऊणवि हन्त णिरन्तराइँ दूरन्तराइँ जायन्ति ।
उम्मोइय-रसणन्तोवमाइँ घडियाइँ लोयस्स ॥ ९४३ ॥

पढमं ण गुणा गुण-हेउणो परं ते तओ सह गुणेहिं ।
संपइ ताण गुणच्चेअ नवर हा ते उण ण सन्ति ॥ ९४४ ॥

॥ ९४२ ॥ हे मूढ संसारनिगडनिबद्ध शिथिलत्वं स्वातन्त्र्यं ते तव स्नेहपाशेन कथं [1]नु बद्धस्य । न कथंचित् । बाढं गाढतरायते यत् किल मोक्तु तृणं तस्य । गृह्णत इति शेषः ॥ तैलादिना स्नेहेन युक्तस्तृणादिग्रन्थिर्दुःखेन विमुच्यते यथा यथा स्नेहयुक्तपुत्रादिपाश इत्यर्थः ॥

॥ ९४३ ॥ भूत्वापि हन्त निरन्तराणि दूरान्तराणि जायन्ते [2]उन्मोचितरशनान्तोपमानि घटितानि लोकस्य ॥ संबन्धजातानीति शेषः ॥

॥ ९४४ ॥ प्रथमं बाल्योपक्रमे तावन्न गुणा दृश्यन्ते । नापि गुणहेतवः अध्ययनादयः । परं ते हेतवो दृश्यन्ते । [3]ततः सह गुणैस्ते हेतवो दृश्यन्ते । संप्रति तेषां गुणा एव दृश्यन्ते व्यतीतशरीराणाम् । नवरि हा ते उण न सन्ति अनन्तरं कष्ट तेपि न सन्ति भूयसि काले गते ॥ पुनःशब्दः अपिशब्दस्यार्थे । [4]नवरेति पाठे केवलमित्यर्थः । धिक् संसाराधमम् इति यावत् ॥

---

[1] MH न for नु. [2] MH. उन्मावितरस°. [3] MH. ततो सह.
[4] MH. नवरिति.

काल-वसा णासमुवागयस्स सप्पुरिस-जस-सरीरस्स ।
अट्ठि-लवायन्ति कहिंवि विरल-विरला गुणुग्गारा ॥ ९४५ ॥
थिर-वासणा-समुत्था दोसा बन्धाय णीय-चरियाण ।
सप्पुरिसाणं च गुणा मोहाय न जेहिं विरमन्ति ॥ ९४६ ॥
एस विराओ हिययं जं रमइ जहागएसु विहवेसु ।
णिब्भच्छणं तु लच्छीऍ णवर थिर-मच्छरो राओ ॥ ९४७ ॥
सोच्चेय किं ण राओ मोत्तूण बहु-च्छलाइं गेहाइं ।
पुरिसा रमन्ति वद्धुज्झरेसु जं काणणन्तेसु ॥ ९४८ ॥

॥ ९४५ ॥ कालवशेन नाशमुपागतस्य[1] सत्पुरुषयशःशरीरस्य अस्थिलवायन्ते कस्मिन्नपि विरलविरला गुणोद्गाराः ॥ यथा नष्टस्य शरीरस्य क्वचित्प्रदेशे अस्थिलवाः स्मारका भवन्ति तथा यशसो गुणलेशा इत्यर्थः ॥

॥ ९४६ ॥ स्थिरवासनासमुत्था दोषा बन्धाय नीचचरितानाम् । सत्पुरुषाणां च गुणा मोहाय न भवन्ति[2] । किं तर्हि कुर्वन्ति । यैरिति विरमन्ति ॥ [3]विरसमयसंसारदुःखमोक्षं कुर्वन्तीत्यर्थः । अनादिकालप्रथितत्वेन[4] स्थिरत्वं वासनायाः । दोषा रागादयः । बन्धः संसारः । गुणाः करुणादयः ॥

॥ ९४७ ॥ एष एव विरागो रागाभावः हृदयं यद् रमते यथागतेषु अप्रयत्नोपनतेषु विभवेषु । निर्भर्त्सनं तु लक्ष्म्याः केवलं स्थिरमत्सरो रागः ॥

॥ ९४८ ॥ स एव किं न रागः मुक्त्वा बहुच्छलानि गृहाणि

[1] MH. °मुपग°. [2] MH. भवति. [3] MH. विरसन्ते ग्मारदुःखे मोक्षं.
[4] MH. °प्रथितत्वेन.

किं व सरूय-वरोच्चिय सेवा-निंदा-वरो व्व अह मग्गो ।
जं महइ विन्झ-वण गोयराण लोओ पुलिन्दाण ॥ ९४९ ॥

सरियाओ अणेय-विहङ्गमाओ तल-णिम्मलाइं य वणाइं ।
मायङ्ग-कलह -मुहला गिरिणो य रइं विरल्लन्ति ॥ ९५० ॥

सीलेण जइवि विमलो तहवि हु मा दुग्गयं जणं च्छिवसु ।
कालन्तर-णिव्वडियं वसइच्चिय मङ्गुलं तम्मि ॥ ९५१ ॥

को तेसु दुग्गयाणं गुणेसु अण्णो कयायरो होइ ।
अप्पावि णाम णिव्वेय विमुहयं जेसु दावेइ ॥ ९५२ ॥

पुरुषा रमन्ते गिरिकन्दरेषु [यत्] काननान्तेषु च हृद्येषु रमन्ते[1] ॥
२ [2]बद्धोज्झरेष्विति पाठे बद्धनिर्झरेष्वित्यर्थः ॥

॥ ९४९ ॥ किं वा स्वरूपपर एव अभिधेयमात्रपर्यवसित एव सेवानिन्दापरो वा अथ मार्गः यं शंसंति विन्ध्यवनगोचराणां
३ लोकः पुलिन्दानाम् ॥ वनवासमात्रं मोक्षोपायः प्राणिवधनद्धगर्वेषु पुलिन्देष्वपि भवेत् । किं तर्हि वीतरागत्वम् । तच्च गृहेष्वन्यत्र
२ वास्त्वित्यर्थः ॥

॥ ९५० ॥ सरितः अनेकविहंगमास्तलनिर्मलानि[3] च वनानि मातङ्गकलभमुखरा गिरयश्च रतिं विस्तारयन्ति ॥ अथ वा अरतिं विस्तारयन्ति [इति] छेदे काका नेयम् ॥

॥ ९५१ ॥ शीलेन यद्यपि विमलस्तथापि[4] खलु मा दुर्गतियुक्तं जनं स्प्राक्षीः । कालान्तरनिर्वृत्तं[5] वसत्येव मङ्गुल्यं पापं तस्मिन् ॥

॥ ९५२ ॥ कस्तेषु दुर्गतानां गुणेषु अन्यः कृतादरो भवति ।

[1] MH. रमंतो. [2] MH. बद्धोद्धारे°. [3] MH. °मास्थल°
[4] MH. om. °पि. [5] MH. °निवृत्तं.

इरइ परिहीण-विहवस्स णूण णिय-पणइणीवि अप्पाणं ।
सव्वङ्ग्मसंपुण्णस्स घडइ किं जामिणी ससिणो ॥ ९५३ ॥
हियय कहिंपि णिसम्मसु किंत्तियमासा-हओ किलिम्मिहिसि ।
दीणोवि वरं एक्कस्स ण उण सयलाएॅ पुहवीए ॥ ९५४ ॥
अच्छउ ता विहलुद्धरण गारवं कत्थ तं अगरुएसु ।
अप्पाणयस्सवि पियं इयरा काउं ण पारन्ति ॥ ९५५ ॥

आत्मापि नाम निर्वेदविमुखतां येषु दर्शयति ॥ दुर्गतियुक्तं स्वयमेवात्मानं विरूपकं मन्यन्ते । कथं तत्रान्यस्य आदरबुद्धिर्भविष्यतीत्यर्थः । अवश्यकर्तव्यनित्यनैमित्तिककर्मकरणावश्यभर्तव्यभरणसामान्यमात्मपि यत्र न निर्वहति तत्र गुणवत्यपि [1]पूर्वजन्मपापचयकल्पनेत्यभिप्रायः ॥

॥ ९५३ ॥ हरति नार्पयति परिहीनविभवस्य नूनं निजप्रणयिन्यपि स्ववधूरपि आत्मानम् । तथा हि सर्वाङ्गं कृत्वा अपरिपूर्णस्य घटते शोभते किं यामिनी शशिनः ॥

॥ ९५४ ॥ हे हृदय कस्मिन्नपि अचिन्त्यशक्तिके भगवति ब्रह्मणि निशम्यतां [2]विश्रान्तिः क्रियाताम् । कियत् [3]आशाहतः क्लान्तिमनुभवष्यसि । यतो दीनोपि वरम् एकस्य न पुनः सकलायाः पृथिव्याः ॥

॥ ९५५ ॥ आस्तां तावद्विहलोद्धरणगौरवम् । कुतस्तद् अगुरूणाम् ॥ आत्मनोपि [4]हितमितराः कर्तुं न पारयन्ति ॥ संसारक्लेशपरिहरणादिहितमशक्यं नैः कर्तुम् ॥

---

[1] MH. °न्त°. [2] MH. om. the visarga. [3] MH. °सम्पूर्ण°.
[4] So MH. !

गाढ-मय-मूढ-हियया लहिऊण धणं गुणं च जं किंपि ।
कह ते भरिहिन्ति परं अप्पावि हु जाण पम्हुसइ ॥ ९५६ ॥
जह परिययम्मि लोओ तह भुज्जन्तोवि दुक्करं कोवि ।
पाणि-सिसिराइं पाणम्मि अण्णहा होन्ति सलिलाइं ॥ ९५७ ॥
भूरि-गुणा विरलच्चिय एक्क-गुणोवि हु जणो न सव्वत्थ ।
णिद्दोसाणवि भद्दं पसंसिमो विरल-दोसंपि ॥ ९५८ ॥
सामण्ण-सुन्दरीणं विब्भममावहइ अविणओच्चेय ।
धूमोच्चिय पज्जालियाहि बहु-मओ सुरहि-दारूण ॥ ९५९ ॥

॥ ९५६ ॥ गाढमदमूढहृदया लब्ध्वा धनं गुणं वा यं कमैपि कथं ते स्मरिष्यन्ति परम् आत्मापि खलु येषां प्रविस्मरति ॥ खलो हि विद्याधनादिमदयुक्तं क्षीब इव आत्मानमपि विस्मरति ॥

॥ ९५७ ॥ यथा प्रथमपरिचये लोकः [*]उपभुज्यमानः परिशील्यमानोपि[1] दुष्करं तथैव[*] । पाणिशिशिराणि पानेऽन्यथा भवन्ति सलिलानि ॥

॥ ९५८ ॥ भूरिगुणा[2] विरला एव । एकगुणोपि खलु जनो न सर्वत्र । [3]निर्दोषाणामपि भद्रम् । प्रशसामः अल्पदोषमपि[3] ॥ गुणोत्र यः कश्चिद्धर्मः परोपकारपर्यवसायी विवक्षितः । भद्रोप्येवम् ॥

॥ ९५९ ॥ सामान्यसुन्दरीणां वेश्यानां विभ्रमं विलासम् आवहति अविनय एव केशाकर्षणादिः । धूम एव प्रज्वालितानां बहुमतो भवति सुरभिदारूणाम्[4] अगरुप्रभृतीनाम् ॥ सदोषाणां दोषा एवालंकारा दृष्टा इति दुर्जनानां परोपतापित्वमनुगुणमित्यर्थः ॥

[1] MH. om. अपि. [2] MH. °गुणो. [3] MH. निर्दोषाणामपि मध्ये भद्रं प्रशसामः अल्पदोषमपि. [4] MH. °दारुणा°.

थोवागय-दोसच्चिय ववहार-वहम्मि होन्ति सप्पुरिसा ।
इहरा णीसामण्णेहिं तेहिं कह संगयं होइ ॥ ९६० ॥
उक्करिसोच्चेय ण जाण ताण को वा गुणाण गुण-भावो ।
सो वा पर मुचरिय-लङ्घणेण ण गुणत्तणं तहवि ॥ ९६१ ॥
णवरं दोसा तेच्चेय जे मयस्सवि जणस्स सुव्वन्ति ।
णज्जन्ति जियन्तस्सावि जे णवर गुणावि तेच्चेय ॥ ९६२ ॥
ववहारेच्चियँ छायं णिएह लोयस्स किं व हियएण ।
तेउग्गमो मणीणवि जो बाहिं सो ण भङ्गम्मि ॥ ९६३ ॥

॥ ९६० ॥ स्तोकागतदोषा एव व्यवहारपथे भवन्ति सत्पुरुषाः । [1]इहरा इतरथा निःसामान्यैस्तैः सह कथं [2]संगमः समागमो [2]भवतु
३ सामान्यजनानामित्यर्थात् ॥ इयराणमसामण्णेहीति तु पाठे [3]इतराणामसामान्यैस्तैः सहेत्यर्थः । अत्रापि अन्यथा इति अर्थाद्गम्यते ॥

॥ ९६१ ॥ उत्कर्ष एव न येषां तेषां [को वा] गुणानां गुणभावः । अथ वा परसुचरितलङ्घनेन [न] गुणत्वं कथमपि ॥ [4]तहवेति पाठे
३ तथैवेत्यर्थः । उत्कर्षः साधूपकारपयवसायित्वम् । चरितस्य लङ्घनं न्यक्कारः ॥

॥ ९६२ ॥ केवलं दोषास्त एव ये मृतस्यापि जनस्य गृह्यन्ते । ज्ञायन्ते जीवतोपि ये केवलं गुणा अपि त एव ॥

॥ ९६३ ॥ व्यवहार एव च्छायां पश्यत लोकस्य । किं वा हृदयेन । तेजउद्गमो मणीनां यो बहिः स न भङ्गे सति मध्ये दृश्यते ॥

[1] MH. इतरा. [2] MH. समागमः सगमो भवतु. [3] ६० MH. !
[4] MH. तहवेपाठे, Should it be तहवीति पाठे ?

सम-गुण-दोसा दोसेक्क-दंसिणो सन्ति दोस-गुण-वामा ।
गुण-दोस-वेइणो णत्थि जे उ गेण्हन्ति गुण-मेत्तं ॥ ९६४ ॥
दीसइ सामायन्तोव्व कोवि हियएण णिम्मलो अह य ।
हरियंचिय चूय-फलं गयं च परिणाम-परमत्थं ॥ ९६५ ॥
दीसन्त-णिम्मलो जइवि कोवि कज्जे जणो समो तहवि ।
पिङ्गंपि केसरं कुङ्कुमस्स राएण सामण्णं ॥ ९६६ ॥

किंथ हिअएणेत्ति पाठे किमत्र हृदयेन साक्षान्निरूपितेनेत्यर्थः । यादृशं बहिश्चरितं बहिर्दृश्यते तादृशं न मनसो नैर्मल्यं दुराचारे संसारे इत्यर्थः ॥

॥ ९६४ ॥ समदोषैर्गुणैः पशुप्रायाः दोषैकदर्शिनः अतिदुर्जनाश्च सन्ति । तथा सन्ति दोषगुणानां वामा अननुकूलाः । सर्वद्वेषिण इत्यर्थः । गुणदोषवेदिनश्च* मध्यस्था न सन्ति ये गृह्णन्ति गुणमात्रम् दोषं तु त्यजन्ति राजहंसप्रायाः ॥ राजहंसः किल जलसमिश्रं क्षीरं निष्कृष्य पिबति जलं तु त्यजति ॥

॥ ९६५ ॥ दृश्यते श्यामायमान इव कोपि[1] उत्तमप्रकृतिर्हृदयेन निर्मलस्तथापि । कचित् अथवेति[2] पाठः । हरितमेव चूतफलम् अथ च गतं च परिणामपरमार्थं[3] पाकत्वम्[4] ॥ विदुषो लोकसामान्यव्यवहारावसरे तदनुसारेण व्यवहरमाणस्य[5] श्यामायमानत्वेपि नास्ति विरसत्वमित्यर्थः ॥

॥ ९६६ ॥ दृश्यमाननिर्मलो यद्यपि कोपि कार्ये [ जनः समः ]

---

[1] MH. का° for को°, [2] So MH. [3] MH. परिणामं पर°.
[4] MH. पाकतत्वम्. [5] MH. व्यवहार°.

सच्चवियासयल-गुणंपि सज्जणं सुवुरिसा पसंसन्ति ।
पडिबन्ध-णूमियद्धं को वा रयणं वियारेइ ॥ ९६७ ॥
सोहइ अदोस-भावो गुणोव्व जइ होइ मच्छरुत्तिण्णो ।
विहवेसुंव गुणेसुवि दूमेइ ठिओ अहंकारो ॥ ९६८ ॥
जेण गुणग्घवियाणवि ण गारवं घण-लवेण रहियाण ।
तेण विहवाण णमिमो तेणंचिय होउ विहवेहिं ॥ ९६९ ॥

जनमात्रसमस्तथापि । कार्येण न समस्तथापीति कचित्पाठः । कार्यम् अनिर्मलं तस्य लक्ष्यत इत्यर्थः ॥ पि नं केशरं कुङ्कुमस्य मूलप्रदेशे तथापि पिष्टं सत्[1] रागेण सामान्यं प्रान्तभागे तुल्यम् ॥ अन्यथाप्रतिभासमानानामपि प्रकृत्यनुसारि पदार्थानां कार्यमित्यर्थः ॥

॥ ९६७ ॥ परिदृष्टासकलगुणमपि सज्जनं[2] साधुजनं पुरुषाः प्रशंसन्ति । प्रतिबन्धस्थगितार्धं को वा रत्नं विदारयति भिनत्ति उपहसति वा ॥ प्रतिबन्धः प्रतिघातः । नूमिअम् आच्छादितम् ॥

॥ ९६८ ॥ शोभते अदोषभावोपि गुण इव यदि भवति मत्सरोत्तीर्णः । विभवेष्विव गुणेष्वपि दुनोति दूयते[3] स्थितः अहंकारः पराधिकारान्महत्त्वाभिमानलक्षणः ॥

॥ ९६९ ॥ येन यस्माद्गुणार्धितानामपि न गौरवं धनलवैः[4] रहितानाम् तेन तस्माद्धेतोर्विभवान्[4] प्रणमामः । तेनैव कारणेन भवतु विभवैः ॥ कृतं विभवैर्न किंचिद्विभवैरिति विभवनिन्दापर्यवसानम् ॥

---

1 MH. सद्रोगेण for सर्वं रागेण. 2 MH. सज्जनं. 3 MH दूयति. 4 MH. °भवान् for °भवान्.

दविणोवयार-तुच्छावि सज्जणा एत्तिएण धीरेन्ति ।
जं ते णिय-गुण लेसेहिँ देन्ति काणंपि परिओसं ॥ ९७० ॥
दूमन्ति सज्जणाणं पम्हुसिय-दसाण तोस-कालम्मि ।
दाणायर-संभम-दिट्ठ-पास-सुण्णाइं विलियाइं ॥ ९७१ ॥
सइ जाढर-चिन्तायड्ढियंव हियय अहो-मुहं जाण ।
उद्धुर-चित्ता कह णाम होन्तु ते सुण्ण-ववसाया ॥ ९७२ ॥

॥ ९७० ॥ द्रविणकृतेनोपकारेण उपचारेण वा तुच्छा अपि सज्जना एतावता धैर्यमायान्ति यत् ते निजगुणलेशैर्ददति केषामपि २केभ्योपि परितोषम् ॥

॥ ९७१ ॥ दुन्वन्ति खेदयन्ति सज्जनानां विस्मृतदशावसान-काले परोपकारोल्लासविस्मृतदशावसानसमये दानादर [सम्भ्रम] दृष्टपा-२र्श्वशून्यानि वँलितानि[1] व्रीडितानि वा । पाठद्वयदर्शनात् ॥ किल उदारप्रकृतयो दौर्गत्यावस्थायामपि अर्थिन्युपगते परोपकाररसरभसेन अर्थाभाव विस्मृत्य धनदानवुध्या पार्श्वमवलोकयन्ति । ततो धनशून्यं ६तदृष्ट्वा लज्जन्त इत्यर्थ ॥

॥ ९७२ ॥ [ [2]सदा जाठराचिन्ताकृष्टमिव हृदयम् अधोमुखं येषाम् उत्तुङ्गचित्ता· कथ नाम भवन्तु ते ] [3]अवँसन्नपरोपकारसमा-३रम्भा ॥ शून्यव्यवसाया इति पाठे निष्फलचेष्टा इत्यर्थः ॥

---

[1] MH. वलितानि, which is obviously a blunder for वलितानि Do has a marginal note on its reading विलियाइं, viz, वलियाइं पा. ( =वलियाइं पाठान्तरम्)
[2] MH. omits the portion included within brackets, i. e, nearly the whole commentary on the stanza, [3] MH. अवसनपरोप°.

दिण्णं पुरा जहिच्छं तओ अदेन्तेहिँ संठियमभावा ।
गहिअं च पराहिन्तो तओ अ ओ लोह-पणएण ॥ ९७३ ॥
लोए अमुणिय-सारत्तणेण खण-मेत्तमुव्वियन्ताण ।
णियय-विवेअ-द्दविया गरुयाण गुणा पयट्टन्ति ॥ ९७४ ॥
गेण्हउ विहवं अवणेउ णाम लीलावहे वय-विलासे ।
दूमेइ कह णु देव्वो गुण-परिउट्ठाइँ हिययाइं ॥ ९७५ ॥
अघडिय-परावलम्बा जह-जह गरुयत्तणेण विहडन्ति ।
तह-तह गरुयाण हवन्ति वद्ध-मूलाओ कित्तीओ ॥ ९७६ ॥

॥ ९७३ ॥ दत्तं पुरा आदौ यथेच्छम् इच्छानतिक्रमेण[1] विभवकाले । ततोऽपि[2] ददता [सं]स्थितम् अवश्यकर्तव्यकुटुम्बभरणार्थादि [3]धनादतिरिक्ताभावकाले[3] अभावाद्दानयोग्यस्य । सोढं च परावृत्तम् उपनतानामकृतार्थानां गमनम् ततोऽपि च[3] दैवगत्या कुटुम्बभरणार्थार्थाभावे लोभार्थाः खलप्रणतय: सोढा महाजनेन । इति धिक् संसारम् ॥

॥ ९७४ ॥ लोके अज्ञातसारत्वेन क्षणमात्रम् 'उद्विजमानानामपि निजकविवेकस्यार्पिताः सन्तो गुरूणां गुणाः प्रवर्तन्ते ॥

॥ ९७५ ॥ ['गृह्णातु विभवम् अपनयतु नाम लीलावहान् व्ययविलासान् । दुनोति कथं नु दैवं गुणपरितुष्टानि हृदयानि ॥ ]

॥ ९७६ ॥ अघटितपरावलम्बा अनाश्रितपराधीनत्वाः सन्तो[6]

---

[1] MII. °क्रमेण. [2] MII. °कालि° for °कालिकि°. [3] MII. च for च. [4] MII. °[illegible]. [5] MII. omits all commentary on this couplet, though it is found in Do J K P. [6] So MII.

आगम-लम्भे वय-परिणईएँ भङ्गेसु धण-विलासाण ।
थोवमसमञ्जसाइँवि हिययाइँ वहन्ति परिणामं ॥ ९७७ ॥
ण सहन्ति णिय-गुणा इर पुरओ गरुयाण इय विइन्तन्ता ।
णीयाहिगमे लहुआ गुणाण भावच्चिअ हरन्ति ॥ ९७८ ॥
असलाहणे खलुच्चिय अलिय-पसंसाएँ दुज्जणो विउणं ।
अपयत्त-गुणे सुयणो दुहावि पिसुणत्तणं लहइ ॥ ९७९ ॥

३यथायथा गुरुत्वेन विघटन्ते सर्वसङ्गत्यागं[1] कुर्वन्ति तथातथा[2] गुरूणां भवन्ति बद्धमूलाः कीर्तयः एकान्तनिवासिनां सताम् ॥

॥ ९७७ ॥ आगमलम्भे उपनिषदादिशास्त्रपरिचये वयःपरिणत्या भङ्गे चँ स्तँनविलासाना स्तोकम् असमञ्जसानि हृदयानि घनम-
३त्तानामपि वहन्ति माहात्म्यम् ॥ स्तोक माहात्म्यं वहन्तीति संबन्धः ॥

[॥ ९७८ ॥ न शोभन्ते निजगुणाः किल पुरतो गुरूणाम् इति विचिन्तयन्तो नीचाभिगमे लघवो गुणानां भावमेव हरन्ति अपह-
३रन्ति ॥ लघवो गुरूणा पुरतो निजगुणा ह्रस्वतरा विभास्यन्तीति भीत्या मूलत एव तांस्त्यजन्ति नीचैश्च सह वर्तन्त इति भावः ॥ ]

[॥ ९७९ ॥ अश्लाघने श्लाघनानर्हे पुरुषे । निन्द्य इत्यर्थः । खल्वेव निश्चयेनैव अलीकप्रशसया दुर्जनो द्विगुणम् अपवृत्तगुणे अविद्यमान-
३गुणे पुरुषे सुजनो द्विधापि पिशुनत्वं लभते ॥ निन्द्यस्य अलीकप्रशसया दुर्जनो यथा द्विगुणं पैशुन्य प्राप्नोति तथैव गुणहीनस्य धनाढ्यादेरलीकप्रशसया सुजनोपि द्विगुण पैशुन्यं प्राप्नोतीत्यर्थः ॥]

---

[1] MH, °संत्यागं for °सङ्गत्याग.   [2] MH. om. second तथा.

अप्पाण-निव्विसेसोत्ति एस मे जंपि भणइ नेहेण ।
तंपि खलो अत्थ-गईएँ ठवइ पिसुणत्तणेच्चेय ॥ ९८० ॥
उवरिमहो य धरन्तेहिँ कव्व-कणउज्जले अलंकारे ।
सीसइ सार-विसेसो विज्जा-विहवाण सवणेहिं ॥ ९८१ ॥
ण सिरी चला महग्घेसु ते ण तेच्चेय सावि जं मुयइ ।
ते उण ते तंच्चिय जइ मुयन्ति इह तीएँ को दोसो ॥ ९८२ ॥
तन्हा अखण्डियच्चिय विहवे अच्चुण्णएवि लहिऊण ।
सेलंपि समारुहिऊण किं व गयणस्स आंरूढं ॥ ९८३ ॥

[॥ ९८० ॥ आत्मनिर्विशेषः आत्मना समः इति एष मे यमपि भणति स्नेहेन तमपि खलः अर्थगत्या स्थापयति पिशुनत्वे एव ॥ यं
३कमपि जनम् एष जनो मम प्राणवत् प्रिय इत्युक्त्या दुर्जनोऽङ्गीकरोति तं जनं स दुर्जनः अर्थात् आत्मवद् दुर्जनत्वे स्थापयति। अत एव दुर्जनस्य स्तुतिः प्रीतिर्वा सज्जनानां त्याज्या भवतीत्यर्थः ॥]

[॥ ९८१ ॥ उपरि अधश्च धारयद्भिः काव्यकनकोज्ज्वलान् अलंकारान् शिष्यते कथ्यते सारविशेषः विद्याविभवानां श्रवणैः कर्णैः ॥]

[॥ ९८२ ॥ न श्रीश्चला महार्घेषु । तान् न तानेव सापि यत् मुञ्चति । ते पुनस्ते तामेव यदि मुञ्चन्ति इह तस्याः को दोषः ॥ ]

[॥ ९८३ ॥ तृष्णा अखण्डितैव विभवान् अत्युन्नतानपि लब्ध्वा । शैलमपि समारुह्य किं वा गगनस्यारूढम् ? अत्रोक्तं भवति ।
३अत्युन्नतानपि विभवान् लब्ध्वा न कोपि शान्ततृष्णो भवति । तत्रार्थान्तरन्यासः । यदि येन केनचित् पुरुषेण शैलशिखरमारूढं भवेत् तर्हि तेन गगनं समारूढमिति भवति किम् । नैव भवतीत्यर्थः । किं व
६गयणस्स आरूढं इत्यत्र गगनस्य को भाग आरूढः न कोपीत्यर्थः ॥]

पुर ओ सिरीएँ पिय-पङ्कयाइ कमलायरंपिव रयन्ति ।
मन्ने किविणा पहुणो पणाम-घडियञ्जलि-मिसेण ॥ ९८४ ॥
कुसुम-फलोसारिय-पायवेहिँ विणियत्त-सउण-पणएहिँ ।
नं किर ण मयंचिय महिहरेहिँ जलहिं विसन्तेहिं ॥ ९८५ ॥
सोवाए सुह-दुक्खागमम्मि आरम्भिणो फलमइन्ति ।
चिन्ता-णह-कण्डू-संभवम्मि विहिणो ण कण्डुयणे ॥ ९८६ ॥

[ ॥ ९८४ ॥ पुरत· श्रियाः प्रियपङ्कजायाः कमलादरमिव रचयन्ति मन्ये कृपणा. प्रभव. प्रणामघटिताञ्जलिमिषेण ॥ कमलानि श्रिया प्रियाणीति कृत्वा कृपणा धनिन प्रणामकृताञ्जलिव्याजेन तस्या पुरत कमलपूजा रचयन्तीति मन्ये इति समन्वय ॥]

[॥ ९८५ ॥ कुसुमफलापसारितपादपै विनिवृत्तशकुनप्रणयैः तत् किल न मृतमेव महीधरै. जलधिं विशद्भि ॥ अत्रोक्त भवति । फलपुष्पविहीनै पक्षिविहीनवृक्षकै पर्वतैर्यत्समुद्रे प्रवेशन न किं तत् तेषा मृत्युप्राय भवति । भवत्येवेति । महता दानसामर्थ्यनाश· पलायन च मृत्युवदिति भाव ॥]

[॥ ९८६ ॥ सोपाये सुखदुःखागमे आरम्भिण फलम् अयन्ते गच्छन्ति चिन्तानखकण्डूसभवे विहिणो विधे सकाशात् दैवात् जना न कण्डूयने ॥ फलमइन्ति इत्यनुषङ्ग । सुखागमवाञ्छा दु खापगमवाञ्छा च उपायताध्ये भवत । अत उपायिन स्वकीयस्योपायस्य फल सुखागमरूपं दु खापगमरूप च प्राप्नुवन्ति । दैवावलम्बिनस्तु चिन्तया कण्डूयन कृत्वा तादृश फल न लभन्त इत्यर्थ. ॥]

मोहाहिभवेण सिरिं चिर-वोलीणं विमग्गमाणाण ।
दूरीभवन्तु आगन्तुयाउ कह मा समिद्धीओ ॥ ९८७ ॥
आयार-पेसलाणवि हुवन्ति एमेय विहि-णिओएण ।
विणियत्तीओचिय आवईओ मन्ने समाहिलेत्ति ॥ ९८८ ॥
जम्मि अविसण्ण-हिययत्तणेण ते गारवं वलग्गन्ति ।
तं विसममणुप्पेन्तो गरुयाण विही खलो होइ ॥ ९८९ ॥
हिययस्स विणिव्ववणे इह लोएच्चिय समप्पिय-फलाइ ।
बीयं पर-लोय-फलं ण रण्ण-वसहीइ सद्दिहिमो ॥ ९९० ॥

[॥ ९८७ ॥ मोहाभिभवेन श्रियं चिरातिक्रान्तां विमार्गमाणानां दूरीभवन्तु आगन्तुकाः कथं मा समृद्धयः ॥ भवन्त्येवेत्यर्थः ॥]

[॥ ९८८ ॥ आकारपेशलानामपि भवन्ति एवमेव विधिनियोगेन विनिवृत्तय एव आपदो मन्ये समालिला इति ॥]

[॥ ९८९ ॥ यस्मिन् विषमे दुःखे अविषण्णहृदयत्वेन ते गौरवम् अवलगन्ति तद् विषमं दुःखम् अनुत्प्रयन् गुरूणां विधिः खलो
३ भवति ॥ प्राप्तेपि दुःखे ये अविषण्णहृदयाः सन्तो गौरवं न त्यजन्ति तेषां गुरूणां दुःखम् अनपनयत् दैवं दुष्टं मन्तव्यम् इत्यर्थः ॥]

[॥ ९९० ॥ हृदयस्य विनिर्वपणे श्रद्धास्यामः इह लोक एव समर्पितफलायां बीजं परलोकफलं न अरण्यवसत्यां श्रद्धास्यामः ॥
१ परलोकः फलं यस्य तत् सदाचारतपश्चर्यादिरूपं बीजम् इह लोक एव दत्तफलायामरण्यवसत्यां न क्षिपामः अपि तु हृदयस्य विनिर्वपणे ईश्वराधीनीकरणे क्षिपाम इत्यर्थः । अरण्यवसतिः केवलम्

रमइ य चरिए अप्फुल्लयम्मि खिज्जइ य नियय-सीलेण ।
निन्दइ य पर-सहाव सिहइ य लोओ पर गुणाण ॥ ९९८ ॥
मग्गव्व दीह धवला मण्णे चिहुरा जणस्स जायन्ति ।
वोलन्ताण अणुदिणं जहागयं हियय-भावाण ॥ ९९९ ॥
सव्वङ्ग विणिवेसो णईइ पलिएहिँ पुण दावेइ ॥
आसन्नमिमम्मि जरा-करङ्क-भावं सरीरम्मि ॥ १००० ॥

वसति एतासाम् ॥ इदमुक्त भवति । स्त्रीणा निष्ठुरत्वस्य वसति वसतिस्थान तासा कोमलहृदये कथ भवेत् ? नैव भवति । अत पयोधरद्वयोपलक्षितस्य कठिनत्वस्य वसतिर्वज्रम् एव भवति । तासा पयोधराभ्यामधो यत्र वर्तते न तु कोमल हृदयम् इति यावत् । कोमल मन्यमानमपि स्त्रीहृदय वज्रवत्कठिन भवतीति ॥]

[॥ ९९८ ॥ रमते च चरिते आत्मसबन्धिनि स्वकार्ये खिद्यते च निजकशीलेन निन्दति च परस्वभाव स्पृहयति च लोक परगुणाना परगुणेभ्य ॥ विरुद्धवर्तनो लोक इत्यर्थ ॥]

[॥ ९९९ ॥ मार्गा इव दीर्घधवला मन्ये चिकुरा जनस्य जायन्ते अतिक्रामताम् अनुदिन यथागत हृदयभावाना कामादिचेष्टाना यौवनसहचारिणाम् ॥

कामादिचेष्टाशक्तयो हि यौवनदशाया यथा क्रमेण आगच्छन्ति तथा ता वार्द्धक्ये क्रमेणैव अपगच्छन्ति । तासामागमनगमनैरिव केशा मार्गा इव धवला भवन्तीत्युत्प्रेक्ष्यते ॥]

[॥ १००० ॥ सर्वाङ्ग विनिवेशो नत्या पलितैर्नून दर्शयति आसन्नम् अस्मिन् जराकरङ्कभाव शरीरे ॥

सव्व-त्थामोणमियं ओहुरमायड्ढियं वलि-लयाहिं ।
धरणि-अलाहिमुहंपिव सरीरमिणमो जरी वहइ ॥ १००१ ॥
अङ्गेसु बिन्दु-णिविडा णिवडइ परिणाम-जज्जरिज्जन्ती ।
तिलय-च्छलेण मण्णे कसण-च्छायव्व चिहुराण ॥ १००२ ॥
गब्भुग्गम-लङ्घिय-जोव्वणाण घरिणीएँ विमण-पिय-दिट्ठं ।
थणयाण दुद्ध-धारा-णिहेण पलियंव णिक्खमइ ॥ १००३ ॥
सयलं विराम-विरसत्तणेण दुक्खं सुहंचिय ण णाम ।
दुक्खाभावो सोक्खं ण जेण ण हु तेण दुक्खंपि ॥ १००४ ॥

सर्वाङ्गे वक्रत्वस्य यः प्रवेशो वार्द्धक्ये जायते स जरायाः करङ्क इवेत्युत्प्रेक्ष्यते । करङ्कः नारिकेलादिमयं दीर्घवक्रं भाण्डं कापालिकादिभिर्भिक्षाग्रहणार्थं भृतम् ॥]

॥ १००१ ॥ सर्वस्थामावनतम्[1] अधोमुखम् आकृष्टं वलिलताभिः धरणितलाभिमुखमिव शरीरमेतत् जरी वहति ॥ स्थाम बलं शरीरैकदेशश्च ॥

॥ १००२ ॥ अङ्गेषु बिन्दुनिबिडा निपतति परिणामेन जर्जरीक्रियमाणा तिलकच्छलेन मन्ये कृष्णच्छायेव[2] चिकुराणाम् ॥ [3]जरया जर्जरीकृता केशकृष्णतैव विगलिता देहबिन्दुत्वमापन्नेत्युत्प्रेक्षा ॥

॥ १००३ ॥ [4]गर्भोद्गमलङ्घितयौवनानां [5]गृहिणीनां विमनस्कप्रियदृष्टं स्तनानां दुग्धधारानिभेन पलितमिव निष्क्रामति ॥ जीर्णयौवनत्वेन प्रियतमायाः विमनस्कत्वं प्रियतमस्य ॥

॥ १००४ ॥ सकलं विरामविरसत्वेन दुःखं सुखं चापि न नाम । सुखलेशस्य वैषयिकदुःखभरेणानुविद्धत्वात् । किं च दुःखा-

---

1 MH. °वमत° for °वनत°. 2 MH. °छायव. 3 MH. जराया. 4 MH. गर्भोद्गलंघित°. 5 MH. घरिणीनां.

रमइ विहवी विसेसे थिइ-मेत्तं थोय-वित्थरो महइ ।
मग्गइ सरीरमधणो रोई जीएच्चिय कयत्थो ॥ ९९१ ॥
मूले निविडायन्ता विरलुग्गारा तओ पसङ्गेसु ।
कालेण सउरिसाणवि कहाणुबन्धा निमिल्लन्ति ॥ ९९२ ॥
विरसायन्ता बहलत्तणेण हियए खलन्ति परिओहा ।
थोय-विहवत्तणेणं सुहंभरप्पच्चिय सुणन्ति ॥ ९९३ ॥
विरसम्मिवि पडिलग्गं ण तरिज्जइ कहवि जं नियत्तेउं ।
हिययस्स तस्स तरलत्तणम्मि मोहो इइ जणस्स ॥ ९९४ ॥

६ ऐहिकफलानां शान्तिसुखादिरूपाणा दात्री न तु परलोकार्जनरूपाणां सुखानाम् इति भावः ॥]

[॥ ९९१ ॥ रमते विभवी विशेषे । स्थितिमात्रं स्तोकविस्तारः इच्छति । मार्गयति शरीरम् अधनः । रोगी जीव एव कृतार्थः ॥]

[॥ ९९२ ॥ मूले निबिडायमानाः विरलोद्गारास्ततः प्रसङ्गेषु कालेन सत्पुरुषाणामपि कथानुबन्धा निमीलन्ति ॥]

[॥ ९९३ ॥ विरसीभवन्तो बहलत्वेन हृदये स्खलन्ति विनश्यन्ति अनुपभुक्ता एव विनष्टा भवन्ति परिओहा (?) परिभोगाः १परिभोग्यवस्तूनि । स्तोकविभवत्वेन सुखभरात्मान एव सुणन्ति (?) शृण्वन्ति श्रूयन्ते ॥

एवशब्दो भिन्नक्रमः । बहला विभवा जनान् विरसान् कुर्वन्ति अनुपभुक्ता एव सन्तः । अल्पविभवत्वेनैव जनाः सुखिन इति १॰गन्ते इति भावार्थेन भवितव्यम् ॥]

[॥ ९९४ ॥ विरसेपि प्रतिलग्न न तीर्यते शक्यते कथमपि यत्

हिययम्मि गाढ-घडिएहिँ दोवि मण्णे समं ठविज्जन्ति ।
वुद्धीओ उहय-लोयम्मुहीओ जुयईण थणएहिँ ॥ ९९५ ॥
पहरइ कह णु अणङ्गो कह णु हु विन्धन्ति कोसुमा बाणा ।
इय कामेच्चिय अफुडे फुडाइँ तत्तो कह सुहाइं ॥ ९९६ ॥
हिययस्स निट्ठुरत्तणमिणमो किं संठवेहि महिलाण ।
अत्तो पओहराणं वज्जंचिय वसइ एयाण ॥ ९९७ ॥

निवर्तयितुं हृदयं हृदयस्य तस्य तरलत्वे चञ्चलत्वे मोहः इह जनस्य ॥ हृदयं चञ्चलं भवतीति या जनस्य बुद्धिः सा मोहात्मिका । विरसादपि हृदयस्य अनपकर्षणीयत्वात् । इति भावः ॥ ]

[॥ ९९५ ॥ हृदये गाढघटितैः द्वे अपि मन्ये समं स्थाप्येते बुद्धी उभयलोकोन्मुख्यौ युवतीनां स्तनकैः ॥ इदमुक्तं भवति । उभयलोकोन्मुख्यौ ऐहिकपारत्रिकश्रेयः संबन्धिन्यौ बुद्धी युवतीनां स्तनकैस्तासां हृदये गर्त इव स्थाप्येते ते च स्तनकाः पिधानस्थानभूता हृदयरूपस्य गर्तस्य मुखे तिष्ठन्ति तथा च कृत्वा ते उपरि उदेतुमसमर्थे कुर्वन्तीति । युवतिस्तनलम्पटा ऐहिकपारत्रिकनिःश्रेयसपराङ्मुखा भवन्तीत्यर्थः ॥]

[॥ ९९६ ॥ प्रहरति कथं नु अनङ्गः ? कथं नु खलु विध्यन्ति कौसुमा बाणाः ? इति काम एव अस्फुटे स्फुटानि तस्मात् कथं सुखानि ? अनङ्गः कौसुमैर्बाणैः कामिनः प्रहरतीत्यादिः सर्व एव कविकल्पनालापः । स एव नास्ति अनङ्गः परमार्थतः । अतस्तस्मात् कविसमयेन भाव्यानि सुखान्यपि तथैव अपरमार्थानीति भावः ॥ ]

[॥ ९९७ ॥ हृदयस्य निष्ठुरत्वम् इदं हृदयं किं कथं संस्थापयिष्यति आत्मनि धारयिष्यति महिलानाम् ? अतः पयोधराणां वज्रमेव

फुरइ य फुडो अभावस्स एस भुवण-च्छलेण आयारो।
आलोयण-णिव्वडिओव्व णील-भावो णह-यलस्स ॥ १००५ ॥
इय विरसमिमं संसारमावसन्ताण वो फलममोल्लं ।
णिव्वडउ पावणाणं गुणाण पहुणो णिसमणेण ॥ १००६ ॥

अवि य ।

आसा-गय-दाणायन्त-कसण-कण्ठ-प्पहा-हओ लहइ ।
केसर-कलाव-कराणि सोच्चिय सिढिलो जडा-निवहो ॥ १००७

२ भावमात्रं सुखम् न 'तु[1] वस्त्वन्तरम् एवं येन यस्मात् तेन तस्मान्न खलु दुःखं सर्वमपि । किं तर्हि । सर्वमेव दुःखं विवेकिनामिति संसारविवेकिभिर्व्यापारमात्रं[2] हेयम् ॥

॥ १००५ ॥ स्फुरति च स्फुटम् अभावस्यैष भुवनच्छलेन आकारः । आलोकनेन अविद्यावासनानिर्मितावभासेन निर्वृत्तः कल्पित
२ इव नीलभावो नभस्तलस्य ॥ सर्वं शून्यमिति[3] माध्यमिकाः । तेन संसारग्रहो न युक्तः ॥

॥ १००६ ॥ इति विरसम् इमं संसारम् आवसतां [वो] युष्माकं फलम् अमूल्यम् अप्रातिपक्षम् अमलं वा निर्वर्ततां[4] पावनानां गुणानां
२ प्रभोर्यशोवर्मणः सबन्धिनां निशमनेन आकर्णनेन ॥ महाकुलकम् ॥

अपि च ।

[॥ १००७ ॥ आशागजदानायमानकृष्णकण्ठप्रभाहतो लभते केसरकलापसादृश्यं स एव शिथिलः जटानिवहः ॥

२ शिवस्य यो जटानिवहः स शिवसिंहस्य केसरतां प्राप्त इति यावत् ॥]

---

[1] MH. ननु. for न तु [2] MH. ससारविविकिभ्यापारसर्वं जेयम्, which seems corrupt. The emendation is conjectural. [3] MH. सर्वन्यमिति The emendation is conjectural. [4] MH. निवर्तंतां.

वहइ मणि-किरण-रञ्जिय-सीस-निवेसिय-फणा-समोसरिओ ।
भुयइन्दो पट्ठि-पहोलि-रुद्ध-लङ्गूल-वेलम्बं ॥ १००८ ॥
ताओच्चिय रहस-विसट्ट-वयण-कुहरोयराओ पावेन्ति ।
जालावली-विलासं उत्तंस-कवाल-मालाओ ॥ १००९ ॥
पडिमा-मग्गा सिर-ससि-यलाएँ[1] सच्चविय-णह-मुहोइण्णा ।
तेच्चिय हत्थेसु णहङ्कुसत्तणं एन्ति णिन्तूण ॥ १०१० ॥

[॥ १००८ ॥ वहति मणिकिरणरञ्जितशीर्षनिवेशितफणासमपसृतो भुजगेन्द्रः पृष्ठिप्रभावलिरुद्धलाङ्गूलविडम्बनाम् ॥

स्वशिरोमणिना शिवशिरो रञ्जितं कृत्वा तत्र फणां निवेश्य शिष्टशरीरेण शिवपृष्ठोपरि पादपर्यन्तमपसरन् वासुकिः शिवसिंहस्य पुच्छतां गत इत्यर्थः । पृष्ठिप्रभावलिः प्रभावती पृष्ठितितिः । सा विभक्ता येन तादृशस्य पुच्छस्य विडम्बनामनुकरणमिति योज्यम् ॥]

[॥ १००९ ॥ ता एव रभसविश्लिष्टवदनकुहरोदराः प्राप्नुवन्ति जालावलीविलासम् उत्तंसकपालमालाः ॥

अत्यन्तोद्घाटितवदनकुहरा याः शिवशिरःस्थकपालमालास्ता एव शिवसिंहस्य जालावलीत्वं प्राप्ताः । जालावल्यः जालरूपापन्नाः सिंहशिरःस्थाः केशा दृष्टप्रसिद्धाः ॥]

॥ १०१० ॥ प्रतिमामार्गाः शिरःशशिकलायां सत्यापितनखमुखावतीर्णाः त एव हस्तयोः नखाङ्कुशत्वं यन्ति निर्गम्य ॥

[1] Do, the only MS. in which stanzas 1007–1011 occur, wrongly omits °एँ, which we restore by conjecture.

इय तुलिउमहिलसन्तेण जस्स बल-विब्भमं ति-णयणेण ।
भेसिय-गोरि-मइन्दं मइन्द-रूवेण परिणमियं ॥ १०११ ॥
खुडिया इमेण समरङ्गणेसु रिउ-वारणाण कर-दण्डा ।
णासा-विमुक्क-जीहाइ-रुहिर-धारा विसहरव्व ॥ १०१२ ॥
मह-धूम-लया एयस्स सुचरियाहूय तियस-णाहस्स ।
सुर-करिणो बहल-मयम्बु-सामला सहइ सरणिव्व ॥१०१३॥
लहुईकयावि गुण-गारवेण गरुयावि णियय-कुल-उव्वा ।
अप्पाण-गारवेणं पुणोवि गुरुईकया जेण ॥ १०१४ ॥

१ शिवस्य नखाग्राणां ये प्रतिमानिवेशाः शिरःशशिकलाया कृतास्त एव ततो निर्गम्य शिवसिंहस्य हस्तयोस्तीक्ष्णनखत्वं प्राप्ता इति भावः ॥]

[॥ १०११ ॥ इति तोलितुम् अभिलषता यस्य बलविभ्रम त्रिनयनेन भीषितगौरीमृगेन्द्रं मृगेन्द्ररूपेण परिणमितम् ]

॥ १०१२ ॥ खण्डिता अमुना यशोवर्मणा समराङ्गणेषु जयवारणाना करदण्डा नासाविमुक्तरुधिरैः स्फुरज्जिह्वा विषधरा इव ॥
२ नासाविमुक्तजिह्वा[ग]रुधिरधारा इति पाठान्तरम् ॥

॥ १०१३ ॥ मखधूमलता एतस्य सुचरिताहूतत्रिदशनाथस्य सुरकरिण[1] ऐरावणस्य बहलमदाम्बुश्यामला शोभते सरणीव[2] ॥

३ सुचरितं शोभनमाचरितं यज्ञादि । तत्र साक्षादाहूत इन्द्रः ससेन आयातीति दर्शितम् ॥

॥ १०१४ ॥ लघूकृता अपि [[3]गुणगौरवेण गुरवोपि निजकुकु-

[1] MH. परावणस्य [2] MH. सरणिव्व
[3] MH, omits the words shown in brackets,

पहु-धम्म-बन्धणे संठियस्स विवरीय-सासिय-जयस्स ।
करुणा-णीसास-सहा सहन्ति संरम्भ-भिउडीओ ॥ १०१५ ॥

अह वा २४

कुम्माहिवेण दीसइ उण्णामिय-सङ्ख-रयण-वलएण ।
तियसाण संभमुग्गाहिअग्घ-वत्तोव्व-सलिल-णिही ॥१०१६॥

लपूर्वं आत्मगौरवेण पुनरपि गुरूकृता येन ] ॥ गुरूकृताः पूर्वं स्ववंश्या यशोवर्मणेत्यर्थः ॥

॥ १०१५ ॥ प्रभुधर्मेण यद्बुधानां नीत्यर्थं बन्धनं तत्र [सं]स्थिते चौरादिवर्गे विपरीतानुशिष्टजगतो [1]बन्धनादिनैरपेक्ष्येण आज्ञामात्र-[2]मार्गस्थापितलोकस्य करुणानिःश्वाससहाः शोभन्ते संरम्भभृकुटयः ॥ ऐकान्तिककारुण्येन[3] न [4]जगत् मार्गे तिष्ठतीति भृकुटियोगेन रसद्वयानुप्रवेशो वर्णितः ॥ [5]पहुधम्मबन्धने संठियस्स वि[वरी]असासिनो जस्सेति पाठान्तरम् ॥ प्रभुधर्म एव बन्धनमिव । परायत्तत्वकारित्वात् । प्रभुत्वं भयानकरसव्यतिरेकेण न निर्वहतीति कृत्वा अनभिमतदारुणं रूपं करोत्यत एवाह विपरीतमार्गकारिण इति । मर्शो विमर्शः ॥

॥ १०१६ ॥ अथ हयवतारयशोवर्मकर्तृकोदधिमथनं चतुर्विंशतिकुलकेन [ आह ] । कूर्माधिपेन दृश्यते उन्नामितशङ्खरत्नवलयेन त्रिदशानां संभ्रमोद्ग्राहितार्घपात्र[6] इव[7] सलिलनिधिः ॥ मन्दरधारणार्थपातालोद्भवकूर्माधिपयुतः समुद्रः एवम् उत्प्रेक्षितः ॥

---

[1] MH. बधनादिनिरपेक्षेनाज्ञामात्र°. The correction is supplied by the same note quoted in the margin of Dc. [2] MH. °मार्ग. [3] MH. एका°. [4] MH. जगन्मार्गेतीति. The correction is supplied by the same note quoted in the margin of Dc. [5] MH. बहधेमबधेने संतियस्स विअ सासिनो यस्येति [6] MH. संभ्रमोद्गतीतार्घ [7] MH, reads the इव after सलिल° thus: सलिल इव निधिः.

उम्मिल्लस्सवि चिर-याल-मुक्क-णीसास सिढिल-देहस्स ।
पट्ठी पुणो तरङ्गेहिँ लङ्घिया कमढ णाहस्स ॥ १०१७ ॥
दीसन्ति कुम्म-तुलिया घणव्व पुणरुत्त-विज्जु-विप्फुरणा ।
ऊसास-दिट्ठ-तम्बिर-कण्ठ-च्छेया महा-मीणा ॥ १०१८ ॥
पेच्छन्ति सुर-दइच्चा घडिय-धरा-मग्ग-गोर परिणाहं ।
पट्ठिं पेरन्त-सहाव-सामलं कमढ-णाहम्म ॥ १०१९ ॥
कुम्म-ट्ठियस्स दीसइ जलहिम्मि तरङ्ग भङ्गुर-णिवेसा ।
ण-पहुत्त-रसा-यल-कुञ्चियव्व फडिमा महि-हरस्स ॥ १०२० ॥

॥ १०१७ ॥ उन्मग्नस्यापि चिरकालं मुक्तनिःश्वासशिथिलदेहस्य पृष्ठं पुनस्तरङ्गैर्लङ्घितं कमठनाथस्य कूर्मपतेः ॥ भूभारखेदकृतो
३ निःश्वासः ॥

॥ १०१८ ॥ दृश्यन्ते उन्मज्जता कूर्मेण तुलिता उन्नमिता घना इव पुनरुक्तविद्युद्विस्फुरणा उच्छ्वासदृष्टताम्रकण्ठच्छेदा महामीनाः ॥
३ पुनरुक्तमभ्यस्तम् ॥

॥ १०१९ ॥ प्रेक्षन्ते सुरा दैत्याश्च घटितधरामार्गगौरवपरिणाहं [पृष्ठं] पर्यन्तस्वभावश्यामलं कमठनाथस्य ॥ आश्रितया भूम्या
३ यो घृष्टः पृष्ठप्रदेशः स गौरीभूतः । पार्श्वानि तु स्वभावश्यामलानि कूर्मस्य ॥

॥ १०२० ॥ कूर्मस्थितस्य दृश्यते[1] जलधौ तरङ्गभङ्गुरनिवेशा न प्रभवता [2]अवर्तमानेनापर्यवसितेन रसातलेन कुञ्चितेव साकुञ्चनेव॰

[1] MH. दृश्यंते. [2] MH. आवर्तमानेन [3] MH. सांकाचिवेष.

वलइअ-भुयङ्ग-वलयावबीड-पुञ्जिय-णमन्त-साहग्गा ।
अग्गेहिँ सेल-घडिया मूलेहिँ दलन्ति दुम-णिवहा ॥ १०२१ ॥
भुययाहिवस्स णिहसा झिज्जन्ति उरम्मि खर-हरन्तीओ ।
वण-गण्ठि-गयाओ विहङ्ग-णाह-णह-कोडि-कीलाओ॥१०२२॥
फुट्टन्ति पायवाणं रय-वित्थारावबद्ध-परिवेसा ।
विणियत्ति-समय-ताडिय-तडाओ पारोह-मालाओ ॥१०२३॥
अट्ठिय-गिरि-वलण-गयाम्बुवोच्छिण्ण-णिवडिय-तडाओ ।
पत्ताओ विअड-भावं तलिणाओवि कडय-सरियाओ १०२४

३ प्रतिमा प्रतिबिम्बं महीधरस्य ॥ कल्लोलकस्य [1]वशेन चन्द्रादिप्रतिबिम्बं भङ्गुरनिवेशं चलं[2] दृष्टम् ॥

॥ १०२१ ॥ वलयीकृतभुजंगवलयावपीडमुकुलनमच्छाखाग्राः अग्रैः शैलघटिता मूलैर्दलन्ति द्रुमनिवहाः ॥

॥ १०२२ ॥ भुजगाधिपस्य गिरिनिघर्षात्[3] क्षीयन्ते [ उरसि ] खरखराशब्दं कुर्वन्त्यः व्रणग्रन्थिगता विहंगनाथनखकोटिकीलाः ॥
३ गरुडेन सह युद्धे यातव्रणत्वं वासुकेः ॥

॥ १०२३ ॥ स्फुटन्ति पादपानां रयविस्तारावबद्धपरिवेषा विनिवृत्तिसमयताडिततटाः प्ररोहमालाः ॥ रयो वेगः भ्रमितमन्द-
३ रस्य । तन्नेत्रत्वेन च व्यवस्थितेन वासुकिना स्वीक्रियमाणाः प्ररोहाः परिवेषत्वं वलयाकृतत्वमापद्यन्ते । ततः पुनः प्रत्यावर्तमानेन मुक्ता उद्वेष्टनयोगात्[5] गिरितटाः घ्नन्ति ॥

॥ १०२४ ॥ [6]अस्थितगिरिवलनगताम्बुव्युच्छिन्ननिपतित-

---

[1] MH. कशेन. [2] MH. बलं. [3] MH. °घर्षः for °घर्षात्.
[4] MH. खरखरा°. [5] MH. °योगा for °योगात्. [6] MH. ˚गनानां तु वुच्छिन्न

परिसिढिल-वियड-मूला तेच्चेय वहन्ति पढम-तणु-धारा ।
भुयइन्द णिहस-विहडन्त-विवर-मूला जलुप्पीला ॥ १०२५ ॥
वीसाम-मन्थरायन्त-सेल-वोछिण्ण-दूर-वडणाओ ।
मदहं कमेण वलयं णिज्झर-धाराओ बन्धन्ति ॥ १०२६ ॥
पावन्ति वलिय-वित्थय गिरि-कडय-णिहंसणा तलिण-मूला ।
वित्थारं दसण च्छेय-मण्डला दिग्गइन्दाण ॥ १०२७ ॥
णिहस-विरिक्क-दुम-लओ जह-जह सेलम्मि घडइ भुयइन्दो ।
तह-तह दीहायन्तो पुणोवि वलइज्जइ गिरिम्मि ॥ १०२८ ॥

तटाः प्राप्ता विकटभाव तन्व्यो नितम्बसरितः ॥ अस्थितमनवरतम् ।
३ गतागतयुक्तैरम्बुभिस्तटविघटने अल्पा अपि महत्यो नद्यो जाताः ॥

॥ १०२५ ॥ परितिशिथिलविकटमूलास्त एव वहन्ति प्रथमतनुधाराः भुजगेन्द्रनिघर्षविघटमानविवरमूला[1] जलोत्पीडाः ॥ उत्पीडः
३ समूहः प्रवाहः ॥

॥ १०२६ ॥ [ विश्राममन्थरायमाणशैलव्युच्छिन्नदूरपतनाः अल्प क्रमेण वलयं निर्झरधारा बध्नन्ति ] ॥ भ्रमति मन्थाने सति
३ प्रतिहतोत्पतिता धारा दूरं पतन्ति । विश्रान्त्यर्थावरोधे तु सति न दूरं गच्छन्ति वलयाकार च स्वाधारलग्न बध्नन्ति ॥

॥ १०२७ ॥ प्राप्नुवन्ति वलितविस्तीर्णगिरिकटकनिघर्षणतनुमूला विस्तार दशनच्छेदमण्डला[2] दिग्गजेन्द्राणाम् ॥ मन्दरमहत्त्वमत्र
३ तात्पर्यार्थः । दिग्गजेन्द्रदशनव्यापादनात् ॥

॥ १०२८ ॥ निघर्षणेन [3]विरिक्तास्फोटितपतिता [4]द्रुमलता येन स

1 MH. ⁰विकटमान⁰. 2 MH. ⁰च्छेदं मडला 3 MH विरक्ता⁰. 4 MH. द्रुम⁰

णिहस-परिगलिय-वासुइ-णिम्मोय-रयावबद्ध-परिवेसो ।
कुम्मम्मि होइ खण-विरइ आलवालोव्व सलिल-निही॥ १०२९॥
कम-लद्धालोयं फणि-णिहंस-झिज्जन्त-तड-पणट्टासु ।
णिन्ति अविणिक्खमन्ताविं वण-यरा महिहर-दरीसु ॥ १०३०॥
होन्ति गिरि-वलण-भावा अण्णण्ण-दिसा-घडन्त-कडयाण ।
सरलंपि पडन्तीणं सिलाण कुडिलव्व गइ-मग्गा ॥ १०३१ ॥

यथायथा शैले घटते संबध्यते भुजगेन्द्रः तथातथा दीर्घायमाणः पुन-
३ र्विवैल्यते[1] वेष्ट्यते गिरौ ॥ अपसृततरुविटपे मन्दरमन्थने[2] तनुत्वं यथा-
यथा उत्पद्यते तथातथा नेत्रत्वमापन्नो वासुकिः अन्यान्यानि[3] वेष्ट-
नानि भजत इत्यर्थः ॥

॥ १०२९ ॥ निघर्षपरिगलितवासुकिनिर्मोकरयावबद्धपरिवेषः
कूर्मे मन्दरमूलाधिकपरिमाणे मन्दरमूलस्थे भवति क्षणविरचिताल-
३ वालमिव गिरिमूलम् ॥ निर्मोकः सर्पचर्म ॥

॥ १०३० ॥ [4]क्रमलब्धालोकं कृत्वा [5]फणिनिघर्षणक्षीयमाणप्रन-
ष्टतटासु सर्तापु निर्यान्ति अविनिष्क्रामन्तोपि[6] वनचरा महीधरदरीषु॥

॥ १०३१ ॥ भवन्ति [7]गिरिविलनभावाद्धेतोः अन्योन्यदिग्घटमान-
कटकानां सरलमपि कृत्वा पतन्तीनां [ शिलानां ] कुटिला इव गति-
३ मार्गाः ॥ वलतो मन्थनमन्दरस्य[8] उत्तरादिग्व्यवस्थिताः कटका दक्षि-
णया दिशा अन्योन्यं संबध्यन्ते ॥ दक्षिणदिग्गतास्तु उत्तरया [ इति ]
अन्योन्यदिग्घटमानकटकत्वं शिलानाम् । यतश्च प्रदेशाच्छिलाः

[1] MH. °वल्यते for °वल्यते. The emendation is conjectural. [2] MH. मथने. [3] MH. अन्यान्यानि. [4] MH. °लब्धालोकं. [5] MH. °प्रणष्ट°. [6] MH. °निष्काम तोपि. [7] MH. °वलण°. [8] MH. मंथम°.

उच्छलिय-सलिल-पूरिय-गयण'दिसा वलय-पडिहओयासो ।
खण तुच्छम्मि पडिरवो णवर समुद्देच्चिय वलग्गो ॥ १०३२ ॥
वासुइ-णिहसुम्मूलिय-पक्ख-च्छेय-वण-गण्ठि णिव्वडिया ।
णिवडन्ति सेल कडयाउ वज्ज-धारा-तड-क्खण्डा ॥ १०३३ ॥
पसरन्ति वलन्तोअहि-मण्डलइज्जन्त-कड्ढिय-सरीरा ।
सुकार-सरलिआवत्त-पसिढिला णवर भुयइन्दा ॥ १०३४ ॥

पतन्ति तस्मिन् गच्छति[1] सति अपादानापेक्षया स्पष्टमपि कृत्वा पतन्त्यः कुटिलमार्गा इव लक्ष्यन्ते ॥

॥ १०३२ ॥ उच्छलितसलिलपूरितगगनदिग्वलयत्वात्प्रतिहतावकाशः [2]क्षणतुच्छे प्रतिरवः केवलं समुद्र एवावलग्नः ॥ मन्द्राघातादुच्छलितेन जलधिजलेन गगने पूरिते सति तत्रानवकाशः [सन्] क्षणमात्ररिक्ते समुद्रे एव प्रतिशब्दः समुल्लसेत्यर्थः ॥

॥ १०३३ ॥ नेत्रत्वापन्नवासुकेर्निघर्षोन्मूलिता ये[3] पक्षच्छेदव्रणा [4]इन्द्रप्रहारकृताः [ तत्संबन्धिभ्यो ग्रन्थिभ्यो [5]निर्वर्तिताः ] पृथग्भूताः निपतन्ति शैलकटकात् नष्टशल्यत्वापन्नवज्रधारामिश्रास्तटखण्डा. ॥

॥ १०३४ ॥ प्रसरन्ति वलदुदधिमण्डलीक्रियमाण [कृष्ट] शरीराः [6]सूत्कारसरलीकृतावर्तत्वेन प्रशिथिलीभूतशरीराः केवल भुजगेन्द्राः ॥ नवरं.केवलम् । एव नाम महान्तो जलधौ सर्पाः ये[7] [8]फूत्कारैर्मन्दरवलनोत्पन्नानावर्तान् सरलान् कुर्वन्ति[3] ॥

---

1 MH. गमत्तिसम्पदानापेक्षया. [2] MH. क्षणात्तुच्छे. [3] MH. वासुकिनि°. [4] MH °प्रमाण° for ° प्रहार°, which is a conjectural emendation [5] MH. is apparently mutilated here. The addition is conjectural. [6] MH °शरीरास्तत्कार°. [7] MH. सपायो for सर्पा ये. [8] MH. is here mutilated, reading °वलनोत्पन्नानाव. Doubtless the copyist left out some words after नव. The correction is conjectural.

तरु-वलिय-लया-लच्छिं लहन्ति सेलम्मि कडय-सरियाओ ।
उम्मोइय-वासुइ-णिहस-मग्ग-संदाणि अ-जलाओ ॥ १०३५ ॥
कडएहिँ तहेय मही-सिहरेहिँ णहंव पेल्लियं गिरिणो ।
अल्लीणं णवर दिसाहिँ णिहस-तणुयम्मि मज्झम्मि ॥१०३६॥
कुम्म-विणिहिट्ठ-मूलो भुययाहिव-णिहस-तणुइयाहोओ ।
कह-कहवि पढम-णिमिओ सुहेण ओसारिओ सेलो ॥१०३७॥
घडियं मन्दर-दर-दूमियम्मि संखुहिय-जलहि-तण्णायं ।
सिसिरोवयार-पङ्कंव कुम्म-वीढम्मि महि-वेढं ॥ १०३८ ॥

॥ १०३५ ॥ वलिततरुलतालक्ष्मीं लभन्ते शैले कटकसरितः उन्मोचितवासुकिनिघर्षमार्गसंदानितजलाः ॥ लक्ष्मीः शोभा ॥

॥ १०३६ ॥ कटकैस्तथैव महीशिखरैर्नभः प्रेरितं मन्दरगिरेः समुद्रादुत्तीर्णस्य[1] [ आलीनम् आश्लिष्टमिव केवलं ] दिग्भिर्निघर्षतनौ मध्ये ॥ कटकशिखरनेत्रनिघर्षस्थानमहत्त्ववर्णनमत्र[2] तात्पर्यार्थः ॥

॥ १०३७ ॥ कूर्मविनिघृष्टमूलो भुजगाधिपनिघर्षतनूकृताभोगः सन् यः पूर्वं कथंकथमपि निमितः समुद्रे क्षिप्तोभूत्[3] स सुखेनापसारितः उत्कालितः [शैलः] ॥ तले कूर्मनिघर्षेण मध्ये च वासुकिनोत्क्षेपणेन लघूकृतत्वात् ॥

॥ १०३८ ॥ घटितं संबद्धं मन्दरेण मनाग्दूमितं खेदितम् [अपि] संक्षुब्धेन समुद्रेण तन्नायम्[4] आर्द्रं शिशिरोपचारार्थं पङ्कमिव कर्दम इव

1 MH. समुद्रादुत्तीर्णदिग्भिर्नि°. The emendation and addition are conjectural [2] MH. °नेत्रौ°. [3] MH. क्षिप्तोनत् for क्षिप्तोभूत्. [4] MH. तन्नाय मार्द्र.

इय कम-णिम्महिया मुक्क-विहुर-खीरोअ-सरहसुव्वूढा ।
लच्छी अज्जावि वच्छ-त्थल-ट्ठिया वुब्भइ इमेण ॥ १०३९ ॥

कि च । ४

दीसइ कर-ताडण-मूढ-रुहिर-सगलिय-सामल-च्छायं ।
हियय ट्ठिय-विरह-हुयास-धूम-मइलंव थण-वट्टं ॥ १०४० ॥
वयणुव्वहण णिवेसिअ-करुद्ध-णह मणि मऊह-वोच्छेए ।
संधन्ति णिरञ्जण-णिम्मलाओ थोरंसु-धाराओ ॥ १०४१ ॥

सतापनिवृत्तये[1] कमठः [2]कूर्मः [3]पीठमिव तत्र महीपीठम् ॥ महोदधिमथनसमये किल [4]कूर्मः सर्वात्मना जलधितलं प्राप्तो मन्दरभरधारणाय । ततः पुनरपि पृथ्वी तत्र विश्रान्ता [5]क्षुब्धजलधिना आर्द्रा विरता एवमुत्प्रेक्षिता[5] ॥

॥ १०३९ ॥ इति क्रमेण निर्मथितमुक्तो विधुरः [6]क्षीणो यः क्षीरोदस्ततः सरभससमुद्‌ढा[7] लक्ष्मीरद्यापि वक्षःस्थलस्थिता उह्यते एतेन यशोवर्महरिणा ॥ २४ ॥ कुलकम् ॥

॥ १०४० ॥ अथ राजप्रतापवर्णनार्थं चक्रकम् । दृश्यते करताडनरूढरुधिरसंवलित[श्यामल]च्छाय, हृदयार्धान्ते विरहाग्निधूममलिनमिव स्तनपृष्ठम् ॥

॥ १०४१ ॥ [8]वदनोद्वहननिवेशितकरोर्ध्वनखलक्षणमणिमयूखव्युच्छेदात् सदधति निरञ्जनत्वेन[9] निर्मलाः स्थूलाश्रुधाराः ॥

---

[1] MH. °निर्वृतये. [2] MH. कमठकूर्मपीठमिव for कमठः कूर्मः पीठमिव. [3] MH. महापीठं. [4] MH. कूर्मगर्तो° [5] MH. क्षुब्धजलधिनाऽऽर्द्रविरतैवमुत्प्रेक्षिताः [6] MH. क्षीणो. [7] MH. सरभसमुद्‌धृता. [8] MH °वदोर्ध्वं°. [9] MH. निरञ्जनत्वे.

घण-लम्बाल अ माला-णिरोह-खण-मेत्त-पुञ्जइज्जन्ता ।<br>
उम्हविय-गण्ड-वासं चक्कलइज्जन्ति णीसासा ॥ १०४२ ॥<br>
इय लीला-रोसुग्गम विसामिय-भुमयम्मि जम्मि वुब्भन्ति ।<br>
वेरि रमणीहिँ वेहव्व-लम्भ विहुराइँ अङ्गाइं ॥ १०४३ ॥<br>
जस्स मुह-मारुयाहय-विसन्त-भुयणन्तरेण उअराओ ।<br>
पुब्भइ अयण्ड-वम्भण्ड-डम्बरो पञ्च-अण्णेण ॥ १०४४ ॥

॥ १०४२ ॥ [[1]घनाः निविडाः तैलाभावात् लम्बाश्च शिरसः सकाशाद्वदनभागे लम्बमानाः ] । अयोजनात् । [ ताभिः ] अलकमालाभिर्निरोधेन क्षणमात्रं पुञ्जीक्रियमाणाः उष्णीकृतगण्डपार्श्वं कृत्वा चक्रीक्रियन्ते निःश्वासाः ॥

॥ १०४३ ॥ इति लीलारोपोद्गमविकसितभ्रूके यस्मिन् राशि उह्यन्ते वैरिरमणीभिर्वैधव्यलाभविधुराण्यङ्गानि ॥ ४ ॥ चक्रकम् ॥

. ॥ १०४४ ॥ जस्सेति युगलकम् । यस्य मुखमारुतेन शङ्खाध्मानार्थेन[2] आहतं सत् विशत् प्रविशत् भुवनान्तरम् अन्यतमं भुवनं यत्र तत् मुखमारुताहतविशद्भुवनान्तरम्[3] तेन उदरात् उह्यते च धार्यते[4] च अन्यतमब्रह्माण्डसादृश्यं पाञ्चजन्येन शङ्खेन ॥

भगवतो हि हरेरुदरे त्रयो लोकाः स्थिताः तेन तदाधारत्वेन

---

[1] MH, is corrupt here, omitting some part and misreading another of the chhâyâ, It has घे———————योजनात् अलकमालाभिस्तिरोधेन. [2] MH, °ध्मानोर्थेन. [3] So MH ! [4] MH, उह्यतेव धार्वते च which can hardly be a mistake for उह्यन इव धार्यन इव which if read by MH, would explain the reading of J, the only MS, that reads वुब्भइव, all others having वुब्भइ अयण्ड°.

सो एस केसवो उवसमुद्दमुद्दाम दाविया आमे ।
अह सोहइ सेसम्मिव णिययम्मि जसम्मि विणिसण्णो ॥१०४५

अह वा । १८

भारुव्वहणा जोग्गायरेण तारेहिँ णह मऊहेहिं ।
सेस सिसूहिंव चलणारविन्द घडिएहिँ सोहन्ति ॥ १०४६ ॥

अण्डत्रयमपि तत्र स्थितमिति [1]कोष्ठचपवनप्रेरित अन्यतमो लोक शङ्खाभ्यन्तरे प्रविष्ट [2]इति शङ्ख अन्यतमब्रह्माण्डत्वेनोत्प्रेक्षित अतिमहत्त्वात् ॥

॥ १०४५ ॥ स एप केशव । केशवावतारत्वात् । उपसमुद्र समुद्रसमीपे [3]उद्दामदर्शितायामे[4] एप शोभते शेप इव निजके यशसि [5]विनिपण्ण ॥ यशो जलधिपर्यन्तवैतत्याच्छौक्ल्याच्च [6]समुद्रशायिनारायणशय्यात्वापन्नशेपत्वेनोत्प्रेक्षितम्[7] ॥ २ ॥ युगलकम् ॥

॥ १०४६ ॥ अथ पोडशभि कुलकम् जनोपतापसमय निदर्शिताधिष्ठातृरूपपृथिवीशरीरदर्शितया धर्मप्रधानस्य [8]यशोवर्मणो वर्णयितुम् ॥ अथवेति[9] निपातसमुदाय अर्थान्तरप्रस्तावनार्थं । भारोद्वहनयोग्यादरेण तारैर्नखमयूखे शेपशिशुभिरिव चरणारविन्दघटितैः शोभमानाम्

किल तरुगिरिसागरसारित्सहिता भुव गोलकरूपा[10] शेपो धारयते शरीरिणीं तु नून [11]शेपसुनकाः इत्युत्प्रेक्षार्थीजम् ॥ १ ॥

---

1 MH °वन प्रे° 2 MH seems very corrupt here, reading इथ व तमन क 'शङ्खान्यतम° for इति शङ्ख अन्यतम° Our emendation is merely conjectural 3 MH उद्दाम° 4 MH° दर्शितायाम 5 MH विनिविष्ण 6 MH °शायिना नारायण°, 7 MH °त्मा शय°, 8 MH °आनृसनपार्थी नरेन्द्रर्निगया भत्तवतात्व यशो°, 9 MH, अथवेत च, 10 MH, °रूपा शेषो, 11 MH, °सुता.

भुयइन्द-फणा-मण्डल-णिवेस-पडिलग्ग-रयण-रायं व ।
चलण-जुयमावहन्ति पज्जत्तालत्तय-च्छायं ॥ १०४७ ॥
लीला-घोलाविय-चलण-मुहल-मञ्जीर-रव-मिलन्तेहिं ।
वुब्भन्ति सेस-फणा-वलएहिंव राय-हंसेहिं ॥ १०४८ ॥
कारण-किरि-खन्धुक्खेव-लग्ग-परिकविल-केसर-च्छायं ।
वहमाणि किरण-कलावमिरिण-रसणा-गुणुग्गिण्णं ॥१०४९॥
सेविज्जन्ति सरयण-रसणा-पडिणिव्वडन्त-पडिमेण ।
आढत्त-रोहणुद्दलण-वइयरेणंपिव जणेण ॥ १०५० ॥

॥ १०४७ ॥ भुजगेन्द्रफणामण्डलनिवेशनेन प्रतिलग्नरत्नरागमिव चरणयुगं[1] प्रवहन्तीं पर्याप्तालक्तकच्छायम्

॥ १०४८ ॥ लीलाघूर्णितचरणमुखरमञ्जीररवेण[2] मिलद्भिः संघटमानैः सजातीयभ्रान्त्या उह्यमानां सेव्यमानां [3]तद्वाहनां वा शेषफणावलयैरिव राजहंसैः

शौक्ल्यात् शेषफणासादृश्यं राजहंसानाम् । चरणसंचारिणीं च दृष्ट्वा वाहनभूता हंसा उपसर्पन्ति भगवतीं भूदेवताम् ॥

॥ १०४९ ॥ कारणम् भूम्युद्धरणम् तेन यः किरिर्वराहस्तस्य स्कन्धेन य उत्क्षेपः उत्क्षेपणं तेन लग्ना ये परिकपिशाः केसराः स्कन्धकेशास्तच्छायं तत्सदृशकान्ति वहन्तीं किरणकलापम् [4]इरिणरसनागुणोद्गीर्णम्
इरिणं सुवर्णम् ॥

॥ १०५० ॥ [5]सेव्यमानां [6]सरत्नरसनाप्रतिनिर्वर्तमानप्रतिमेन आरब्धरोहणोच्छलनव्यतिकरेणेव जनेन

[1] MH. चलन°. [2] MH. °मञरीमंजरवेग for मञ्जीररवेण. [3] MH. तद्वाहनान्
[4] MH. हरन°. [5] MH. सेव्यमानानां. [6] MH. °प्रतिवर्नमान°.

णाहि-विवरेण कारण-वराह-दाढा-वहेणव सहन्ति ।
पायाल-तमुब्भेयायमाण-रोमावलीएण ॥ १०५१ ॥
अज्जवि अणहृ-ट्ठिय-राम-रमणि-णिग्गमण-सीर-मग्गंव ।
उयरमहिराम वलि-वीइ-भङ्ग-विसमं पआसेन्ति ॥ १०५२ ॥
सोहन्ति हारावलि-वलन्त-रोमावली-तरङ्गेण ।
जउणा-संगय-गङ्गा-सोत्तेणव मज्झ-एसेण ॥ १०५३ ॥
लायण्ण-परिप्फुरमाण-परियणुक्खित्त-चामर-चएहिं ।
अन्तो-पायड-भूरुह-मूल-कलावंव दंसिन्ति ॥ १०५४ ॥

प्रतिमा प्रतिबिम्बम् । रोहन्त्यस्मिन् रत्नानीति रोहणं रत्नाकरः । तस्योच्छलने[1] मथने व्यतिकरो व्यापारो यस्य तेनेव[2] । [3]संचालित-
३ रत्नाकरेणेवेत्यर्थः

॥ १०५१ ॥ नाभिविवरेण कारणवराहदंष्ट्रापदेनेव शोभमानां पातालतमउद्भेदायमानरोमावलीकेन

॥ १०५२ ॥ अद्याप्यनघस्थितरामरमणीनिर्गमनसीरमार्गमिव उदरम् [4]अभिरामवलिवीचिभङ्गविषमं प्रकाशयन्तीम्

सीता हलविलिखनैर्भुवो जातेति प्रसिद्धिः । वलित्रयं [5]चोदरे तरुणी धारयत इति स्थितम् । [6]तत् हललेखात्वेनोत्प्रेक्षितम् ॥

॥ १०५३ ॥ शोभनानां हारावलीषु चलन्तो रोमावलीतरङ्गा [7]यत्र तेन गङ्गासंगतयमुनास्रोतसेव मध्यदेशेन

॥ १०५४ ॥ [ [8]लावण्यपरिस्फुरत्परिजनोत्क्षिप्तचामरचयैः अन्तःप्रकटभूरुहमूलकला ] [9]पमिव दर्शयन्तीम्

1 MH. तस्याधल्ने·पन for तस्योच्छलने मथने, which is a purely conjectural reading. [2] MH. तेनेव. [3] MH. संचलित°. The emendation is conjectural [4] MH. °वाची°. [5] MH. चोदारतरुणी for चोदरे तरुणी. [6] MH. °हलसेत्वात्वेन° [7] MH. यच. [8] MH. omits the portion shown in brackets. [9] MH. °पामिव दशयतीं.

पहु-दंसण-रस-पसरिय-ससेय-रोमञ्च-संचय-निहेण ।
सलिलाहय-देसुस[सियं] वीय-लयंव दंसन्ति ॥ १०५५ ॥
अन्तोवरिं च परिसंठिएण णह-णिण्णआएँव जलेण ।
पडिमा-पडिएण सियंसुएण संवलिय-थण-विम्बं ॥ १०५६ ॥
कण्ठ-कुसुमेसु बहुसो लीणुड्डीणेहिँ महुयर-कुलेहिं ।
आयासियङ्ग-लेहं सवक्ख-सेलेहिँव पुणोवि ॥ १०५७ ॥
मुत्ता-पेरन्तत्तण-पाविय-पायार-मण्डल-गुणेहिं ।
दिव्व-पुरेहिँव मणि-कुण्डलेहिँ संभावियाहोयं ॥ १०५८ ॥

भूमिशरीरे तरुमूलान्यन्तर्गतानि किल भवन्तीत्यौचित्यात्प्रेक्षा ॥

[॥ १०५५ ॥ प्रभुदर्शनरसप्रसृतसस्वेदरोमाञ्चसंचयनिभेन सलिलाहतदेशोच्छ्वसितां जलयुक्तप्रदेशे समुद्गतां बीजलतामिव दर्शयन्तीम्

१ बीजलता बीजकार्यकारिणी लता इक्षुदण्डादिका । इक्षवो हि भूम्यां रोपितेभ्यो लताखण्डेभ्यः प्रजायन्ते न तु बीजेभ्य इतरवृक्षवत् ॥ ]

॥ १०५६ ॥ [1]अन्तरुपरि च परिसंस्थितेन [2]नभोनिम्नगाया इव जलेन प्रतिबिम्बितेन सितांशुकेन [3]संवृतस्तनबिम्बाम्

॥ १०५७ ॥ कण्ठकुसुमेषु बहुशो लीनोड्डीनैर्मधुकरकुलैरायासिताङ्गलेखां सपक्षैः शैलैरिव पुनरपि

॥ १०५८ ॥ मुक्तापर्यन्तत्वेन प्रापितप्राकारमण्डलाधान्तैः । मण्डलगुणैरिति कचित्पाठः । दिव्यपुरैरिव मणिकुण्डलैः संभावितः १ आभोगः शरीरं विस्तरश्च स्थावरावस्थायां यस्यास्ताम्

1 MH. अंतउपरिष्टिनैन for अन्तरुपरि च परिसंस्थितेन. [2] MH. °भिन्नगाः for °निम्नगाया. [3] MH. संवृत्तं स्तनबिंबम्.

कुण्डल-ससि-सूरन्तर-णिसण्ण-कवरी-णिसा-विणीलद्धं ।
मुह-मण्डलं सुमेरुंव कणय-गोरं पयासेन्ति ॥ १०५९ ॥
सव्वत्तो हार-मऊह-दण्ड-पडियग्गियङ्ग-भावेण ।
उम्मिल्ल-णिम्मलाणेय-पह-समूहंव दीसन्ति ॥ १०६० ॥
अवयंस-कुसुम-णीसन्दमाण-रय-विन्दु-कलिय-मूलेण ।
गण्ड-त्थलेण दर-गलिय-रेणु-भावेणव सहन्ति ॥ १०६१ ॥
माला-वलएहिँ पइण्ण-सुरहि-कवरी-लयं महुयराण ।
वेणी-बन्धेहिँव बहु-णरिन्द-वेहव्व-पिसुणेहिँ ॥ १०६२ ॥

॥ १०५९ ॥ कुण्डले शशिसूराविव तयोरन्तरे मध्ये निषण्णं च तत् कवर्येव निशा रात्रिः तमः तया विशेषण [1]नीलार्धं नीलैकभागं मुखमण्डलं सुमेरुमिव कनकगौरं प्रकाशयन्तीम्

मेरुरेव सुमेरुः । मेरौ किल वामदक्षिणभागयोः सूर्याचन्द्रमसौ व्यवस्थितौ पश्चिमभागे तु तमः इति मुखेन कुण्डलाभ्यां पश्चात्प्रलम्बमानकबर्या च युक्तेन सादृश्यम् ॥

॥ १०६० ॥ सर्वतो हारमयूखमण्डलप्रतिजागरिताङ्गत्वेन उन्मीलितनिर्मलानेकप्रभासमूहमिव [2]दृश्यमानाम्

[ ॥ १०६१ ॥ अवतंसकुसुमनिःस्यन्दमानरजोबिन्दुकलितमूलेन गण्डस्थलेन ईषद्गलितरेणुभावेनेव शोभमानाम्

अवतसार्थानि केशेषु धारितानि यानि कुसुमानि तेभ्यः सकाशाद्गलता रजसां बिन्दुभिर्लिप्तमूलेन गण्डस्थलेन किंचिदार्द्रमूलपांसुमत्त्वमिव दर्शयन्तीमित्यर्थः ॥ ]

॥ १०६२ ॥ मालावलयैः प्रकीर्णसुरभिकबरीलतां मधुकराणां संबन्धिभिः [ वेणीबन्धैरिव बहुनरेन्द्रवैधव्यपिशुनैः ]

---

1 MH. नीलार्धेन ( -नीलार्धेन ? ). [2] MH. दृश्यमानम्.

इय सुव्वइ एसो इर सरीर-भाव-परिसंठियं वहुसो ।
पच्चक्खंचिय देविं पुहइं पुलएइ पीडासु ॥ १०६३ ॥

किं च । २

सीसइव जस्स ताराणुसारि-णिग्गय-कलङ्क-वलएण ।
अत्ति-णयणाहि अज्जवि समुब्भवो णियय-विम्बेण ॥१०६४॥
वंसम्मि तस्स रयणी-रमणस्स पुरा परिट्ठिया पहुणो ।
जे ताण अह पणामो एसो उण किंपि णिव्वडिओ॥१०६५॥

मालावलयैर्हेतुभूतैः प्रकीर्णसुरभिकबरीलतामिति संवन्धः । ताश्च
मधुकरमाला विमुक्तवेणीसादृश्याद्भवो ये नरेन्द्रा मेदिन्या भर्तारो
३ व्यतीतास्तत्कृतवैधव्यसूचकत्वेन कल्पिताः ॥

॥ १०६३ ॥ कुलकम् । [ [1]इति श्रूयते एप किल शरीरस्वप-
रिसंस्थितां वहुशः प्रत्यक्षमेव देवीं पृथिवीं पुलकयति पीडासु ॥
३ पीडा उपतापस्तत्कथनार्थमागतां प्रत्यक्षं भूमिं पश्यतीत्यर्थः ] ॥

॥ १०६४ ॥[2] सीसइ इति युगलकम् । शिष्यत इव कथ्यत
इव यस्य [3]तारानुसारैर्निर्गतकलङ्कवलयेन अत्रिनयनादद्यापि समुद्भवो
३ निजकाविम्बेन

॥ १०६५ ॥ वंशे तस्य रजनीरमणस्य पुरा परिष्ठिताः प्रभो-
र्यशोवर्मणो ये तेपामेप प्रणामः । स एप तु यशोवर्मा कोपि निर्वृत्तः

1 The MH. omits all. chhâyâ on this couplet. That given above is conjectural,the last portion commencing with पीडा उप° being, however, from a marginal note copied rfom Do.

2 MH, सीस इति for सीसइ इति  3 MH, तरोनु°.

अवि ७ । ४

सज्झस-संवेउम्मीलणेवि अलसुम्मुहा समुत्तरइ ।
दिट्ठी पहरिस-विरलायमाण-पम्हन्तरालेसु ॥ १०६६ ॥
तत्तोहुत्त-गयागय-हियय-वहाअन्त-णह-मऊहेण ।
कर-किसलएण लोलंसुयम्मि थण-मण्डले वसियं ॥ १०६७॥
गाढ-जहण-त्थल-क्खलण-मुहल-मणि-किङ्किणीअमुक्कम्पो ।
पडिकुसुमन्दोलिअ-कण्ठ-दाममङ्गं तरङ्गेइ ॥ १०६८ ॥

३ संपन्नः प्रकटीभूतः ॥ किल अत्रिनेत्राच्चन्द्रो जातः । ततश्च [1]कारणभूतकृष्णनयनतारानुरूप्येण चन्द्रे कलङ्कः । तेनैव च बिम्बकलङ्केनासौ व्यपदिश्यते शशीति । छायायां [2]शशशब्दप्रवृत्तेः । अहेति शब्दः एष इत्यस्यार्थे । तेषा तावत् एष लोकसिद्ध एव प्रणामो निर्वृत्तः चन्द्रवंशसमुद्भूतत्वादेव । स एष पुनर्यशोवर्मा कोपि सर्वातिशायी संपन्नः । यस्यापरिमितो गुणगणो [3]नारायणावतारत्वाद्विभज्य
९ गणयितुं न पार्यत इति पुनःशब्दात् [4]अध्याहारेण नेयम् ॥ २ ॥ युगलकम् ॥

॥ १०६६ ॥ नृपसौभाग्यं चक्रकेणाह । साध्वससंवेगोन्मीलनेपि अलसोन्मुखा समुत्तरति । [5]बाल्येनाप्रागल्भ्यात् । [ दृष्टिः ] प्रहर्षवि-
३ रलायमानपक्ष्मान्तरालेषु ॥ साध्वसं भयम् । कुतूहलमिति[6] केचित् ॥

॥ १०६७ ॥ तदभिमुखगतागतहृदयपथायमाननखमयूखेन करकिसलयेन लोलांशुके स्तनमण्डले उषितम् ॥

॥ १०६८ ॥ गाढजघनस्थलस्खलनमुखरमणिकिङ्किणीकम् उत्कम्पः कामजः परिकुसुमान्दोलितकण्ठदाम अङ्गं तरङ्गयति ॥

[1] MH. कारणभूत कृष्णनयनतारानुरूप्येण चंद्रे कलंकस्तेनैव च बिम्बे कलंकेनासौ.
[2] MH. °प्रवृत्ते. [3] MH विभज्य गणितुं. [4] MH. पुरः शब्दाध्याहारेण for पुनःशब्दात् अध्याहारेण. [5] MH. बाल्येन प्रागल्भ्यात्. [6] MH. इव for इति.

इय णिव्वत्तिय-सेज्जा-परिणयणाण पडिवक्ख-कुमरीण ।
जायन्ति जस्स पुरओ ससज्झसा वम्मह-वियारा ॥१०६९॥
केऊर-मरगओग्गिण्ण-किरण-कलिले भुयम्मि अप्पाणं ।
सा जस्स विणोएइव णलिणि-व्वणुक्कण्ठिया लच्छी ॥१०७०॥
अहियाराणल-कुण्डम्ब-मण्डलं ताव णं समक्कमइ ।
तिमिरं कुलमिव तारा-फण-रयण-वहं विसहराण ॥१०७१॥

॥ १०६९ ॥ इति निर्वर्तितशय्यापरिणयनानां प्रतिपक्षकुमारीणां जायन्ते यस्य पुरतः ससाध्वसा मन्मथविलासाः

शय्यापरिणयो गान्धर्वविवाहः । परिणयनं [ परिणयः ] ॥ तस्य के वयमिति वक्ष्यमाणेनात्र संबन्धः कर्तव्यः ॥ ४ ॥ चक्रकम् ॥

॥ १०७० ॥ अथ युगलकम् । केयूरमरकतोद्भिन्नकिरणैः कलिले व्याप्ते भुजे आत्मानं सा यस्य विनोदयतीव [ नलिनीव ] नो-
३ त्कण्ठिता लक्ष्मीः

कमलवनप्रियत्वात्सदृशे भुजे लक्ष्मीरात्मानं विनोदयतीव । नित्यनिवासेत्यर्थः ॥

[ ॥ १०७१ ॥ अभिचारानलकुण्डताम्रमण्डलं तावत् एतं यशोवर्माणं समाक्रामति तिमिरं कुलम् इव ताराफणरत्नवहं विषध-
३ राणाम्

मण्डलं शत्रुमण्डलम् । ताराफणरत्नवहं तारासदृशफणारत्न-
धारि सर्पाणां कुलम् । उक्तं त्वेतत् । तारासमुदायसदृशरत्नशिरः
६ सर्पाणां कुलं प्रति समाक्रामत् तिमिरं यथा नश्यति तथैव अभिचार-
कर्माग्निकुण्डेन ताम्रं यशोवर्मशत्रुमण्डलं तं समाक्रामत् नश्यतीति ॥ ]

पुहई-वइणो अम्हे सचरियावेयणम्मि के तस्स ।
सुव्वइ ण-पहुत्तंचिय तस्सवि फणिणो मुह-सहस्सं ॥१०७२॥
तहवि णिसामेह णराहिवस्स भुय-दप्प-दप्पणं एयं ।
रयणि-विरमम्मि णवरं पुरुमिल्ल-णरिन्द-णिद्दवणं ॥ १०७३ ॥
साहिज्जइ गउड-वहो एस मए संपयं महारम्भो ।
णिसुए मुयन्ति दप्प जम्मि णरिन्दा कइन्दा य ॥१०७४॥
एत्ताहे उण रविणो उव्वत्तिय-कमढ-पिङ्गल-च्छाओ ।
परिघोलइ वियलिय-किरण-कन्दलो विम्व-परिणाहो॥१०७५॥

॥ १०७२ ॥ पृथ्वीपतेर्वयं सच्चरितावेदने के-। न केचित् । तस्य यस्मिन्नै प्रभवैरयेव तस्यापि फणिनो जिह्वासहस्रद्वययुक्तं मुखसहस्रम् ॥ शेषोपि यस्य गुणकीर्तने न समर्थस्तस्य यशोवर्मणो मानुषमात्रा एकवदनाश्च कथं समर्था वयमित्यर्थः ॥ युगलकम् ॥

॥ १०७३ ॥ तथापि निशमयत शृणुत नराधिपस्य भुजदर्पदर्पणम् एतं वक्ष्यमाणकथाप्रबन्धं रजनीविरमे बहुपूर्वदेशीयनरेन्द्राणां निद्रापनं मारणम् ॥

॥ १०७४ ॥ साध्यते गौडवध एष [ मया ] सांप्रतं महारम्भः निश्रुते [1]आकर्णिते मुञ्चन्ति दर्पं यस्मिन् नरेन्द्राः कवीन्द्राश्च ॥ यशोवर्मचरितमाकर्ण्य नरेन्द्रा दर्पं मुञ्चन्ति काव्यगुणांश्च श्रुत्वा कवीन्द्रा दर्पं मुञ्चन्ति । रजनीविरम इति उपोद्घातप्रायम् [2]आभाषितम् ॥

॥ १०७५ ॥ ततः प्रदोषवर्णितं [3]षड्विंशकुलकमाह । इदानीमस्मिन्प्रदोषकाले पुना रवेरुद्वर्तितकमठपिङ्गलच्छायः परिघूर्णते विगलितकिरणकन्दलो बिम्बपरिणाहः ॥ परिणाह आयामः । [4]कमठः

1 MH. आकर्णेते. 2 MH. °भाषितम् for °भाषितम्, which is conjectural
3 MH. षड्विंश°. 4 MH. कमठ..

एए छाया-परियत्त-मुहल-पारावया पसज्जन्ति ।
गिरि-कुञ्जुण्णिद्द-मइन्द-णन्दिणो रण्ण-पेरन्ता ॥ १०७६ ॥
मइलिज्जइ दियसाहिव-किरणाइण्णत्थ-सेल-गलिएहिँ ।
आयस-रस-विसरेहिँव छाया-मग्गेहिँ महि-वेढं ॥ १०७७ ॥
सरिआण णिरन्तर-मिलिय-विहय-णिवहोवरोह-मुच्चन्ता ।
उव्वेल्लन्तिव णिव्वडिय-मण्डला पुलिण-वित्थारा ॥ १०७८ ॥

कूर्मः । तस्योद्वर्तितस्य उत्तानस्थापितस्य उदरमीषत्पाण्डुपिञ्जरं भवति । अस्तसमये रविबिम्बमपि तादृगेव ॥

॥ १०७६ ॥ एते [1]स्वेच्छापरावृत्तमुखरपारावताः[2] प्रसीदन्ति प्रसन्ना भवन्ति [3]रविकररजोरचितपाण्डुत्वनिवृत्ता[4] [5]गिरिकुञ्जोन्निद्र-
३ मृगेन्द्रनन्दिनः अरण्यपर्यन्ताः ॥

[॥ १०७७ ॥ मलिनीक्रियते दिवसाधिपकिरणाकीर्णास्तशैल-गलितैः आयसरसविसरैरिव छायामार्गैर्महीपृष्ठम् ॥ अत्रोक्तं भवति ।
३ दिनकरास्तमये सूर्यकिरणैराकीर्णत्वादस्तशैलाद्गलिता याश्छाया अन्धकारास्तासां मार्गैः प्रवाहैः पर्वताद्गलद्भिरयोरसप्रवाहैरिव पृथ्वीतलं मलिनीक्रियत इति मन्ये । इति ॥]

॥ १०७८ ॥ सरितां निरन्तरमिलितविहगनिवहोपरोधमुच्यमानाः उद्वेल्लन्तीव निर्वृत्तमण्डलाः पुलिनविस्ताराः ॥ [6]उपरुणद्धीत्यु-
३ परोधः । निवहश्चासावुपरोधो [6]निवहोपरोधः । उद्वेल्लनमुद्वेष्टनम् । [7]निर्वृत्तमभिव्यक्तम् ॥

[1] MH. So ! [2] MH. °मुखपारावताः. [3] MH. रविकिरजो.° [4] MH. °निवृत्ताः° [5] MH. °गिरिकुञराज्निद्र°. [6] MH. अपरुणद्धीत्यपरोधः । निवहश्चासावपरोधो निवहोपरोधः, thus exhibiting much uncertainty between उप° and अप ! [7] MH. निवृत्त°.

दूरत्तण-पढम-णियत्त-गो-हणा होन्ति णयर-मग्गेसु ।
सालम्ब-दिणयरच्चेअ धूसरा दिअस परिणामा ॥ १०७९ ॥
थोयमिव वियड-गमणा गरुयायन्त-जहणालसमुवेन्ति ।
धेणु-धवलीओ पण्हुय-पीणापीणा वणन्ताओ ॥ १०८० ॥
संवेल्लिऊण एक्कं दियसारम्भ-पडिसारियं विञ्झो ।
बिइयं पक्खंव पुणो छाया-वलयं पसारेइ ॥ १०८१ ॥

॥ १०७९ ॥ दूरत्वेन[1] प्रथमनिवृत्तगोधना भवन्ति नगरमार्गेषु सालम्ब एव दिनकरे अस्तम् अगतेपि धूसरा दिवसपरिणामाः । गवादिधूलीधूसरितत्वात् ॥

॥ १०८० ॥ स्तोकमिव । स्तोकमिति वीप्सा ज्ञेया । विकटगमनाः । वत्सोत्कण्ठया त्वरितगमनम्[2] क्षीरभरेण सुतृप्तत्वेन च स्तोकमिव च तत् । अत एवाह । 'गुरूयमाणजघनेनालसं कृत्वेति[3] । क्षीरपूर्णोधस्त्वेन च गुरुजघनत्वम् । उपयन्ति ग्रामनगरसमीपमुपसर्पन्ति[4] । धेनुधवल्यः धेनवश्च ता धवल्यः उत्तमगव्यः [5]प्रस्नुतापीनमोला वनान्तात् ॥ आपीनम् ऊधः ॥

॥ १०८१ ॥ संवेल्य संवेष्ट्य संवृत्य एकं [6]दिवसारम्भप्रतिसारित पक्ष विन्ध्यो द्वितीयपक्षमिव [7]ततश्छायावलयात्मकं रात्रिरूपं प्रसारयति प्रदोपसमये ॥ आदित्यपरिवृत्तिनिबन्धनोयं दिनरजनी-

[1] MH. दूरत्वेन वा प्रथम°. If the वा is not spurious, its presence indicates the loss of two alternative explanations of the word दूरत्वेन. [2] MH. °गमनाशीर°. [3] MH. गुरुयमाण°. [4] MH. उपसर्पंति. [5] MH. प्रस्नुता°. [6] MH. °प्रसारित for °प्रतिसारित. [7] MH. ततच्छाया°. ततः refers to J's text.

अन्दोलइ दिण-लच्छी पच्छिम-सेल-त्थलावलम्बासु ।
जरढ-सर-गण्ठि-रेहारुणासु रवि-किरण-मालासु ॥ १०८२ ॥
पच्छ ट्ठियायवत्तण-सुण्णइय-गवक्ख-मग्ग पइरिक्का ।
जाया समुज्जलालेक्ख-सुन्दरा मन्दिरद्धन्ता ॥ १०८३ ॥
तंसागय-रवि-यर-णिव्वडन्त-मूलन्तराल-वियडाइं ।
विरलायन्तिव्वँ छाया-णिग्गम-सिढिलाइँ रण्णाइ ॥ १०८४ ॥

विभागः । प्रदोषसमये च यस्या दिशि दिवसपक्ष आसीत्तत्र दिवसपक्षसंकोचेन रात्रिपक्षः प्रसरति ॥

॥ १०८२ ॥ आन्दोलति दोलामधिरोहति [1]संनिहितप्राया भवति दिनलक्ष्मीर्दिवससंपत् । पश्चिमशैलः अस्ताचलः । स एव छैलस्तदवलम्बासु जरठशरग्रन्थिरेखावदरुणासु रविकिरणमालासु ॥

॥ १०८३ ॥ प्रच्छादितातपत्वेन शून्यीकृतगवाक्ष[मार्ग] प्रैतिरिक्ता जाताः समुज्ज्वलालेख्यसुन्दरा मन्दिरार्धान्ताः चित्रगृहाभ्यन्तरभागाः ॥ दिवा हि रविकरसंसर्गविवर्णीभावभयेन वातायनान्याच्छाद्य स्थाप्यन्ते । अपराह्णे तु गवाक्षावरण जालकादिकम् अपसार्यते इत्यावारकशून्यत्वेन तमस. विरिक्ताः[2] शून्या भवन्ति चित्रगृहान्तःप्रदेशाः । आलेख्यं च चिरमुज्ज्वल प्रथते तदा ॥ पेच्छा[3] आअवत्तणेति पाठे पूर्वाभिमुखवातायनगृहेषु पश्चादपराह्णे तिष्ठत्यातप इति दीर्घप्रतिघातितापाभावेन चित्रस्योज्ज्वलत्वमिति योजनीयम् ॥

॥ १०८४ ॥ त्र्यश्रागतरविकरत्वेन निर्वर्तमानानि[4] प्रकटीभवन्ति

---

1 So MH. [2] MH. विरक्ताः [3] This is doubtless corrupt. Does the commentator refer to our reading above ? If so, the emendation ought to be पच्छट्ठियायवत्तण°. [4] MH. निवर्तमानानि.

सेलग्ग-खण विहत्ता रवि-वडण-क्रमेण दूरमुच्छलिया ।
घम्म-च्छेया इव तार अत्तणं एन्ति मउलिन्ता ॥ १०८५ ॥
एन्ति गह-मोत्तियद्धे पओस-सीहाहए दिणेहम्मि ।
व्हसिअ-द्विय रुहिराअम्ब-कुम्भ करणिं रवि-मियङ्का॥१०८६॥
जामवई-मुह-भरिए संज्झा मइराइ दिणयराहारे ।
आयास-केसरं दन्तुरेन्ति णक्खत्त-कुसुमाइं ॥ १०८७ ॥

यानि मूलान्यन्तरालानि च तैर्विकटानि विस्तीर्णत्वेन दृश्यमानानि विरलायन्त इव छायानिर्गमेन शिथिलानि कोमलानि शीतलान्यरण्यानि ॥

॥ १०८५ ॥ शैलाग्रे अस्ताचलशिरसि क्षणमात्रं विभक्ताः रविपतनक्रमेण दूरमुच्छलिताः शैलाद्[1] दूरमूर्ध्वं शलिता गता घर्म-[2]च्छेदा इव आतपाशा इव तारारूपत्वं यन्ति प्राप्नुवन्ति मुकुलीभवन्तः ॥ प्रदोषसमये तारानिकरस्तावच्छनैरभिव्यज्यते । तत्रेयमुत्प्रेक्षा । अधो गच्छति रवौ ऊर्ध्वं धावितास्तत्किरणा इव मुकुलीभूताः [3]संवलिताः सन्तः तारानिकररूपत्वमापन्ना इति ॥

॥ १०८६ ॥ एतः प्राप्तुतः ग्रहा एव मौक्तिकानि[4] तदर्थं प्रदोष एव सिंहस्तेनाहते दिनमेव इभो हस्ती तस्मिन् ह्सितः स्थितः पतितः स्थितो यो रुधिरेणाताम्रकुम्भः तत्करणि तत्सादृश्य रविमृगाङ्कौ ॥

[॥ १०८७ ॥ यामवतीमुखेन रात्रिमुखगण्डूषेण भरिते सध्याम-

---

[1] MH. is very corrupt here It reads शैल्दुलपत्रिगतौ दूरमूर्ध्वं सलिलागता for शैलाद् दूरमूर्ध्वं शलिता गता. The emendation is purely conjectural [2] MH. °च्छेआ. [3] MH. संचालता . [4] MH, inserts, doubtless from the previous line, the words कररूपत्वमा [पन्नाः] after मौक्तिकानि.

आयव-किलन्त-महिसच्छि-कोण-सोणायवं दिणन्तम्मि ।
उव्वत्तइ रविणो भू-कलम्ब-पुड-पाडलं बिम्बं ॥ १०८८ ॥
संज्झालत्तय-धरियम्मि उअह जलणोवलेव्व रवि-बिम्बे ।
णिव्वडइ धूम लेहव्व मासला जामिणि-च्छाया ॥ १०८९ ॥

दिरया दिनकराधारे दिनकररूपालवाले सति आकाशकेसरम् आकाशरूपं बकुलवृक्षं दन्तुरयन्ति नक्षत्रकुसुमानि ॥

बकुलः किल युवत्या मदिरागण्डूषसेकेन प्रफुल्लतीति उत्प्रेक्षाबीजमत्र । यामवती युवतिरिव । आकाशो बकुलवृक्ष इव । अस्तं गच्छन् दिनकरः आधार इव आलवालम् इव । संध्या मदिरेव । नक्षत्राणि पुष्पाणीव ॥]

॥ १०८८ ॥ आतपक्लान्तमहिषाक्षिकोणशोणातपं दिनान्ते अपवर्तते अस्तमेति[1] रवेर्भूकदम्बवरपरिपाटलं [ बिम्बम् ] ॥ भुवि यत्[2] कदम्बं पुष्पविशेषस्तद्भूकदम्बम् । [ कदम्बं ] हि किंचिज्जलेपि भवतीति भूविशेषणम् ॥

॥ १०८९ ॥ संध्यैवालक्तकं तत्र कलिते[3] धृते उअह पश्यत ज्वलनोपल इव [4]वह्निशक्तियुतसूर्यकान्ताख्यपाषाण इव रविबिम्बे निर्वर्तते धूमलेखेव मांसला घना यामिनीच्छाया यामिन्येव छायारूपा तस्या या कान्तिः ॥ धूमलेखा हि वह्निनिमित्ताथितोत्पद्यते इत्येवमुत्प्रेक्षा । संज्झालयत्तेति पाठे संध्यैव लता दारुदारु [5]तत्र कलित इति ज्ञेयम् ॥

---

[1] MH. om. °पति°. [2] MH. भुवि यः for भुवि यत्. [3] MH. वलि°. The emendation is conjectural. [4] So MH. [5] MH. तत्र.

जायंव धूम-संचय-कलुसारुण किरण-दन्तुरं रविणो ।
तिमिरोवयार-मुज्झन्त-विसम संज्झायवं बिम्बं ॥ १०९० ॥
काली-कय-सरस-गल-च्छेय-महा-महिस-विब्भमो मिलइ ।
अत्थायम्बिर-रवि-बिम्ब-चुम्बिओ तिमिर-संघाओ ॥१०९१॥
लहइ ससन्दण-तुरओ तिमिरक्कम्मन्त-पिञ्जर-सरीरो ।
महुमहण-गारुडुव्वत्त-पिच्छ-गरुल-च्छविं सूरो ॥ १०९२ ॥

[॥ १०९० ॥ जातमिव धूमसंचयकलुषारुणकिरणदन्तुरं रवेः तिमिरोपचारमुह्यद्विषमसंध्यातपं बिम्बम् ॥

तिमिरस्य उपचारेण उपगमनेन मन्दीभवन् अत एव विषमः अन्धकारेण मिश्रः सध्यातपो यस्य तत् रविबिम्बं धूमसंचयेन अनच्छैः आरक्तैश्च किरणैर्दन्तुरमिव जातमिति उत्प्रेक्ष्यते ॥]

॥ १०९१ ॥ काल्या कालरात्रिरूपधारिण्या गौर्या कृतो यः सरसगलच्छेदो [ महा ] महिषस्तत्सदृशो मिलति[1] सघटते अस्तसमये आताम्रं यद्रविबिम्ब [ तेन ] चुम्बितः स्पृष्टस्तिमिरसघातः ॥

॥ १०९२ ॥ लभते सस्यन्दनतुरगस्तिमिराक्रम्यमाणपिञ्जरशरीरः मधुमथनगौरवोद्वृत्तपिच्छो यो गरुडस्तच्छाविं सूरः आदित्यः ॥ [आदित्यः] स्वतो रक्तः ससृष्ट सध्यातिमिर कृष्णम् । स्यन्दने रथे ये तुरगास्ते हरिताः । गरुडोपि स्वरूपेण सौवर्णत्वाद्रक्तः तदुपरिस्थो हरिः कृष्णः । हरिभराक्रान्तगरुडोन्नमितं पिच्छं हरितम् । इति तुल्यता रविबिम्बस्य उन्नामितपुच्छेन हरिभराक्रान्तेन गरुडेन ॥

---

[1] MH. मीलति-

जाए णिरायवे दिण-यरम्मि गिरि-रेणु-पाडल-मऊहे ।
घोलइ मिलन्त-तिमिरा कुलीर-कविला दिण-च्छाया॥१०९३॥
णिय-कर-किलिञ्च-णीढत्थमत्थ-गिरि-पायवाहि रवि-बिम्बं ।
णिवडइ संज्झा-कललोल्ल-विहय-णाहण्ड-पिण्डंव ॥ ९१०४ ॥
थोउव्वत्तण-लक्खिय-संज्झारुण-गयण-तालु-पेरन्तो ।
कवलेइ पओस-करी विहाण-पिण्डंव रवि-बिम्बं ॥ १०९५ ॥

॥ १०९३ ॥ जाते [1]निरांशनयने दिनकरे गिरिरेणुभिस्तद्वद्वा पाटलमयूखे धूसरकिरणे घूर्णते मिलत्तिमिरा कुलीरवत्कपिला दिनच्छाया ॥ मीलईति पाठे निर्मीलति । विलीयत इत्यर्थः । प्रियतमम्लानौ कान्ताम्लानिरत्र द्योतिता । अत एव निराशनयन इत्युपात्तं साधारणम् । नयनानि रविकिरणा अपि । ते निराशाः दिक्ष्वप्रसारणात् । विगते च निराशनयने[2] नायके नायिका घूर्णते । कुलीरं कुसुमविशेषः ।

॥ १०९४ ॥ निजकरा एव किलिञ्चलतानिचयस्तन्मयं यन्नीडमालयस्तत्स्थम् अस्तगिरिरेव पादपस्तस्माद्रविबिम्बं निपतति संध्या [ कललार्द्र ] विहगनाथाण्डपिण्डाभम् ॥

॥ १०९५ ॥ [3]स्तोकोद्वर्तनं मनाग्मुखप्रसारणम् करिपक्षे । प्रदोपपक्षे च असमस्तकिरणापसारणम्[3] । तेन लक्षितं यत् संध्यया [4]तद्वद्वा अरुणगगनमेव तदवच्छिन्नं[5] [ वा ] तालुपर्यन्तो यस्य स [ कवलयति ] प्रदोषकरी विधानपिण्डमिव भक्ष्यकवलमिव रविबिम्बम् ॥

---

[1] MH. निराम°. [2] MH. निरानयने. [3] MH. स्तोकोद्वर्तनेन मनाग्मुखप्रसारणेन करिपक्षे प्रदोषपक्षे च समस्तोद्वर्तनमनल्पाकिरणापसारणम् । The correction is based on a note in the margin of Do, which runs thus;-स्तोकोद्वर्तनं मनाग्मुखप्रसारणं करिपक्षे प्रदोषपक्षे चासमस्तकिरणापसारणम्. [4] MH. तद्वारुण°. [5] MH. So.

णह-वट्टं दूरुण्णय-संज्झा-परिवेस-परियरं सहइ ।
अहिणव पडिवन्धायम्ब-बिम्ब-वियडावड च्छायं ॥ १०९६ ॥
पुरुमिल्ल-दिसा-गय-तिमिरमवर-भायावलम्बि-रवि-बिम्बं ।
गरुलमिव गहिय-गय-कुम्ममुअह परितम्बिरं गयणं ॥१०९७॥
पल्हत्थइ तिमिर-महा-वराह-पडिपेल्लिओ सुमेरुव्व ।
संज्झालोओ पडिलग्ग केसराअन्त-रवि-किरणो ॥ १०९८ ॥
वियडण्डम्मिव रवि-मण्डलम्मि मुक्कम्मि पढममरुणङ्के ।
णह-सिरि-विणयाइ ससी वुब्भइ वीयण्ड-पिण्डोव्व ॥१०९९॥

[॥ १०९६ ॥ नभःपृष्ठं दूरोन्नतसंध्यापरिवेषपरिकरं शोभते अभिनवप्रतिबन्धाताम्रबिम्बविकटावटच्छायम् ॥

दूरोन्नतं दूरम् अत्यन्तमुच्चैः दिङ्मण्डलमूलादुद्गता या संध्या स एव परिवेषपरिकरो यस्य तत् नभ.पृष्ठं शोभते । किमिव । अभिनवः प्रतिबन्धः अपूर्वः प्राकारो यस्य स तथा च आताम्रबिम्ब ईषत्ताम्रबिम्बं सूर्यरूपं यस्मिन् तादृशः तथैव च विकटो महान् योऽवटः तद्वदित्यर्थः ॥]

॥ १०९७ ॥ पूर्वदिगागततिमिरम् अपरभागावलम्बिरविबिम्बम् गरुडमिव गृहीतगजकूर्मं पश्यत [1]परिताम्रं गगनम् ॥ पूर्वं गरुडेन गजकूर्मौ भक्षयितुमुपक्रान्ताविति प्रसिद्धिः तदभिप्रायेणेयम् उत्प्रेक्षा ॥

॥ १०९८ ॥ पर्यस्यति विशरारुतां भजते तिमिरमेव [ महा ]-वराहः । मलिनत्वात् । तेन प्रतिप्रेरितः सुमेरुरिव । रक्तत्वात् । सध्यालोकः प्रतिलग्नकेसरायमाणरविकिरणः ॥

[॥ १०९९ ॥ विकटाण्ड इव रविमण्डले मुक्ते प्रथमम्

[1] MH. परिताम्र.

आसार-पसर-सरला ताली-वण-दण्ड-धूसरा होन्ति ।
गन्धव्व-पुरायारा णिरायवा रवि-यर-णिवेसा ॥ ११०० ॥
रेहावसेस-दिणयर-मऊह-णिव्वडिय-दण्ड-पडिबन्धा ।
जालाअइ सालोआ अवर-दिसा भुवण-भवणस्स ॥११०१॥
गयण-महि-वेढ-णीलो मज्झे संज्झावसेस-पडिभिण्णो ।
घोलइ खज्जूर-क्खन्ध-पाडलो तिमिर-संघाओ ॥ ११०२ ॥

अरुणाङ्के नभःश्रीविनतया शशी उह्यते द्वितीयाण्डपिण्ड इव ॥ रवि-मण्डलरूप आरक्ते विकटेण्डे प्रथमं मुक्ते सति गरुडमात्रा विनतयेव नभःश्रिया चन्द्रो द्वितीयोण्डपिण्ड इवोह्यत इत्यभिप्रायः ॥]

॥ ११०० ॥ आसारो वेगवद्वर्षः । 'तःप्रसरवत्सरलास्तालीवनदण्डवद्धूसरा [ धूसरा ]लोकत्वाद्भवन्ति गन्धर्वपुराकाराः । कार्यविशेषकारित्वाभावात्' । निरातपा निरालोका रविकरनिवेशाः ॥

॥ ११०१ ॥ 'रेखावशेषदिनकरमयूखनिर्वर्तितदण्डप्रतिबन्धा जालायते गवाक्षायते सालोका अपरा दिक् भु[वनमेव भ] वनं तस्य संबन्धिनी ॥ जालके मध्ये अन्तरान्तरा स्तम्भदण्डा भवन्ति आलोकश्चान्तरान्तरा । तद्वत् तस्यां रविमयूखा एव दण्डा आलोकश्चान्तरान्तरा तत्प्रभारूपः । अथ वा तमो लतादण्डा इव मध्येमध्ये च आलोकः ॥

॥ ११०२ ॥ 'गगनमहीपीठप्रदेशयोर्नीलो मध्ये संध्यावशेषेण' प्रतिभिन्नो घूर्णते 'मध्ये खर्जूरस्कन्धवत्पाटलः पाण्डुरस्तिमिरसंघातः ॥

दीसइ दिसासु तारा-सहरी-जालाविला तिमिर-लेहा ।
रवि-पडण-संभमारम्भ-रहस-चलियव्व कालिन्दी ॥ ११०३ ॥
सायं मिलन्ति कम-णिव्वडन्त-तम-मण्डलावउण्णाओ ।
आसण्ण-भाव-पायड-णियय-गइन्दाओव्व दिसाओ ॥११०४॥
ऊससिय-सामलारुण-तम-वेल्ली-मूल-लक्खियं कोवि ।
गयण-च्छलरुणयकंचमिन्दु-बिम्बं समुद्धरइ ॥ ११०५ ॥

खर्जूरतरुर्मूलपल्लवप्रदेशयोः कृष्णो भवति मध्ये च फलभरेण पाटलः ॥

॥ ११०३ ॥ दृश्यते दिक्षु तारा एव शफर्यस्तासां जालेन समूहेनाविला व्याप्ता तिमिरलेखा रविं प्रति यत्पतनं गमनं तदर्थो य-¹सम्यगारम्भः प्रारम्भस्तद्रभसेन चलितेव प्रत्यावृत्तेव कालिन्दी यमुना ॥ सा किल आदित्यदुहिता । अतस्ततः प्रसूता सती पुनरादित्यमेव गन्तुं प्रत्यावृत्तेत्यर्थः ॥

॥ ११०४ ॥ साय मिलन्ति क्रमनिर्वर्तमानतमोमण्डलावपूर्णाः आसन्नभावप्रकटनिजकगजेन्द्रा इव दिशः ॥

[॥ ११०५ ॥ उच्छ्वसितश्यामलारुणतमोवल्लीमूललक्षितं कोपि । गगनस्थल‾ ‾ ‾इन्दुबिम्बं समुद्धरति ॥

उच्छ्वसिता उद्गता या श्यामलारुणा तमोरूपा वल्ली तस्या मूलत्वेन कन्दत्वेन लक्षितम् आभासमानम् उद्यन्तम् इन्दुबिम्बं कोपि समुद्धरतीति कवेःकल्पनात्र । गयणच्छलरुणयकंचम् इति कोपि पाठप्रमादःएकमात्रोनत्वात् । तस्मादेव प्रमादात् अर्थोपि दुःसाध्यतमः॥]

¹ MH. सम्यरारम्भः.

होन्त-वसुहाहिव-कहा-कोऊहल-कड्ढियाओव्वँ मिलन्ति ॥
दियस-विराम-च्छावि-धूसराओँ समयंचिय दिसाओ॥११०६॥

बहलत्तण-कुहरूससिय-तम-सिहा-लङ्घणोणउच्छङ्गा ।
देन्ति थलुद्देसाच्चिय थोयालोया दरी-सङ्कं ॥ ११०७ ॥

आलोओ परिघोलइ ससिणो छाया-णिवेस-वोच्छिण्णो ।
मलिणाणुसार-पसरिय-कसण-च्छावि-मग्ग-सबलोव्व ॥ ११०८

दीसइ णिसासु तारा-णिहेण फुडिय-विरल-ट्ठिय-कवालं ।
बम्भण्डग्ग-पुडंपिव का[?]न्तर-जज्जरं गयणं ॥ ११०९ ॥

॥ ११०६ ॥ अनन्तरं नराधिपकथाकुतूहलाकृष्टा इव मिलन्ति दिवसविरामच्छाविधूसराः सममेव तुल्यकालमेव दिशः ॥ अनन्तरोक्त्या[1] वक्ष्यमाणयशोवर्मकथाश्रवणकुतूहलेनेव एकत्र संघटिता इति यशोवर्मचरितस्य दिग्देवताकर्णनयोग्यतोक्ता ॥

॥ ११०७ ॥ निबिडत्वेन कुहरादुच्छ्वसितमुष्टिग्राह्यतमःशिखालङ्घनावनतोत्सङ्गा[2] नतरूपाः संजाता अतितमोवशात् ददति स्थलोद्देशे एवोन्नतस्थाने[3] एव मन्दप्रकाशाः सन्तो [दरीशङ्कां] विवरभ्रान्तिम् ॥

[॥११०८॥ आलोकः परिघूर्णते शशिनः छायानिवेशव्युच्छिन्नः मलिनानुसारप्रसृतकृष्णच्छविमार्गशबल इव ॥ प्रदोषकाले सूर्यातपस्य निःशेषम् अनपगतत्वाद्या छाया तया शशिन आलोको मध्येमध्ये मिश्रो भवति तत्रोत्प्रेक्ष्यते शशिनः शशरूपमलिनस्य कलङ्कस्य या तत्सदृशी कृष्णा प्रतिकृतिः सा तस्य आलोके दृश्यत इति ॥]

॥ ११०९ ॥ दृश्यते निशि तारानिभेन स्फुटितविरलस्थितक-

---

1 MH. °रोक्तस्य° 2 So MH. 3 So MH. But should we not rather read स्थलोद्देशा एव उन्नतस्थानान्येव ?

जायाओ कम-पसम्मन्त-धूम-रय-णिग्गमावरोहाओ ।
आरूढ-पओसा ओवि पविरल-तिमिराओव दिसाओ॥११११०॥

मूढ-सासि-दिणयरालोय-मज्झ-पुञ्जिज्जमाण-तम-कसणं ।
संजायमुहय-धारा-णिम्मल-खग्गोवमं गयणं ॥ ११११ ॥

पेरन्तेसु दरावद्ध-तिमिरमोसुक्क-कमल-परिसामं ।
आभाइ लावय-वहू-वच्छ-कसाय-प्पहं गयणं ॥ १११२ ॥

गह-निवह-बिन्दु-संदोह-समिय-संज्झाणलो समुक्खिवइ ।
उयय-सुपण्णो गयणम्मि अमय-कलसंव ससि-बिम्बं॥१११३॥

पाल ब्रह्माण्डाग्रपुटमिव कालान्तरेण चिरकालत्वेन पुराणभावेन
३ जर्जरं गगनम् ॥

॥ १११० ॥ जाताः क्रमेण प्रदोषपुराणत्वानुपूर्व्या प्रशाम्य-
द्धूमरजःकृतो निर्गमानां मार्गाणाम् अवरोधः आवरणं यासु ताः
३ आरूढप्रदोषा अपि प्रविरलतिमिरा इव दिशः ॥

॥ ११११ ॥ मूढशशिदिनकरालोकेन मध्ये पुञ्जीक्रियमाणेन
तमसा कृष्णं संजातम् उभयधारानिर्मलखड्गोपमं गगनम् ॥ मूढत्वं
३ मन्दत्वम् ॥

[॥ १११२ ॥ पर्यन्तेषु ईषदाबद्धतिमिरम् अवशुष्ककमलप-
रिश्यामम् आभाति लावकवधूवक्षःकषायप्रभं गगनम् ॥]

[॥१११३ ॥ ग्रहनिवहबिन्दुसंदोहशमितसंध्यानलः समुत्क्षि-
पति उदयसुपर्णः उदयाचलरूपो गरुडो गगने अमृतकलशमिव
३ शशिबिम्बम् ॥ संदोहः समूहः ॥]

तम-महुयर-जालुप्पयण-पयड-मय-मण्ड लंणिसा-वइणो ।
बिम्बं माहवमिव पिण्ड-खण्डमावाडलं उअह ॥ १११४ ॥

उक्खिप्पइ गयण-तुला-दण्डेण समूससन्त-कर-केऊ ।
पच्छा-रवि-पिण्ड-भेराणएण कलसोव्व ससइन्धो ॥१११५॥

संणद्ध-मयण-साहिज्ज-जाय-संरम्भ-पाडलो णीइ ।
परिवेस-च्छल-मण्डलिय-चाव-वलओव्व हरिणङ्को ॥१११६॥

पावइ उयया अम्बो ईसि-सिढिल-क्खलिय-तणिण-तम-लेहो ।
लहसिय-विणीलंसुय-मत्त-हलहराहं णिसा-णाहो ॥ १११७ ॥

॥ १११४ ॥ तमोमधुकरजालोत्पतनप्रकटमृगमर्थं मण्डलं निशापतेर्बिम्बं माधवमिव पिण्डखण्डमापाटलं पश्यत ॥ मधुनोयं
३ माधवो माक्षिकसंबन्धी ॥

॥ १११५ ॥ उत्क्षिप्यते गगनमेव तुलादण्डस्तेन सम्यगुच्छ्वसन्तः करा एव केतुस्तुलासूत्रं यत्र स पश्चाद्भागे रविपिण्डभरावन-
३ तेन कलश इव शशचिह्नः ॥

[॥ १११६ ॥ [2]संनद्धमदनसाहाय्यजातसंरम्भपाटलो निर्याति परिवेपच्छलमण्डलितचापवलय इव हरिणाङ्कः ॥ ]

॥ १११७ ॥ प्राप्नोति उदयसमयत्वात् आताम्रः ईषच्छिथिलः स्खलिततनुतमोलेखः हसितमीषत्पतितं विनीलांशुकं यस्य स चासौ
३ मत्तः क्षीबो हलधरस्तस्याभा कान्तिं निशानाथः ॥ [3]पावइ तइया इति पाठे प्राप्नोति तदेत्यर्थः । आताम्र इति पृथक्पदम् ॥

---

[1] See *Various Readings*. [2] MH. has no commentary on this couplet, which is found in all De J K P. We doubtless owe the omission to the blundering scribe. [3] MH. प्राप्नोति for पावइ.

अवि य ।

तक्खण-कामि-अणाणिय-महु-चसओयरण-लद्ध-रायंव ।
उब्भिज्जइ बिम्बं सङ्ख-णाहि-सोणं णिसा-वइणो ॥ १११८ ॥
ऊससइ विलोल-करत्तणेण पङ्कय-विणास-वुद्धीए ।
रहसुम्मूलिय-परिलम्बि-बिस-कलावोव्व सस-इन्धो ॥१११९॥
इय जम्पिऊण सयणावलम्बिणा तेण देव-चरियाण ।
आवेयणम्मि अप्पा अपहुप्पन्तोव्व पडिवण्णो ॥ ११२० ॥
जाओच्चिय कायव्वे उच्छाहेन्ति गरुयाण कित्तीओ ।
ताओच्चिय अतह-णिवेयणेण अलसेन्ति हिययाइं ॥११२१॥

॥ १११८ ॥ तत्क्षणकामिजनानीतमधुचषकावतरणलब्धरागमिव उद्भिद्यते बिम्बं शङ्खनाभिशोणं निशापतेः ॥ तत्क्षणः चन्द्रोदयस-
३ मयः ॥

॥ १११९ ॥ [1]उच्छ्वसिति विलोलकरत्वेन हेतुना पङ्कजविनाश-बुध्या रभसोन्मूलितपरिलम्बनशीलबिसकलाप इव शशचिह्नः ॥
३ ससिबिम्बो[2] इति पाठे प्राकृते छन्दोवत् लिङ्गव्यत्यय इष्टः ॥

॥ ११२० ॥ इति जल्पित्वा शयनावलम्बिना तेन वाक्पतिराजेन देवचरितानां यशोवर्मदेवचेष्टितानाम् आवेदने आत्मा अप्रभ-
३ वान्निव[3] सामर्थ्यरहित इव प्रतिपन्नः ॥ आत्मैव प्राप्तः अन्तर्मुखः सं-
[a]
पन्नः । निद्रया प्राप्त इति यावत ॥ ३७ ॥ कुलकम् ॥

॥ ११२१ ॥ या एव कर्तव्ये [4]विशेषार्थम् [5]उत्साहयन्ति [6]व्यवसाययन्ति गुरूणां कीर्तयो वर्ण्यमानाः श्रूयमाणाश्च ता एव अत-

1 MH. उच्छ्वसति. [2] MH शशिबिम्बो. [3] MH. अप्रभवन्निजसामर्थ्य°. *a.* So MH. [4] MH. कर्तव्येतिविशेषार्थम् which seems corrupt. The emendation is conjectural. [5] MH. reads the following between उत्साहयन्ति and व्यवसाययन्ति, viz., ईदृश कर्म तु नामाहमप्याचरामीत्यऽ°, which seems to be intended to explain उत्साहयन्ति, but which is hopelessly corrupt. [6] MH. व्यवसायन्ति.

णव्वरिय के वावारा पवाहिउं पयत्ता ।

कामो वर-कामि-यणं केसर-उव्वेहिँ भिन्दइ सरेहिँ ।
इयर-जण-बाण-कज्जम्मि कुणइ हेयाइँ कुसुमाइँ ॥ ११२२ ॥
कीएँवि अहिणव-भुमया-णडाल-परिसुद्धि-लद्ध-परिणाहं ।
अहिय-पिहुल-लोयण-जुयं विसेस तारं मुहं सहइ ॥ ११२३ ॥
वीयाभरणा अकयण्ण-मण्डणा अहिहरन्ति रमणीओ ।
सुण्णाओवि कुसुम-फलन्तरम्मि सहयार-वल्लीओ ॥ ११२४ ॥

३ थानिवेदनेन सकलप्रतिपादनसामर्थ्याभावेन अलसयन्ति अनुत्साहयुक्तानि कुर्वन्ति हृदयानि ॥ सिद्धो हि लोके अशक्यकर्तव्येष्वनुत्साह इति युक्तोक्ता वाक्पतिराजस्य [1]आत्मप्रतिपत्तिर्देवचरितेषु ॥

॥ ११२२ ॥ अधुना [2]प्रदोपसमयोचितकामिचर्चां [3]पञ्चदशभिराह । कामो वरसुत्कृष्टं वैदग्ध्याद्यलंकृतं कामिजनं केसरनामकुसु-
३ मपूर्वकैः केसरादिभिरुत्तमैर्भिनत्ति स्वक्रियां प्रवर्तयति शरैः । इतरे तु ये जना अविदग्धादयस्तेषां यद्बाणकार्यं तत्र करोति शेषाणि कुसुमानि मन्दादरेण तान् प्रवर्तयति ॥ केसरं बकुलम् ॥

॥ ११२३ ॥ कस्या अपि अभिनवभ्रूललाटपरिशुद्धिलब्धपरिणाहम् तथा अधिकपृथुलोचनयुगं विशेषतारं मुखं शोभते॥ परिणाहः
३ पारिमाण्डल्यम् । उद्वर्तनोत्पुंसनादिना च अधिकपरिशुद्धिः । विशेषशुद्धे च वदने लोचनतारकप्रमृतीनां विपुलत्वेन प्रतिभासः ॥

॥ ११२४ ॥ वीताभरणाः स्नानादिसमये अकृतान्यमण्डन,

1 So MH, distinctly. Unless आत्मप्रतिपत्तिः be a blunder for आत्माप्रतिपत्तिः (*i. e.*, hesitation to admit his fitness to sing his master's glory), the phrase आत्मप्रतिपत्तेः must be taken to mean आत्मा अयमस्य कर्तव्येष्विति प्रतिपत्तिः अङ्गीकारः. [2] MH, °मन्दयोचित°. [3] So MH. Should not the commentator rather say षोडशभिः if not indeed सप्तदशभिः? See his remark on No 1134.

गहिय-विविहङ्गराओ अकयञ्जण-ञ्चसुर-मञ्जरी-रयणो ।
पावइ असमत्तालेक्ख-विब्भमं कामिणी-सत्थो ॥ ११२५ ॥
कोली-कय-कालायरु-धूमुप्पील-च्छलेण पडिहाइ ।
रमणाहिसारणे कावि पहरिसालिङ्गिय-तमव्व ॥ ११२६ ॥
ऊरु-जुयं मलय-भवङ्गराय-विणिवेस-दर समूससियं ।
गुरु-जहणुव्वहण-सहं कयंव थोरं थणवईहि ॥ ११२७ ॥

अभिहरन्ति रमण्यः शून्या इव कुसुमफलयोरन्तरे मध्ये सहकार-
३ मञ्जर्यः । वी गतिप्रजनेति[1] वीतमपसृतम् ॥

॥ ११२५ ॥ गृहीतविविधाङ्गरागः [2]आकृताञ्जनसञ्चुरमञ्जरीर-चनः प्राप्नोति असमाप्तालेख्यविभ्रमं कामिनीसार्थः ॥ सँञ्चुरं ताम्बूलम् । मञ्जरी कर्णपूरादि । आलेख्यश्चित्रम् ॥

॥ ११२६ ॥ [3]क्रोडँस्थिँतकालागरुधूमोत्पीडच्छलेन प्रतिभाति रमणाभिसारणे कापि प्रहर्षालिङ्गिततमस्केव ॥ अभिसारिका हि
३ अन्धकारगामिनी भवतीति तमःप्रियत्वम् ।

या दूतिकागमनकालमपारयन्ती
सोढुं स्मरज्वरभयार्तिपिपासितेव ।
निर्याति वल्लभजनाधरपानलोभात्
सा कथ्यते कविवरैरभिसारिकेति ॥

[इति] हि अभिसारिकालक्षणम् । कोलीकय इति क्वचित्पाठः तत्र शरीरधूपनार्थः स्वीकारः क्रोडीकारः ॥

॥ ११२७ ॥ ऊरुयुगं [4]मलयभवाङ्गरागविनिवेशेनेपत्समुच्छ्वसित

---

1 So MH. 2 MH. So. 3 MH. °गुरु°. 4 MH. °विनिवेशनेषव.

लक्खिज्जइ सीसे सरसमेव कण्ठे पओहरुम्हावियं ।
विसमं कुसुमाभरणं सम-काल-कयंपि जुवईण ॥ ११२८ ॥
थण पडिमागय-परिणील-जालिया-मण्डणं वरो एइ ।
वम्मह सर-सङ्का-हियय-गहिय-कवयंव णव-वहुयं ॥ ११२९ ॥
अविओय-गमिय-दियसं सम-गहिय-पसाहणं पओसम्मि ।
सोहइ रयावियण्हं सयणागमणूसुयं मिहुणं ॥ ११३० ॥

गुरुजघनोद्वहनसहमिव कृतं स्थूलं स्तनवतीभिः ॥ भूम्नि [1]भरवर्थीय इति स्तनवतीभिरिति । अत एव स्तनादिभरसहनाय चन्दनेन [2]स्थूलं कृतमित्युत्प्रेक्षितम् ॥

॥ ११२८ ॥ लक्ष्यते शिरसि सरसमेव कण्ठे पयोधरोष्मायितं सोष्मं कृतम् । ईषच्छोषितमित्यर्थः । विषमं कुसुमाभरणं समकालकृतमपि युवतीनाम् ॥

॥ ११२९ ॥ स्तनयोः प्रतिमारूपेण प्रतिबिम्बरूपेणागता या प्रतिनीलाकारा जालिका[3] जालिकादि पट्टादिमयं शिरोवस्त्रं सैव मण्डनं यस्यास्तां वरः एति मन्मथशरशङ्कया हृदयघटितकवचामिव [ नव ] वधूम् ॥

॥ ११३० ॥ अवियोगगमितदिवस समगृहीतप्रसाधनं प्रदोषे शोभते रतिविषये अवितृष्णं पृद्धतर्पम्[4] अत एव शयनागमोत्सुकं मिथुनम् ॥

---

[1] MH. भूम्निभरवर्थीय. [2] MH. स्थ्. [3] MH. कालिका.
[4] MH. पृद्धर्पं. The emendation is conjectural.

गलिउम्मऊह-पिहु-हेम-मेहला-वलय-मालिणी कावि ।
वम्मह-भयाहिसंधिय-सिहि-पायारव्व पडिहाइ ॥ ११३१ ॥
ण सहिज्जइ कामि-यणेण विरह-वियणा-विसंठुलङ्गेण ।
सासिणो रवि-मण्डल-संपवेस-तत्तंव कर-जालं ॥ ११३२ ॥
जायाइँ दुलह-दइयाणुराय-रणरणय-मुक्क-थामाण ।
तणुयायन्ताइँवि कामिणीण गरुयाइँ अङ्गाइं ॥ ११३३ ॥

अवि य ।

पडिरोहि-कण्ण-पल्लव-पणोल्लणत्थंव तुलिय-भुमयग्गा ।
अग्घइ णिमेस-णियमण-फुरन्त-पम्हाउरा दिट्ठी ॥ ११३४ ॥

॥ ११३१ ॥ गलिता ऊर्ध्वमयूखा पृथ्वी या हेममेखला [तदेव वलयं] तन्मालिनी मालायोगिनी कापि मन्मथभयाभिसंहिताशिखिप्राकारेव[1] प्रतिभाति ॥ शिखी वह्निः ॥

॥ ११३२ ॥ न सह्यते कामिजनेन [2]विरहवेदनाविसंष्ठुलाङ्गेन शशिनो रविमण्डल[सं]प्रवेशतप्तमिव करजालम् ॥ विरहिणिना मदनदीपनत्वेन द्वेष्याः शशिकराः । तत्रेत्थमुत्प्रेक्षा कृता । शशिनः कृष्णपक्षे रविमण्डलप्रवेशो ज्योतिःशास्त्रे प्रसिद्धः ॥

॥ ११३३ ॥ जातानि दुर्लभदयितानुरागरणरणकमुक्तस्थाम्नां तनूयमानान्यपि कामिनीनां गुरूण्यङ्गानि ॥ स्थाम बलम् ॥

॥ ११३४ ॥ अथ पञ्चभिः कुलकम् । [3]तैत्रकया उपसंहारः । चतसृभिस्तु सह षोडश पूर्वोद्दिष्टा भवन्ति ॥ प्रियतमावलोकनप्रतिरो-

---

[1] MH. °प्रकारेव. [2] MH. °संस्थुला°. [3] MH. तत्रैकयोगे संहारचतसृभि°. The emendation is purely conjectural. See, however, the commentator's remark on No. 1122.

णमइ णडालंचिय लज्जिएसु कर-मलिय-कण्ठ-कुसुमेसु ।
उव्वत्त-पम्ह-चुम्बिय-पुडाइँ ण हु णाम अच्छीइं ॥ ११३५ ॥
हत्थो घोलइ दंसण-समओसारिय-णिरिङ्गि-विणिवेसो ।
बाणी कयाच्छि-संधाण-गहिय-सवणावयासोव्व ॥ ११३६ ॥
लज्जोणय-वयणालक्खिपक्क-दर-वियासियाहरन्ताइं ।
गमणम्मिवि आवज्झन्ति वलिय-मज्झाइँ दिट्ठाइं ॥ ११३७ ॥
इय कामिणीण पिययम-समागमुम्मिल्लमाण-मयणाण ।
सज्झस-पडिबद्ध-रसाइं होन्ति लीलाइयव्वाइं ॥ ११३८ ॥

धनशीलकर्णपल्लवप्रणोदनार्थमिव तुलितभ्रूमार्गा अर्धति निमिषनिय-मनस्फुरत्पक्ष्मालुरा दृष्टिः ।

॥ ११३५ ॥ नमति ललाटमेव लज्जितेषु 'करमर्दितकण्ठकुसुमेषु दर्शनोद्वृत्तचुम्बितपक्ष्मपुटानि' न खलु नाम अक्षीणि ॥

॥ ११३६ ॥ हस्तो घूर्णते दर्शनसमये अपसारितो निरि [ ङ्गि-विणिवेसो ] शिरोवाससो विनिवेशो येन स बाणीकृतं यदक्षि तस्य संधानार्थं गृहीतश्रवणावकाश इव गृहीतकर्णप्रदेश इव ॥ शराकर्षणं हि कर्णान्तं क्रियते धानुष्कैः ॥

॥ ११३७ ॥ लज्जावनतवदनालक्षितैकपद्विकसिताधरान्तानि गमनेपि क्रीडार्थोद्यानविहरणावसरेपि 'आबध्यन्ते पार्यन्ते प्रियदर्शनैकनिष्ठतया वलितमध्यानि दृष्टानि दर्शनानि चक्षुर्व्यापाराः ॥

॥ ११३८ ॥ इति उक्तप्रकारेण कामिनीनां प्रियतमसमागमोन्मीलन्मदनानां साध्वसप्रतिबद्धरसानि अप्रागल्भ्यप्रतिबद्धशृङ्गाररसकार्याणि भवन्ति लीलायितव्यानि ॥ ५ ॥ कुलकम् ॥

[1] MH. °मलि°.   [2] MH. °चुंबि पम्ह°.   [3] MH. आबध्यन्ते.

ललणा वल्लह-हुत्तं विलास-विस-मण्डणाओं वोलेन्ति ।
णीसङ्कंचिय वन्दी-कइन्दु-किरणाओव्व णिसासु ॥ ११३९ ॥
सरस-मय-तम्बिमाहय-किसलय-मालायमाण पम्हाई ।
रमण-पवेसत्थंपिव पियाण वियसन्ति अच्छीइं ॥ ११४० ॥
अवहीरिय-पिययम हुत्त-गमण-भय-दिण्ण-सङ्कलाइंव ॥
कज्जलिय-वाह-लेहाइं होन्ति कीएवि अच्छीइं ॥ ११४१ ॥

॥ ११३९ ॥ ललना वल्लभाभिमुखं विलासविसमण्डनाः संतापनिवृत्त्यर्थकृतमृणालिकाहारादिकाः वोलेन्ति अतिक्रामन्ति निःशङ्कमेव वन्दीकृतेन्दुकिरणा इव निशासु ॥ अभिसारिका[1] एवं गच्छन्ति । [2]कामार्तत्वेन अशङ्काः । अत [3]एव [4]वन्दीकृतेन्दुकिरणत्वमिव । चन्द्रो हि चौर्यचरिताना वैसबन्धननिक्षिप्त इव अभयकरः स्तावको वा प्रोत्साहको वैतालिको वेति मतः ॥

॥ ११४० ॥ सरसमदताम्रत्वाहतत्वेन[5] किसलयमालायमानपक्ष्माणि रमणप्रवेशार्थमिव प्रियाणा विकसन्ति अक्षीणि ॥ अक्षिद्वारेणैव रमणो रमणीहृदयं विशति । तत्र द्वारापन्ननेत्रे अक्षिपुटकपाटयोरुद्घाटनं मङ्गलार्थं च द्वारि मदरक्तपक्ष्मकेसरमाला इव विरच्यन्ते इत्यभिप्रायः ॥

॥ ११४१ ॥ अवधारयितव्यः सापराधत्वाद्यः प्रियस्तदभिमुखं यद्गमनं तद्भयन तद्गमननिवारणाय दत्तश्रृङ्खलानीव ज्वलितबाष्पलेखानि कस्या अपि [6]दृश्यन्ते[6] अक्षीणि ॥ प्राकृते वचनव्यत्ययो मतः॥

1 MH. °सारका. 2 MH. कामार्तत्वेनाशंकयोभचेनन अन एव, &c., which is not easy to fully restore or even emend conjecturally. 3 MH. om. वन्दी°. 4 MH. om °त्वा° 5 MH. °मानः. 6 The chāyā कस्या अपि दृश्यन्ते corresponds with the reading of J. See *Various Readings*,

थोएणवि दूमिज्जइ ण लेइ गरुयंपि णाम-मन्तक्खं ।
इय असमञ्जस हियओ होइ सिणेहेण जुवइ-जणो ॥११४२॥
वलिउद्ध-कवोल-घडन्त-चन्द-बिम्बाण माणइत्तीण ।
अन्तो दीसइव णिरोह-पुञ्जिओ हास-विच्छड्डो ॥ ११४३ ॥
सासुवबय-रय-लहुइय-समूससन्तुप्पलोणय-मुहम्मि ।
वसयम्मि कावि परिमेस-माण-गरुई चिरा पियइ ॥११४४॥

॥ ११४२ ॥ स्तोकेनापि दूयते पीड्यते पराङ्मुखो भवति । न चैतत् तदेकाधीनानां कुलमहिलानां युक्तं कर्तुम् ।
माणंपि जस्स ढज्जइ बहु-महिला-भङ्गि-भरिय हिययस्स ।
अम्हाण य तग्गय-त्तम्मणाण को माण—वावारो ॥
इति नयेन ।
जेण विणा न चलिज्जइ अणुणिज्जइ सो कयावराहोवि ।
पत्तेवि गाम-डाहे भण कस्स न वल्लभो अग्गी ॥
इत्यादिना च । अतो हेतोर्न लाति गृहानि गुरुकमपि नाममन्त्वक्षम्[1] अपराधम् इत्यसमञ्जसहृदयो भवति स्नेहेन युवतिजनः ॥ मानखण्डनं नाम हृदयस्य असामञ्जस्यम् ॥

॥ ११४३ ॥ ऊर्ध्वं वलिता विस्मयेन ये कपोलास्तेषु 'घटमानानि चन्द्रबिम्बानि यासां मानवतीनां मानिनीनाम्' अन्तः दृश्यत इव निरोधपुञ्जितो हाससमूहः ॥ कामिनीनां बहिर्हासाभावात्[3] मुखमध्यपुञ्जितस्य हासस्य चन्द्रप्रतिबिम्बव्याजेनावस्थानकल्पना कवेः । विच्छड्डो[5] समूहः ॥
॥ ११४४ ॥ मानजनितश्वासोच्छ्वासितरजःकणेन लघूकृतं मध्य-

[1] MH. °न्तरम्. [2] MH. घटमानानि [3] MH मानिनाम् *for* मानवतीनाम्,
[4] MH. °कपोलेषु°. [5] MH. विच्छुः.

अहिलासा रहस-विणिग्गएण कामेसु-जज्जरङ्गेण ।
कुवलय-णालेण महुं हियएणव कावि आपियइ ॥ ११४५ ॥
चिर-संठिओवि वियलइ माणो चिर-वियलिओवि संघडइ ।
विवरीय-रसं कीलेइ महु-मओ कामिणि-यणम्मि ॥ ११४६ ॥
अखलिय-सरीर-वयणो सहाव-हियओसरन्त-मय-धीरो ।
मत्तोत्ति णवर णज्जइ कवोल-राएण जुअइ-जणो ॥११४७॥
अङ्गाइं पयणुआइंपि किंपि गरुएइ महु-मय-विलासो ।
हिययाइं पुणो लहुएइ माण-गरुयाइंवि पियाण ॥ ११४८ ॥

गुच्छवद् यत् उत्पलं तेनावनमितमुखे चषके कापि परिशेषेण मानेन गुर्वी चिरात्पिबति मानवशात् उत्पलस्थगितपानत्वाद्वा ॥

॥ ११४५ ॥ अभिलाषात् रभसाविनिर्गतेन कामेषु[1] जर्जराग्रेण कुवलयनालेन मधु हृदयेनेव कापि आपिबति ॥ 'कामस्येषवः कामेषवस्तैर्जर्जराङ्गेणेति क्वचित् पाठः ॥

॥ ११४६ ॥ चिरसंस्थितोपि विगलति[2] मानः चिरविगलितोपि संघटते । अतो विपरीतरसं कृत्वा क्रीडति . मधुमदः कामिनीजने ॥ संभरइ[3] इति पाठे सम्भ्रियते पुष्टिं भजत[4] इत्यर्थः । एतदेव मदस्य मदत्वं यत् परस्परविरुद्धम् असमञ्जसविकारकारित्वम् ॥

॥ ११४७ ॥ अस्खलितशरीरवचनः स्वभावविभवेन स्वभावमाहात्म्येन अपसरन् यो मदस्तेन धीरः अत्यक्तोचितचरितः मत्त इति केवलं ज्ञायते कपोलरागेण युवतिजनः ॥

॥ ११४८ ॥ अङ्गानि प्रतनुकान्यपि रागातिशयक्षीणान्यपि

[1] MH. कामस्येषवः. [2] MH. विगलितमानः चिरगलितोपि. [3] MH. संभर इति for संभरइ इति. [4] MH भज इत्यर्थः.

विरह-विणिग्गय-सेसव्व विब्भमा मन्द-हियय-संगलिया ।
मुह-णीसासा पिय-संगमम्मि सोहन्ति रमणीण ॥ ११४९ ॥

सरस-णह-राइ-मग्गेहिँ पीण-थण-मण्डलाइँ तरुणीण ।
पिय-संगम-हरिसूसास-रहस-फुडियाइँव सहन्ति ॥ ११५० ॥

संभाविय-काम-हरो उप्पेइ रसं असोउमल्लोवि ।
णह-रेहा-फरुस-पओहराण रमणीण परिरम्भो ॥ ११५१ ॥

किमपि गुरूणि आलस्ययोगीनि करोति मधुमदविलासः हृदयानि नर्लंघयाति भग्नमानानि संपादयति मानगुरूण्यपि प्रियाणाम् ॥ सर्वस्य मधुमदेन परिरम्भार्थितातिशयोत्पादात् ॥

॥ ११४९ ॥ विरहो वियोगः तदवस्थायां ये [1]विनिर्गतास्तच्छेषा अपीत्यर्थः । विभ्रमा विभ्रमा इवेति संबन्धः । विलासायन्त इवेत्यर्थः । मन्दहृदयात् वियोगग्लानहृदयात् संक्रान्ता अपि मुखनिःश्वासाः प्रियसंगमसमये शोभन्ते रमणीनाम् ॥

॥ ११५० ॥ सरसनखराजिमार्गैः पीनस्तनमण्डलानि तरुणीनां प्रियसंगमहर्षधैीसरसैस्फुटितानीव शोभन्ते ॥

॥ ११५१ ॥ संभावितकामभरः । संभारिअपाठे स्मारितकामभरः । अर्पयति रसम् असौ [2]अमल्लमपि अप्रतिपक्षमपि नखरेखापरुषपयोधराणां रमणीनां परिरम्भः ॥ अमल्लमर्पीति भिन्नक्रमः अपिशब्दः । रसमप्यर्पयति[3] शोभायदित्यर्थः । अवधारणे यथाश्रुति अमल्लमेवेति ॥

---

[1] MH. om. वि°. [2] MH. °श्राम° may refer to साम the reading of J., but his °रस° must surely be a mistake for °रमम°, which is blundered into °रस° instead of °रस्र° in J. [3] MH. रसनयति, omitting अपि.

गाढालिङ्गण तण्हा-णिहेण पडिपीलणंव पडिवण्णं ।
पढमं कीएँवि भर-पीडिएण हियएण थणयाण ॥ ११५२ ॥
पढम-रयारम्भ-रसाणवि तह वच्छ-त्थलोवऊढाइं ।
जह-पीडिय जहण-णिरन्तराइं जायन्ति अङ्गाइ ॥ ११५३ ॥
अच्चन्त-मएण विलासिणीण परिगलिय-हियय सुण्णाइ ।
वड्ढन्त-णीरसाइ ण समप्पन्तिच्चिय रयाइं ॥ ११५४ ॥
अण्णोण्णाराहण-खण-खलन्त-हिययावहीरिय-सुहाइं ।
सुहमब्भहियं रइ-वित्थरेण पावन्ति मिहुणाइं ॥ ११५५ ॥

॥ ११५२ ॥ गाढालिङ्गनतृष्णानिभेन प्रतिपीडनमिव प्रतिपन्नं प्रथम कयापि भरपीडितेन हृदयेन स्तनयो ॥

॥ ११५३ ॥ प्रथमरतारम्भरसानामपि[1] तथा वक्षःस्थलोपगूढानि यथा पीडितजघनत्वेन निरन्तराणि जायन्ते अङ्गानि रतिपरिणामा-
३ वसरे ॥

॥ ११५४ ॥ अत्यन्तमदेन विलासिनीनां परिगलितहृदयत्वेन शून्यानि रतियोग्यविकाररहितानि अत एव [ वर्धमाननीरसानि न
३ समाप्यन्त एव र ]तानि ॥

॥ ११५५ ॥ अन्योन्याराधनार्थं क्षणमात्रं स्खलद्धृदयत्वेन अर्थान्तरव्यापारितचित्तत्वेन अवधीरितोपनतरतिसुखानि सुखम् अभ्य-
३ धिकं रतविस्तरेण प्राप्नुवन्ति मिथुनानि ॥ तदुक्तम् ।

स्त्रियाश्चिर[2] शीघ्रमवेक्ष्य चात्मनो निसर्गमर्थान्तरभावना भजेदिति ॥

[1] MH. प्रथंमरमारंभसाश्चैव for प्रथमरतारम्भरसानामपि. [2] MH. स्त्रियश्चिर.

ताइंचिय किंपि रसं देन्ति परूढेवि पेम्म-रायम्मि ।
पिय-दिण्ण-नहाहरणुल्लसाइं रमणीण रमियाइं ॥ ११५६ ॥
आवयणोरु णिरन्तर-पीडिय-देहाण हरइ मिहुणाण ।
चलणेसुवि कय-चलणो सव्वङ्गालिङ्गण-विलासो ॥ ११५७ ॥
थण-बिम्बेसु वहूणं जोव्वण-लद्ध-परिणाह-वियडेसु ।
सोच्चिय तह-परिणाहो जाओ विरलोव्व रोमञ्चो ॥ ११५८ ॥
पीडिय-पओहरोगाढ-णह-पउद्देस-न्दर-समूससियं ।
विमलइ करेण रमणस्स कावि वच्छ-त्थलं हसिरी ॥११५९॥

॥ ११५६ ॥ तान्येव कमपि रसं ददति प्ररूढेपि प्रेमरागे प्रियदत्ता नखा एवाभरणानि तदुल्लासीनां रमणीनां रतानि ॥ °उल्लासाहिं रमणीहिं इति पाठे °उल्लासाभी रमणीभिः सहेत्यर्थः ॥

॥ ११५७ ॥ आवदनोरु वदनादारभ्य उरु यावत् [ निरन्तर ]-पीडितदेहानां संपुटाख्यकरणविशेषभाजां[1] हरति मिथुनानां चरणेष्वपि कृतचरणः सर्वाङ्गालिङ्गनविलासः ॥

॥ ११५८ ॥ स्तनबिम्बेषु वधूनां यौवनलब्धपरिणाहत्वेन विकटेषु[2] स एव तथापरिणाहः पूर्वदृष्टपरिणाहयुक्तो [ जातो ] विरल इव रोमाञ्चः ॥

॥ ११५९ ॥ पीडितपयोधरत्वेनावगाढो यो नखपदोद्देशस्तत्रेष्वत्समुच्छ्वसितं [3]विमर्दयति परामृशति पीडानिवृत्तये करेण दयितस्य कापि वक्षःस्थलं हसनशीला ॥ रमनखक्षतप्रदेशे [4]गाढालिङ्गनमसृकठिनस्तनखेदननिवृत्त्यर्थः [5]हस्तस्पर्शः ॥

[1] MH. भाजो. [2] MH. निकटेषु [3] MH. विमर्दयति, [4] MH. गाढालिङ्गेन मसृकठिनस्तनखेदन° [5] MH. हस्तस्पर्शः.

बहुसो भग्ग-ट्ठिय-रमण-णह-सिहा-चुण्ण-विउण-गरुएण ०॥ ।
आयासिज्जइ थण-मण्डलेण मज्झालसा तरुणी ॥ ११६१ ॥
तणुअत्तण-णमिओयर-पओहरासण्ण-जहण-णिमिय-भुओ ।
सोहइ तंस-णुवण्णो वलिओरु-लओ पिआ-सत्थो ॥११६
दयियाएँ कोवि णिद्दा-परिस्समुब्भिण्ण-सेय-बिन्दुइयं ।
परिउम्बइ सुह-णसहिय-पडिबोहन्दोलियं वयणं ॥ ११६२ ॥
सम-भाव-पयत्तूसास-सिढिल-णीसह-परिट्ठियावयवो ।
दर-लक्खिय-दुब्बलोव्व होइ णिद्दासु जुअइ-यणो ॥११६३॥

॥ ११६० ॥ बहुशो भग्नस्थितानि यानि रमणनखशिखाचूर्णानि तैर्द्विगुणगुरुणा आयास्यते स्तनमण्डलेन क्षाममध्यालसा तरुणी ॥
३ [ तरुणी ] इति स्तनकर्कशतापरम् ॥

॥ ११६१ ॥ तनुत्वात भरेण नतोदरत्वात् पयोधरासन्ने जघने निक्षिप्तभुज शोभते तिर्यङ्निषण्णः शय्याया वलितोरुलतः प्रिया-
३ सार्थः ॥ णुमॅण्णो निषण्णः । सुरतश्रान्तैकपार्श्वनिषण्णो विराजत इत्यर्थ. ॥

॥ ११६२ ॥ दयिताया कोपि निद्रापरिश्रमोद्भिन्नस्वेदबिन्दुचितं परिचुम्बति निद्रासुखेन न सोढो यः प्रतिबोधस्तेनान्दोलितं
३ वदनम् ॥

॥ ११६३ ॥ श्रमभावप्रवृत्तोच्छ्वासशिथिलनिःसहपरिस्थितावयव. ईषल्लक्षितदौर्बल्य इव भवति निद्रासु युवतिजन. ॥ श्रामाध्मातत-
३ रॊग्लान् कामरूतं क्षामन्तं मनाग् लक्ष्यते न नु सम्यक् ॥

णवरिअ णरिन्द-विक्कम-वियड-कहावसर-समुह-सुर-मुक्को ।
कुसुम-णिवहोव्व णिवडइ णहाहि तारा-लवुप्पीलो ॥११६४॥
जायं तारा-वइणो वायन्त-मुणाल-पाडल-मऊहं ।
विम्बं अवाल-जम्बू-फल-भङ्ग-पिसङ्ग-परिवेसं ॥ ११६५ ॥
ओसारियम्मि पच्छा सिण्होल्लिय-तिमिर-केस-हत्थम्मि ।
णिवडन्ति सलिल-विन्दुव्व तारया रयणि-तरुणीए॥११६६॥
लहसिय-ट्ठिय-मय-विच्छाय-मज्झ-ससि-विम्ब-चुम्बियं सहइ ।
दद्दुर-उडंव दर-फुडिय-वियड-पुड-मण्डलं गयणं ॥ ११६७ ॥

॥ ११६४ ॥ अनन्तरं नरेन्द्रविक्रमविकटकथावसर इति कृत्वा सुरवधूभिर्विमुक्तः कुसुमनिवह इव निपतति नभसस्तारालवानाम् उत्पीलः समूहः ॥ प्रभातसमये किल सूक्ष्मताराः पतन्ति काश्चित् । तिरोधानं वा पतनम् । तच्च पुष्पवृष्टित्वेनोत्प्रेक्षितं यशोवर्मणश्चरित-निबद्धवाक्पतिकथास्तुतये ॥

॥ ११६५ ॥ जातं तारापतेः शुष्यन्मृणालवत्पाटलमयूखं विम्बम् अबालं जरठं यज्जम्बूफलं तद्भङ्गवत्पिशङ्गपरिवेषम् ॥

॥ ११६६ ॥ अपसारिते अरुणोदयेन पूर्वादिदिग्भ्य उत्कालिते पश्चाच्च पश्चिमभागे स्थिते अवश्यायार्द्रीकृततिमिरनिकर एव केश-पाशस्तत्र निपतन्ति सलिलबिन्दवस्तारका रजनीतरुण्याः ॥ सिण्हा अवश्यायः । उल्लियं आर्द्रीकृतम् ॥

॥ ११६७ ॥ स्खलितस्थितं मृगविच्छायमध्यं यच्छशिबिम्ब-नेन चुम्बितं शोभते दर्दराम्भो वाद्यभाण्डविशेषश्चर्मपिनद्धस्तत्पुट इव ईषत्स्फुटितविकटपुटमण्डलं गगनम् ॥ स्फुटितत्वं रविदारितत्वम-स्फुटत्वम् ॥

अत्थाय-तलिण-तारत्तणेण तंचेय पढम-परिविरलं ।
पच्छा पुञ्जिज्जन्तं पुणोवि वियडेइ गह-अक्कं ॥ ११६८ ॥
अरुण-विराविय-तणुयायमाण-संज्झा-रसाणुलित्तंव ।
थोय-त्थोयमुसालोय-पण्डुरं होइ गयण-यलं ॥ ११६९ ॥
पम्हन्तर-लक्खिय-पण्डु-भाव-विसम-प्पहं समुप्पयइ ।
सिण्हा-हय-सामायन्त-मसिण-देहं कवोअ-उलं ॥ ११७० ॥
आरोहिणा पहाय-क्कमेण परिपिञ्जरत्तणमुवेन्ता ।
विडवेसु फल-विसेसा परिणाम-गुणंव गेण्हन्ति ॥ ११७१ ॥

॥ ११६८ ॥ अस्तागततनुतारत्वेन तदेव प्रथमप्रविरलं प्रविरलस्थूलतारकत्वेन पश्चात्पुञ्जीक्रियमाणं रविकरनिकरेण [1]मिश्रीभवत्
२ पुनरपि विकटयति [2]विकटत्वंमाचरति ग्रहचक्रं वस्तुवृत्त्या ॥

॥ ११६९ ॥ अरुणविराञ्जिततनूयमानसंध्यारसानुलिप्तमिव स्तोकस्तोकम् उपसः प्रभातकालस्य आलोकेन पाण्डुरं गगनतलम् ॥

॥ ११७० ॥ पक्ष्मान्तरलक्षितपाण्डुभावत्वेन विषमप्रभं समुत्पतति सिण्हा अवश्यायस्तेन पृष्ठतः [3]क्षतम् अत एव श्यामा-
२ यमानमसृणदेहं कपोतकुलम् ॥ पक्ष्मान्तरैर्दृश्यमाना [4]यत्क्षताः प्रदेशाः [5]पाण्डुरीकृतास्तत्परिवर्तिनः श्यामायमाना इति वैषम्यम् ॥ विहंगकुलमिति क्वचित् पाठः ॥

॥ ११७१ ॥ आरोहणशीलेन प्रभातक्रमेण परिपिञ्जरत्वमुपयन्तः प्राप्नुवन्तः विटपेषु फलनिवेशाः परिणामगुणमिव वहन्ति ॥
२ अरुणकरविद्धत्वन[6] अपक्वान्यपि पक्वानीव फलानि लक्ष्यन्त इत्यर्थः ॥

---

1 MH. °भूवंत्पुन°. 2 MH. om. वि°. 3 MH. क्षतर्. The emendation is conjectural. 4 MH. यत्कृता. The emendation is conjectural. 5 MH, पाण्डुरकृतास्तत्परि', 6 MH. अरुणकरविद्धत्वेन.

मिहु [णेहिँ रइ]-रसायाम-खेय-खण-लद्ध-गरुय-णिद्दाहिं ।
पडिबुज्झिज्जइ कह-कहवि सालसं रयणि-विरमम्मि॥११७२॥
तम-लोह-लोढयाणुगय-मुक्क-गोस-प्पहो तलिण-मूलो ।
गह-पलहि-बीय-निवहो पच्छा पुञ्जिज्जइ णिसाए ॥ ११७३ ॥
आआसेइ पईव सलोल-कज्जल-सिहा-दरुव्वत्ते ।
सकय-ग्गहंव पच्चूस-मारुओ वास-गेहेसु ॥ ११७४ ॥

[ ॥ ११७२ ॥ मिथुनैः रतिरसायामखेदक्षणलब्धगुरुकनिद्रैः प्रतिबुध्यते कथंकथमपि सालसं रजनिविरमे ॥ ]

[ ॥ ११७३ ॥ तमोलोहलोठकानुगतमुक्तप्रभातप्रभः विरलमूलः ग्रहकार्पासबीजनिवहः पश्चात् पुञ्जीक्रियते निशया ॥

प्रभातकाले ग्रहनिवहो मुक्तप्रभः मन्दप्रभः सन् क्रमेण पूर्वदिग्भागेभ्यो विनश्यन् पश्चिमदिश्येव पुञ्जीकृत इव दृश्यते । तत्रोत्प्रेक्ष्यते । तमोरूपलोहमयलोठकानुगतकार्पासबीजनिवहो यथा कयापि स्त्रिया पाश्चिमभागे पुञ्जीक्रियते तद्वदिति । लोठकः कार्पासबीजनिष्कासनार्थो यन्त्रविशेषः । मुक्कगोसप्पहो प्रभाते मुक्ता प्रभा येन सः । तलिणमूलो पूर्वदिशि प्रथमदृश्यमानेन तेजसा नष्टा अधस्तना ग्रहा यत्र तादृशः ॥ ]

॥ ११७४ ॥ [1]आयासयति प्रदीपान् सलोलकज्जलदीपशिखोद्वृत्तान् । सकज्जललोलशिखा आवर्त्य । आवर्तनमावेष्टनम् । सकचग्रहामिव प्रत्यूषमारुतो रतिवासगृहेषु ॥

1 MH. ᴗᴗᴗᴗᴗ.

अत्थाय-तलिण-तारत्तणेण तंचेय पढम-परिविरलं ।
पच्छा पुञ्जिज्जन्तं पुणोवि वियडेइ गह-अक्कं ॥ ११६८ ॥
अरुण-विराविय-तणुयायमाण-संज्झा-रसाणुलित्तंव ।
थोय-त्थोयमुसालोय-पण्डुरं होइ गयण-यलं ॥ ११६९ ॥
पम्हन्तर-लक्खिय-पण्डु-भाव-विसम-प्पहं समुप्पयइ ।
सिण्हा-हय-सामायन्त-मसिण-देहं कवोअ-उलं ॥ ११७० ॥
आरोहिणा पहाय-क्कमेण परिपिञ्जरत्तणमुवेन्ता ।
विडवेसु फल-विसेसा परिणाम-गुणंव गेण्हन्ति ॥ ११७१ ॥

॥ ११६८ ॥ अस्तागततनुतारत्वेन तदेव प्रथमप्रविरलं प्रविरलस्थूलतारकत्वेन पश्चात्पुञ्जीक्रियमाणं रविकरनिकरेण [1]मिश्रीभवत् पुनरपि विकटयति [2]विकटत्वमाचरति ग्रहचक्रं वस्तुवृत्त्या ॥

॥ ११६९ ॥ अरुणविराञ्जिततनूयमानसंध्यारसानुलिप्तमिव स्तोकस्तोकम् उषसः प्रभातकालस्य आलोकेन पाण्डुरं गगनतलम् ॥

॥ ११७० ॥ पक्ष्मान्तरलक्षितपाण्डुभावत्वेन विषमप्रभं समुत्पतति सिण्हा अवश्यायस्तेन पृष्टतः [3]क्षतम् अत एव श्यामायमानमसृणदेहं कपोतकुलम् ॥ पक्ष्मान्तैर्दृश्यमाना [4]यत्क्षताः प्रदेशाः [5]पाण्डुरीकृतास्तत्परिवर्तिनः श्यामायमाना इति वैषम्यम् ॥ विहंगकुलमिति क्वचित् पाठः ॥

॥ ११७१ ॥ आरोहणशीलेन प्रभातक्रमेण परिपिञ्जरत्वमुपयन्तः प्राप्नुवन्तः विटपेषु फलविशेषाः परिणामगुणमिव गृह्णन्ति ॥ [6]अरुणकरविद्धत्वेन अपक्वान्यपि पक्वानीव फलानि लक्ष्यन्त इत्यर्थः ॥

---

[1] MH. °पूर्वम्पुन°. [2] MH. om. वि°. [3] MH. कृतम्. The emendation is conjectural. [4] MH. यत्कृता°. The emendation is conjectural. [5] MH, पाण्डुकृताम्कृतारे'. [6] MH. अरुणकरविद्धत्वेन°

असढिय-विसुद्ध-सुकयावयंस-सप्पुरिस-सुचरिउग्गारो ।
विवलायइ कलि-कालोव्व भिण्ण-हियओ तमुग्घाओ ॥
कोऊहल-मिलिआमर-विमाण-रयण-प्पहा-विभिण्णोव्व ।
जाओ अजड-जवा-कुसुम-पाडलो णह-यल-वियाणो ॥११८०॥
परिगलिय-पण्डु-तारा-दलस्स णह-साहिणो विणिक्खमइ ।
णव-किसलय-सोहग्गेण पढममरुणुग्गमालोओ ॥ ११८१ ॥
इट्टा-चुण्णंव किरन्तमुद्धमरुणायवं परिप्फुरइ ।
रविणो गयणासि-णिसाण-चक्क-वलओवमं बिम्बं ॥११८२॥
जलहिस्स पुणोवि समागमंव बहलत्तणेण सूयन्तं ।
अपुणागमणायव तं तिमिरं उम्मूलिअं रविणा ॥ ११८३ ॥

[ ॥ ११७९ ॥ असोढविशुद्धसुकृतावतंससत्पुरुषसुचरितोद्गारः विवलायइ विपलायते कलिकाल इव भिन्नहृदयः तमउद्घातः ॥]

॥ ११८० ॥ प्रकृतकथाकर्णनकुतूहलमिलितामरविमानरत्न [प्रभाविभिन्न] इव जातः अजडं पकं जवाकुसुमं विन्दुमतीपुष्पं तद्वत्पाटलो नभस्तलवितानः ॥

॥ ११८१ ॥ परिगलितपाण्डुतारादलस्य नभःशाखिनो विनिष्क्रामति नवकिशलयसौभाग्येन प्रथमम् अरुणोद्गमालोकः ॥ दलानि जीर्णपर्णानि । अरुणोद्गमो लोहितनवकिशलयसमुद्भवोपि ॥

॥ ११८२ ॥ इष्टकाचूर्णमिव [1]विकिरत् अरुणातपं लोहितप्रभं परिस्फुरति रवेः संबन्धि गगनमेवासिः खड्गस्तस्योपस्कारार्थं यन्निशानचक्रवलयं [1]तीक्ष्णायमभाण्डं तदुपमं बिम्बम् ॥

॥ ११८३ ॥ [2]जलधेः पुनरपि समागममिव बहलत्वेन सूच-

1 MH. सौगायकभोः  2 MH. जलधिः.

तंचेय तिमिर-मलिणं जायं अरुण-प्पहा-हयं गयणं ।
सीसयमिव सिन्दूरच्चणेण पडिवण्ण-परिणामं ॥ ११७५ ॥

गेण्हन्ति कण्ठ-फरुसाइं कहवि रयणी-जलाणुभावेण ।
विहया वलग्ग-रय-संणिवेस-गरुयाइं वीयाइं ॥ ११७६ ॥

रुण्णारुण-णयणाओ व्व णिसा-विसूरन्त-णलिणि-सोएण ।
सोहन्ति जलोल्ल-ट्ठिय-चक्काय जुयाओ वावीओ ॥ ११७७ ॥

ससिणो समोसरन्ती अत्थाअल-मत्थय-त्थ-बिम्बस्स ।
घोलइ सहयार-रसग्ग-तलिण-परिपण्डुरा जोण्हा ॥ ११७७ ॥

॥ ११७५ ॥ तदेव तिमिरमलिनं जातम् अरुणप्रभाहतं सत् [1]गगनं सीसामिव सिन्दूर [रवेन प्रतिपन्नपरिणामं] भवति ॥

॥ ११७६ ॥ गृह्णन्ति कण्ठपरुषाणि कथमपि रजनीजलानुभावेन [2]अवश्यायसंबन्धिना विहगा अवलग्नरजःसंनिवेशगुरूणि बीजानि
२ धान्यकणादीनि ॥

॥ ११७७ ॥ रुदितेन अरुणनयना इव निशि रात्रौ विसूरयन्ती रविवियोगदुःखमनुभवन्ती या नलिनी तच्छोकेन शोभन्ते अवश्याय-
३ जलार्द्रस्थितचक्रवाकयुगा वाप्यः ॥ जलार्द्रम् अतिरक्तं चक्रवाकयुग्मं दृश्यते । तदेव रोदनारुणं नयनयुगमिव ॥

[ ॥ ११७८ ॥ शशिनः समपसरन्ती अस्ताचलमस्तकस्थबि-
म्बस्य घूर्णते सहकाररसाग्रतलिनपरिपाण्डुरा ज्योत्स्ना ॥ रसाग्र
३ रसनाग्रम् । रसनैव रमा । मञ्जरीति यावत् । मञ्जरीरसनयोः साम्यात् । तलिन विरलम् ॥ ]

1 MH. गगनं. 2 MH. °वश्यायसंबन्धेन.

असढिय-विसुद्ध-सुकयावयंस-सप्पुरिस-सुचरिउग्गारो ।
विवलायइ कलि-कालोव्व भिण्ण-हियओ तमुग्घाओ ॥
कोऊहल-मिलिआमर-विमाण-रयण-प्पहा-विभिण्णोव्व ।
जाओ अजड-जवा-कुसुम-पाडलो णह-यल-वियाणो ॥११८०॥
परिगलिय-पण्डु-तारा-दलस्स णह-साहिणो विणिक्खमइ ।
णव-किसलय-सोहग्गेण पढममरुणुग्गमालोओ ॥ ११८१ ॥
इट्टा-चुण्णंव किरन्तमुद्धमरुणायवं परिप्फुरइ ।
रविणो गयणासि-णिसाण-चक्क-वलओवमं बिम्बं ॥११८२॥
जलहिस्स पुणोवि समागमंव वहलत्तणेण सूयन्तं ।
अपुणागमणायव तं तिमिरं उम्मूलिअं रविणा ॥ ११८३ ॥

[ ॥ ११७९ ॥ असोढविशुद्धसुकृतावतंससत्पुरुषसुचरितोद्गारः विवलायइ विपलायते कलिकाल इव भिन्नहृदयः तमउद्घातः ॥]

॥ ११८० ॥ प्रकृतकथाकर्णनकुतूहलमिलितामरविमानरत्न [प्रभाविभिन्न] इव जातः अजडं पक्कं जवाकुसुमं बिन्दुमतीपुष्पं तद्वत्पाटलो नभस्तलवितानः ॥

॥ ११८१ ॥ परिगलितपाण्डुतारादलस्य नभःशाखिनो विनिष्क्रामति नवकिशलयसौभाग्येन प्रथमम् अरुणोद्गमालोकः ॥ दलानि जीर्णपर्णानि । अरुणोद्गमो लोहितनवकिशलयसमुद्भवोपि ॥

॥ ११८२ ॥ इष्टकाचूर्णमिव [1]विकिरन्, अरुणातपं लोहितप्रभं परिस्फुरति रवेः संबन्धि गगनमेवासिः खड्गस्तस्योपस्कारार्थं यन्निशानचक्रवलयं [2]तीक्ष्णायमभाण्डं तदुपमं बिम्बम् ॥

॥ ११८३ ॥ [1]जलधेः पुनरपि समागममिव बहुलत्वेन सूच-

[1] MH. [illegible]     [2] MH. [illegible]

णवरिय णिव्वत्तिय-रयणि-विरम-कायव्व-णिव्वुओ ताण ।
सो साहिउं पयचो चरिअं चाणक्क-चरिअस्स ॥ ११८४ ॥
णवरिय णिवडिय-तम-लोह-टङ्क-परिसुद्धि-तुङ्ग-वियडासु ।
आसा-भित्तिसु पत्थिव-पसत्थि-जोग्गासुव ठियासु ॥११८५॥
अग्ग-ट्ठिय हरिय तुरङ्ग-पल्लवे मङ्गलाय कलसेव्व ।
तक्खणमुक्खित्ते तरणि-मण्डले वासव-दिसाए ॥ ११८६ ॥

यत्[1] अपुनरागमनायेव तत् तिमिरम् उन्मूलितं रविणा ॥ किल तमसि संमुखे जलधिसमागमो जलधौ मज्जनं रवेरभूत् । तेन वैरकारणेन परिपूर्णोदितेन रविणा समूलमुन्मूलितं तिमिरं पुनरनागमनाय तस्य अनिष्टनिमित्तस्य तमसः ॥

॥ ११८४ ॥ अनन्तरं निर्वर्तितरजनीविरामकर्तव्यः अत एव निर्वृतः सुखितः सन् तेषां पूर्वप्रक्रान्तप्रष्टृणां स वाक्पतिराजः शंसितुं कथयितुं प्रवृत्तश्चरितं चाणक्यचरितस्य यशोवर्मणः ॥

॥ ११८५ ॥ अथ गाथाविंशत्या कुलकम् ।

अनन्तर[2]निर्वर्तितः पृथक्कृतस्तम एव [3]लोहटङ्कस्तक्षकारघटनभाण्डं तेन या परिशुद्धिस्तया तुङ्गविकटासु आशा दिशस्ता एव भित्तय-स्तासु पार्थिवप्रशस्तियोग्यास्विव स्थितासु

प्रशस्तियत्र[4] चरितमुत्तमं लिख्यते ॥

॥ ११८६ ॥ अग्रस्थिता हरितवर्णास्तुरगाः पल्लवा यत्र तत्र मङ्गलाय कलशे इव तत्क्षणमुत्क्षिप्ते तरणिमण्डले आदित्यबिम्बे वासवदिशा ऐन्द्र्या दिशा नायिकया

[1] MH तुचयतम् [2] So, MH, explaining an impossible reading (णिव्व-त्तिय°) ! See *Various Readings* [3] So, MH. [4] MH प्रशस्तियत्रचरित°. for प्रशस्तियत्र चरित°.

पहु-कित्ति-णिसमणूसुअ-हियय-क्खलिअ-रमणाहिलासासु ।
अन्दोलिऊण सुर-सुन्दरीसु रहसा विणिन्तीसु ११८७
कुसुम-वरिसूसुआमर-विलुत्त-मणि-मउल-कन्दल-दलासु ।
विरलायन्तीसु सुरिन्द-मन्दिरुज्जाण-वीहीसु ११८८
अम ओवओय-परिहिट्ट-कण्ठ-महुरीहुयन्त-रसियम्मि ।
मङ्गल-जीमूअ-उलम्मि गयण-वट्ट पउट्टम्मि ११८९
चलिअम्मि रहस-विअलिअ-कण्हाइण-णिअलिए मुणि-अणम्मि ।
कोऊहल-पत्थिय-गयण-हरिण-पडिवण्ण-चलणेव्व ११९०

॥ ११८७ ॥ प्रभुकीर्त्याकर्णनोत्सुकहृदयाश्च ता रमणाभिलाप-स्खलिताश्च उभयाकृष्टहृदयत्वेन आन्दोल्य किं यशोवर्मचरितमा-
३ कर्णयामः उत पतिसुरतसुखमनुभवामः इति संशय्य सुरसुन्दरीषु रभसा आवेशेन विनिर्यन्तीषु निःसरन्तीषु गृहेभ्यः कथाकर्णनाय

अनेन प्रियतमसमागमसुखादपि[1] यशोवर्मसच्चरिताकर्णनं सुखमित्युक्तम् ॥

॥ ११८८ ॥ कुसुमवर्षोत्सुकामरविलुप्तमणिमयमुकुलकन्दल-दलासु अत एव विरलायन्तीसु[2] विरलत्वमाचरन्तीषु सुरेन्द्रमन्दिरो-
३ द्यानवीथीषु
वीथ्यो मार्गाः ॥

॥ ११८९ ॥ अमृतम् उदकम् तदुपयोगेन परिघृष्टकण्ठत्वात् मधुरीभवद्रसिते मङ्गलजीमूतकुले गगनपृष्ठोपसृष्टे[3] सति

॥ ११९० ॥ चलिते रभसविगलितकृष्णाजिनैर्निगडिते बद्धचरणे [मुनिजने] कौतूहलप्रार्थितगगनहरिणप्रतिपन्नचरण इव

[1] MH. °स्मर° for °समागम°. [2] MH. विरलायन्तीषु. [3] MH. °पृष्ठोपसृष्टे

विणयाढत्त-णराहिव-चरिअ-समायण्णणायरेणंव ।
आमुक्क-पायवासण-बन्धेसु विहंगम-कुलेसु ११९१
लम्बि-महा-दप्पण-संकमन्त-संमद्द-णिरवयासेसु ।
भवण-क्खम्भावालि-सिहरमारुहन्तेसुव जणेसु ११९२
धवलिज्जन्त-समुण्णय-पहु-जस-पासाय घडिअ-मञ्चंव ।
कम-लम्बिअ-तिअस-विमाण-मण्डलं णह-यलं जायं ॥११९३॥

३ गगनहरिणो मृगशिराश्चन्द्रमृगो वा । मुनीनां च वनवासिनां विश्वासाच्चरणोपगता मृगाभवन्ति ॥

॥ ११९१ ॥ विनयारब्धनराधिपचरितसमाकर्णनादरेणेव [आ]-मुक्तो बुभुक्षार्तत्वात् त्यक्तः पादपेष्वासनबन्धो यैस्तेषु विहंगमकुलेषु
३ सत्सु

॥ ११९२ ॥ लम्बनशीलमहादर्पणसंक्रान्ताः प्रतिबिम्बिताः संमर्देन निरवकाशाश्च ये तेषु भवनस्तम्भावलिशिखरमारोहत्स्विव
३ जनेषु सत्सु

॥ ११९३ ॥ किंच[1] । धवलीक्रियमाणाः समुन्नतप्रभुयशोरूपाः प्रासादकल्पा[2] घटिता रचिता मञ्चा यत्र तत्रेव[3] क्रमलाञ्छितत्रिदश-
३ विमानमण्डले[4] नभस्तले[4] जाते[5] सति

सवलिज्जन्तेति[1] पाठे संवल्यमानेत्यर्थः । कमलम्बिय[2] इति कचित्पाठः । क्रमलम्बितेत्यर्थः । त्रिदशविमानसंनिधानं तु यशोवर्मस-
३ चरिताकर्णनाय ॥

[1] So MH. Should not these words occur rather at the beginning of the next verse? [2] MH. प्रसाद°. [3] MH. तत्रैव. [4] So MH. [5] MH. जातेष्विव.

नि. न' ।

तुह धारा-संदाणिअ-गइन्द-मुत्ता-हलो असी जयइ ।
गउड-गल-च्छेअ-वलग्ग-संठिएआवली ओव्व ॥ ११९४ ॥

सम-जाइत्तण-संभाविओवयारेहिं णिअय-चलणेहिं ।
पोच्छाहिअव्व चलणे तु पन्ति णिअलाविला रिउणो ॥ ११९५

कर-सन्दिरेण सोहसि तद्दियसं दाण-वारिणा देव ।
हिअय-भरिअस्स करुणा-रसम्बुणो णिग्गमेणंव ॥ ११९६ ॥

णन्दइ तुह विणिअत्तस्स आसमुद्दं दिसाओ जेऊण ।
लच्छी पुणोवि पिउणा संवेसण-दिण्ण-विहवव्व ॥ ११९७ ॥

॥ ११९४ ॥ अस्मिन्नवसरे यशोवर्मविषयाः कवीनामेवंभूता आलापाः प्रवृत्ता इत्याह । हे राजन् तव संबन्धी धारासंदानितगजेन्द्रमुक्ताफलः असिः खड्गो जयति गौडगलच्छेदात् अवलग्ना अत एव यावत् संस्थिता 'मुक्तावलिः गलाभरणरूपा लता यत्र स इव ॥

॥ ११९५ ॥ अस्मदीयचरणानां यशोवर्मचरणयोश्च तुल्या चरणजातायुरपारैः । अतः समजातित्वेन संभावितोपकारैर्निजकचरणैः प्रोत्साहिता इव चरणौ तव[1] आयान्ति स्वचरणौ नमस्कुर्वन्ति निगडाविला निगडैर्बद्धा रिपवः ॥ चलणे तुलन्ति [इति] पाठे तुलन्ति तव चरणौ धारयन्तीत्यर्थः ॥

॥ ११९६ ॥ 'करस्यन्दनशीलेन शोभसे प्रतिदिवसं दानाख्येन वारिणा हे देव भृतहृदयकरुणारसाम्बुनो निर्गमेनेव ॥

॥ ११९७ ॥ नन्दति वर्धते[2] तव [वि]निवृत्तस्य आसमुद्रं दिशो

1 J. K. P. give these words ( though as regards J see note on previous page ). Do only omits them, though it reads °चलणे ,°वते and not °चलणे °वते in the previous verse.  [2] MH. वर्धते.  [3] MH. तव.  [4] MH. °स्य-दत्त°.

कारासु पढममणुहूय-णिअल-मल-मग्ग-लञ्छणा चलणा ।
तइँ छेइज्जन्ति विइण्ण-काल-सुत्तव्व सत्तूण ॥ ११९८ ॥

संकन्त-महि-रओ-धूसराइं संपइ तुहं पणामेसु ।
भिंउडी मइलण-भीअव्व रिउ-णडालाइँ णारुहइ ॥ ११९९ ॥

गरुअयर-मत्त-वारण-खन्ध-समारुहण-विरलिएणंव ।
ऊरु-जुएण विराअइ सहाव-विअडं गयं तुज्झ ॥ १२०० ॥

घेप्पइ अगुणीहिँ गुणिव्व जेण गुण-गारवेण वो अप्पा ।
तेणेय तंपि मण्णसि अप्पाणमणज्जिअ-गुणंव ॥ १२०१ ॥

जित्वा लक्ष्मीः पुनरपि पित्रा संप्रेपणदत्तविभवेव ॥ पुनः प्रेपणं नवोढाया भर्तृगृहात्प्रत्यावृत्ताया भूयो भर्तृगृहविसर्जनम् ॥

॥ ११९८ ॥ कारासु बन्धनगृहेषु प्रथमम् अनुभूतनिगलमलमार्गलाञ्छनाश्चरणास्त्वया आच्छेद्यन्ते वितीर्णकालसूत्रा इव कृत्वा शत्रूणाम् ॥

॥ ११९९ ॥ [1]पादपतनवशेन संक्रान्तमहीरजस्कतया पाण्डुराणि मलिनानि संप्रति तव प्रणामेषु भ्रुकुटिः मलिनीकरणभीतेव रिपुललाटानि नारोहति ॥ जितसर्वत्वाद्भृकुटिविषयस्तव न कश्चिदिति तात्पर्यार्थः ॥

॥ १२०० ॥ गुरुतरराजवारणस्कन्धारोहणार्थं [2]विरलितेनेव ऊरुयुगेन विराजते स्वभावविकटं गमनं तव ॥

॥ १२०१ ॥ गृह्यते अगुणिभिर्गुणीव[3] येन गुणगौरवेण वो युष्माकं संबन्धिना । प्राकृते वचनव्यत्ययात् तव संबन्धिना । आत्मा । तेनैव त्वमपि मन्यसे आत्मानमनर्जितगुणमिव ॥ तव मण्डले निर्गुणा अपि वास्तव्याः सगुणमिव आत्मानं त्वद्गुणैरेव मन्यन्ते त्वद्गुणगौरवं परोपकारपर्यवसितगुणत्वं तव बुद्ध्वा । अत एव त्वमपि तेनैव

[1] MH. पादपतन°. [2] MH. विलितेनेव. [3] MH. °गुणीवे.

जाहेच्चिअ तं चलणोणयाण अवरिं करं पसारेसि ।
लच्छी भुअ-ट्ठिया वो ताहेच्चिय तेसु संकमइ ॥ १२०२ ॥
अकओवयार-तणुआ अभग्ग-पसरेसु तुज्झ दीसन्ति ।
संकंता इव अलएसु केस-हत्था रिउ-पियाण ॥ १२०३ ॥

गुणगौरवेण निजेन गुणमाहात्म्येन अनर्जितगुणमिव अगुणमिवात्मानं मन्यस इत्यर्थः ॥ अपरे अपरथा पठन्त्येताम् ॥ घेप्पइ गुणीहिं अगुणोव्व जेण गुणगारवेण वो अप्पा । तेण तुमंपि न मन्नासि अप्पाणमणज्जिअगुणंव ॥ अयमर्थः । येन गुणगौरवेण विभवशून्येन गुणिभिरात्मा अगुण इव निष्फलगुणो ज्ञायते तेन त्वमपि नात्मानम् अनर्जितगुणं निष्फलप्रायगुणं मन्यसे । दैन्यशून्यगुणत्वात् सविभवगुणत्वेन । अनिर्जितगुणमिति पाठे अनिर्जितगुणदर्पमिति व्याख्येयम् । पूर्वो [1]वशब्दः एवार्थे येनैव तेनैवेति योज्यः । जनगुणगौरवेण पलालभारायमाणत्वगुणघेत्यादि व्याख्येयम् ॥

॥ १२०२ ॥ यदैव त्वं चरणावनतानाम् उपरि करं प्रसारयसि दयालुतया करेण शिरसि स्पृशसि लक्ष्मीर्भुजस्थिता सती वः युष्माकम् । तवेत्यर्थः । तेषु तदैव संक्रामति ॥ प्रसादसमये दौर्गत्यमपसारयसीत्यर्थः ॥

॥ १२०३ ॥ मुक्तोपचारत्वेन त्यक्तस्नानप्रसाधनादित्वेन तनुकाः अभग्नप्रसरेषु कर्तनाभावाच्चतुर्दिक्षु प्रलम्बमानेषु तव दृश्यन्ते संक्रान्ता इव अलकेषु केशहस्ताः शालभञ्जिका[2] रिपुप्रियाणां संबन्धिन्यः ॥ तदधीनजीवनात्स्नाद्विपद्दुःखेन मन्दीभूता इवेत्यर्थः । तव संबन्धिनीनां रिपुप्रियाणां संबन्धिन्यः केशहस्ता अलकेषु [तव] संक्रान्ता इव दृश्यन्ते । अन्यथा कथं केशभारस्यातिचिक्कणत्वम् इति योजना कार्या ॥

---

1 MH. बलाधः  2 So MH. Does the Commentator mean शालभञ्जिका ?

इय ताहे भावागय-पच्चक्खायन्त-णर-वइ-गुणाण ।
विवरोक्खम्मिवि जाया कईण संबोहणालावा ॥ १२०४ ॥

अवि य ।

अह सुद्धम्मि अ णिहसुत्थ-कञ्चणाहरण-रय-पिसङ्गम्मि ।
जायम्मि सुवण्णमएव्व तम्मि जण-संसिए दिअसे ॥१२०५॥
संकन्तासेस-सरस्सइत्तणेणंव साहिरे तम्मि ।
जाओ खणेण मूयल्लिओव्व कोऊहला लोओ ॥ १२०६ ॥

किं च ।

वीसम्भमगन्तूणंव विसम-महिला सहाव-दोसेण ।
बाहिंचिय वेरि-सिरीओ जेण पणईण दिण्णाओ ॥१२०७॥

॥ १२०४ ॥ इति तदा प्रभातसमये भावागतत्वात् भावनातिशयप्रापितत्वात् प्रत्यक्षायमाणनरपतिगुणाना विपरोक्षेपि अप्रत्यक्षत्वेपि राज्ञि जाताः कवीनां संबोधनालापाः ॥ २० ॥ कुलकम् ॥

॥ १२०५ ॥ १२०६ ॥ अनन्तरं सर्वत्रैवं निघृष्यमाणकाञ्चनाभरणरज.पिशङ्गे जाते सुवर्णमय इव तस्मिन्नाशंसिते दिवसे

सक्रान्ताशेषसरस्वतीत्वेनेव श्रोतृजनमुखारविन्दान्निःसृतसमस्तवचनेनेव कथिते कथयितु प्रारब्धे तस्मिन् कथयितुम् उपक्रान्ते नृपसुचरिते । माहिरे तम्मीति पाठे शासनशीले कथनशीले तस्मिन् वाक्पतिराजे सति । जातः क्षणेन मूकीकृत इव कौतूहलाल्लोकः श्रोतृजनः ॥

॥ १२०७ ॥ विश्रम्भम् अगत्वेव विषममहिलास्वभावदोषेण बाह्य एव वैरिश्रियो येन प्रणयिभ्यो दत्ताः ॥

जस्स विअयाहिसेए विवक्ख-देवीहिँ णव-णिओआहिँ ।
पीआइँ तक्खणुप्पिअ-चमरन्तरियाइँ अंसूइं १२०८
तस्स इमं पावणमहिणवं च चित्तं च विम्हय-करं च ।
सीसइ चरिअमचरमं णराहिवइणो णिसामेह ॥ १२०९ ॥

कइ-राय-लञ्छणस्स वप्पइ-रायस्स गउड-वहे
गाहावीढं समत्तं ॥

॥ १२०८ ॥ यस्य विजयाभिषेके विपक्षवन्दीभिर्नवनियो-
गाभिः। पीतानि रुद्धानि आच्छादितानि तत्क्षणार्पितचमरान्तरितानि
३ कृत्वा चमरैर्व्यवधाय[1] दर्शनभयात् अश्रूणि

॥ १२०९ ॥ तस्यैतत्पावनं पवित्रीकरणम् अभिनवम् अन्यत्रादृष्टं
च [2]विस्मयकरं [च] अत एव चित्रं च आश्चर्यकारि तथा [3]विचित्रं शि-
३ ष्यते चरितम् अचरमम् अपाश्चात्यम् अग्रणीत्वेन व्यवस्थितम् ।
प्रधानमिति यावत् । नराधिपतेः तन्निशमयत आकर्णयत[3] ॥

[4]जालन्धरीयभट्टश्रीमदुपेन्द्रहरिपालविरचितगौडवधसारटीका [5]परिपूर्णा ॥

---

1 MH °व्यवधानदर्शन° for व्यवधाय दर्शन°. [2] So MH. This chhâyâ refers to J's reading. See *Various Readings*. [3] MH. आकर्णयताम्.
[4] So MH [5] MH. inserts here the following lines:—

चित्रं चेतो मदीयं स्खलमिरिलमुत प्रासचैतन्यभावं
विश्रान्तिं नास्य यस्मात्कचिदिह भुवनेप्यत्र नान्यस्य जन्तोः ॥
सौहार्दं या ममैवाधिरचितसुशिरोनामदृत्तावधाने
श्रीकान्ते मादृशेषु प्रविरलमनसि श्रोत्तमाते च येनः ॥ १ ॥

## Appendix A

*Stanzas found in some of the MSS. and not inserted in this Edition*

| | In J. after Stanza | In K. after Stanza | In P. after Stanza |
|---|---|---|---|
| a सो जयइ गोव-भावे जो विमलिय-गूढ-नाहि नलिणाहि ।<br>नीसरमाणेहिंचेय परिमलं वहइ सासिएहिं ॥ | 12 | 12 | 12 |
| b केऊरोरअ सुङ्कार-संकुले बाण-भुअ-वण-च्छेया ।<br>सो जयइ सनीसासेव्व वहइ जो अमरिसा बाहू ॥ | 35 | 33 | 41 |
| c उद्धं अन्धय-रिउणो नयणं पज्जलिय-तारयं नमह ।<br>उक्कारिसिय-पडिचक्कंव चक्किणो बाण-भङ्गम्मि । | b | b | b |

[a सो जयति गोपभावे या विमर्दितगूढनाभिनलिनात् निःसरद्भिरेव परिमलं वहति श्वसितैः ॥ गोपभावे नाभिनलिन गूढं सदपि यस्य परिमलयुक्तश्वसितानां कारणमभूत् स गोपः कृष्णो जयतीत्यर्थः ॥ ]

[b केयूरोरगफूत्कारसंकुलौ बाणभुजवनच्छेदात् सो जयति सनिःश्वासाविव वहति यः अमर्षाद् बाहू ॥ शिवप्रियस्य बाणासुरस्य भुजा विष्णुना छिन्नाः । तेन जातामर्षी शिवस्य बाहू निःश्वस्त इवेति । वस्तुतस्तु केयूरार्थं धृता उरगा निःश्वसन्तीति तात्पर्यम् ॥ ]

[c ऊर्ध्वम् अन्धकरिपोर्नयनं प्रज्वलिततारकं नमत उत्कर्षितप्रतिचक्रमिव चक्रिणो बाणभङ्गे ॥ अन्धको नामासुर किल शिवस्य शत्रुः । बाणासुरस्तनश्चक्रिणो विष्णोः प्रतिचक्रमिव यस्य नयनं प्रज्वलिततारकं भवानि तं शिवं नमतेत्यर्थः ॥ ]

a P. विसास्स b P. कयूरारव°, P °सुवर्ण° P. ष्षू for बाहू.

| | In De after Stanza | In K after Stanza | In P after Stanza |
|---|---|---|---|
| *d.* जामिय-सिहण्डस्सवि विसहरेण हत्थो पिणाइणो जयइ ।<br>लम्बि जडा-भास-फणा-रयण-मऊहेसु घोलन्तो ॥ | *c* | *c* | 35 |
| *e* कुवियाइ चलण-पणओ रहसुक्खित्त-मउली हरो जयइ ।<br>सीस-ट्ठिय-बम्भ-कवाल-फंस-सङ्काइव उमाइ ॥ | *d* | *d* | *d* |
| *f.* तं पणमह अज्जवि वहइ तिवहया-वीइ-भङ्ग-कुडिलाइं ।<br>जस्स जडा वन्ध-निवेस-विसमियाइंव सलिलाइं ॥ | *e* | *e* | *e* |

[d. यमितशिखण्डस्यापि विषधरेण हस्तः पिनाकिनो जयति लम्बिजटाभासफणारत्नमयूखेषु घूर्णमानः ॥ शिवस्य शिखण्डे सर्पेण बद्धे सत्यपि सर्पस्य या लम्बमाना फणा तया जटाया लम्बित्वं भासते । तेन भासेन शिखण्डे घूर्णमानो हस्तः सर्पस्य फणामयूखेषु चरतीत्यर्थः ॥]

[e. कुपितायाश्चरणप्रणतो रभसोत्क्षिप्तमौलिर्हरो जयति शिरःस्थितब्रह्मकपालस्पर्शशङ्काया इव उमायाः ॥ कुपितया पार्वत्या क्रोधेन उत्क्षिप्तमौलिः शिव इति वृत्तम् । शिवमौलौ स्थितस्य ब्रह्मकपालस्य स्पर्शो मा भूदिति लत्तया प्रहृतं शिर इति उत्प्रेक्षा ॥ ]

[f. तं प्रणमत अद्यापि वहति त्रिपथगावीचिभङ्गकुटिलानि यस्य जटाबन्धनिवेशविषमितानीव सलिलानि ॥ गङ्गायाः सलिलानि वीचिभङ्गकुटिलत्वाद् विषमाणीति स्वभावः । तत्र तस्याः शिवजटोद्भूतत्वात् जटानिवेशस्य विषमत्वाद् अद्यापि जलानां विषमत्वमिति उत्प्रेक्षा ॥]

---

d P. °जडाभाय°. e. P. कुविषाए. P. उमाइ. f P. °वीइभंगि°.

| | In Bo after Stanza | In K after Stanza | In P after Stanza |
| --- | --- | --- | --- |
| *g*. सुयण-सहावेवि गओ जडम्मि कत्तो गुणो समुल्लसइ ।<br>रविणोवि जलम्मि ठियं पडिबिम्बमहोमुहं फुरइ ॥ | 75 | 75 | 76 |
| *h*. तुच्छा-सुहेण विज्जाएँ मच्छराडम्बरो खल-यणस्स ।<br>दुक्खेण सज्जणाणं हियउक्कम्पा समिज्जन्ति ॥ | 0 | 0 | 81 |
| *i*. सुकइ — — — — न्धेसु जाण परिसंठियाइँ णामाइं ।<br>णियय-णिबन्धेसु य ताण णणु समत्तं च कायद्धं ॥ | 0 | 0 | *h* |

[g. सुजनस्वभावेपि गतो जडे कुतो गुणः समुल्लसति । रवेरपि जले स्थितं प्रतिबिम्बम् अधोमुखं स्फुरति ॥ सुजनस्वभावेपि जडे गुणः सम्यक्त्वेन नोत्स्फुरति । यथा जले पतितं सूर्यबिम्बम् ऊर्ध्वमुखं नोत्स्फुरति किं तु अधोमुखमेवेति अर्थान्तरन्यासः ॥]

[h. तुच्छसुखेन विद्याया मत्सराडम्बरः खलजनस्य । दुःखेन सज्जनानां हृदयोत्कम्पाः शाम्यन्ते ॥ विदुषां मत्सरेण विद्याया आडम्बरः विद्याया मत्सराडम्बरः । स खलु खलजने तुच्छज्ञानेन अर्थात् अल्पया विद्यया शाम्यति तृप्तो भवति । सज्जनानां हृदयकम्पास्तु । विद्यार्जने उत्कटाः परिश्रमा इति यावत् । संपूर्णया विद्यया विना न शाम्यन्तीत्यर्थः ॥]

[i. सुकवि — — — — येषां परिसंस्थितानि नामानि निजकनिबन्धेषु च तेषां ननु समाप्तं च कायार्धम् ॥]

*g* P. समुन्नमइ for समुल्लसइ.

| | In Dea. e Stanza | In K al er Stanza | In pa er Stanza |
|---|---|---|---|
| j पाणमइआउ जाणं धरन्ति कव्वेसु वन्नमाला[ओ] ।<br>— — भावा जीयस्स ते जियन्तिच्चिय मयावि ॥ | 0 | 0 | i |
| l किं रतुसमारुढ-गुणाण जीवियं लद्ध-पिसुण-भावंव्व ।<br>तेहिं पसंसिज्जन्तोवि जं गुणी णेअ पत्तिइयइ [sio] ॥ | 0 | 0 | j |
| l सा जयइ मई गुरुआगमण-पडि[sio]वोह-कारणा — — ।<br>पडिवोह संकमा जा सयव पडिवज्जइ सरूव ॥ | 0 | 0 | l |
| m जो अप्पणाणसार पेच्छइ अन्नस्स सोवि पीहेइ ।<br>पडिवज्जइ जोवि पराउ सोवि णि — — — — ओत्तेया ॥ | 0 | 0 | l |
| n गुणिणा अहमाअ ठियाण णवरताण च दोच्चिय विसेसा।<br>सोवि अहमोच्चिय कओ मज्झिम-संभावणा जस्स ॥ | 0 | 0 | n |

[j प्राणमय्यो येषा म्रियन्ते काव्येषु वर्णमाला — — — भावात् जीवस्य ते जीवन्त्येव मृता अपि ॥ ]

[k कि — — समारूढगुणाना जीवित लब्धपिशुनत्वेमिव तैः प्रशम्यमानोपि यत् गुणी नैव प्रत्येति(?) ॥ ]

[l सा जयति मतिर्गुरुका गमनप्रतिबोधकारणा — — प्रतिबोधसक्रमाद् या स्वयमिव प्रतिपद्यते स्वरूपम् ॥ ]

[m य आत्मन सार प्रेक्षते अन्यस्य सोपि द्रक्ष्यति प्रतिपद्यते योपि परस्मात् सोपि — — — — ॥]

[n गुणिना (?गुणिनः) अधमाश्च स्थिताना केवल तेषा च द्वावेव विशेषौ । सोपि अधम एव कृत मध्यमसभावना यस्य ॥]

| | In Da after Stanza | In K after Stanza | In P after Stanza |
|---|---|---|---|
| *o.* जड-वुद्धीन पहुप्पइ मइलो गुण-निग्गमो न मणुयाण ।<br>नीलं न नहं सा णायणस्स तेयस्स विणिवित्ती ॥ | 8! | 0 | 0 |
| *p.* जे सुण्ण इव वहुसो कहिंपि दीसन्त-विरल-गुण-सारा ।<br>दर-वासिय-पुराआरेहिँ तेहिँ किं वा निवन्धेहिं ॥ | 92 | 9. | 92 |
| *q.* णिम्माया तेच्चिय नवर कव्व-कित्तीओ जाण लोयस्स ।<br>कण्णे विसन्ति हियए वसन्ति पसरन्ति य मुहम्मि ॥ | *p* | *p* | *p* |
| *r.* दोच्चिय णवरं हियए लग्गन्ति जहा-निवेस-रमणिज्जा ।<br>रमणीओ वल्लहाणं महा-कईणं च भणिईओ ॥ | *q* | *q* | *q* |

[o जडवुद्धीना प्रभवति मलिनो गुणनिर्गमः न मनुजानाम् । नीलं न नभः । सा नायनस्य नयनसंवन्धिनस्तेजसः विनिवृत्तिः ॥ गुणिमनुष्याणां गुणेषु यद् मालिन्यं जडवुद्धयः पश्यन्ति तद् एतेषां स्वकीयमेव न पुनर्गुणिगुणानाम् । यथा नभसो नीलिमा द्रष्टुर्नेत्रस्य तेजसो विनिवृत्तेः परावृत्तेर्जायते न तु नभःसंवन्धीति भावः ॥ ]

[p. ये शून्या इव वहुशः कुत्रापि दृश्यमानविरलगुणसाराः ईषदुषितपुराकारैस्तैः किं वा निवन्धैः ॥ ये निवन्धा वहुशो गुणहीनाः सन्तः कचिद्गुणयुक्ताः सन्ति ते वहुशो निवासहीनानि ईषन्निवासयुक्तानि नगराणीव भवन्तीति भावः ॥

[q. निर्मातारः शिक्षितास्त एव केवलम् काव्यकीर्तयो येषां लोकस्य कर्णे विशन्ति हृदये वसन्ति प्रसरन्ति च मुखे ॥ येषां काव्यकीर्तिर्लोकः शृणोति हृदये धारयति मुखेन च प्रसारयति त एव कवय इति भावः॥ ]

[r. द्वे एव केवलं हृदये लगतः यथानिवेशरमणीये । रमण्यो वल्लभानां महाकवीनां च भणितयः ॥ द्वे एव हृदयंगमे भवतः यदि

p. P. दरवासिनपुरागरेहिं. q. P. णिम्मावा for णिम्माया. r. P. णवरं for णवर.

